दृष्ट्वातदादेवाश्चक्रुस्तस्यस्तुतिंपराम् ५० वीक्ष्यकृष्णंतदादेवाब्रह्माद्याऋषिभिःसह स्वधामानिययुःसर्वेहर्षिताःप्रेमविह्वलाः
५१ इतिश्रीमद्गर्गाचार्यसंहितायांगोलोकखंडेनारदबहुलाश्वसंवादेश्रीनन्दमहोत्सववर्णनंनामद्वादशोऽध्यायः १२ –
श्रीनारदउवाच शौर्यनामयपृष्टार्थंकरंदातुंनृपस्यच पुत्रोत्सवंकथयितुंनन्देश्रीमथुरांगते १ कंसेनप्रेषितादुष्टापूतनाबालका-
रिणी पुरेषुग्रामघोषेषुचरन्तीघर्घरस्वना २ अथगोकुलमासाद्यगोपगोपीगणाकुलम् रूपंदधारसादिव्यंवपुःषोडशवार्षिक
म् ३ नकेपिरुरुधुर्देवाःसुन्दरींतांचगोपिकाः शचींवाणींरमांरंभांरतिंचक्षिपतीमिव ४ रोहिण्यांचयशोदायांधर्षितायांस्फुर-
त्कुचा अंकमादायतंबालंलालयन्तीपुनःपुनः ५ ददौशिशोर्महाघोराकालकूटावृतस्तनम् प्राणैःसार्द्धंपपौदुग्धंकटुंरोषावृतोह
रिः ६ मुंचमुंचवदन्तीत्थंधावतीपीडितस्तना नीत्वाबहिर्गतातंवैगतमायाबभूवह ७ पतन्नेत्रास्वेतगात्रारुदन्तीपतिताभुवि न
नादतेनब्रह्मांडंसप्तलोकैर्बिलैःसह ८ चचालवसुधाद्वीपैस्तदद्भुतमिवाभवत् षट्क्रोशंसाहृढान्दीर्घान्वृक्षान्पृष्ठतलेगतान् ९
चूर्णीचकारवपुषावज्रांगेणनृपेश्वर वदन्तस्तेगोपगणावीक्ष्यघोरंवपुर्महत् १० अस्यारंगुलिगोबालोनजीवतिकदाचन
तस्याउरसिसानन्दंक्रीडंतंस्फस्मितंशिशुम् ११ दुग्धंपीत्वाजृंभमाणंतन्दृष्ट्वाजगृहुःस्त्रियः यशोदायाचरोहिण्यानिधायो
रसिविस्मिताः १२ सर्वतोबालकंनीत्वारक्षांचक्रुर्विधानतः कालिन्दीपुण्यमृत्तोयैर्गोपुच्छभ्रमणादिभिः १३ गोमूत्रगो
रजोभिश्चस्नापयित्वात्विदंजगुः १४ श्रीगोप्यऊचुः श्रीकृष्णस्तेशिरःपातुवैकुंठःकंठमेवहि श्वेतद्वीपपतिःकर्णौना-
सिकांयज्ञरूपधृक् १५ नृसिंहोनेत्रयुग्मंचजिह्वांदशरथात्मजः अधरावतान्तेतुनरनारायणावृषी १६ कपोलौपातु
तेसाक्षात्सनकाद्याःकलाहरेः भालन्तेश्वेतवाराहोनारदोभूतलेवतु १७ चिबुकंकपिलःपातुदत्तात्रेयउरोवतु स्कं-
धौद्वावृषभःपातुकरौमत्स्यःप्रपातुते १८ दोर्दंडंसततंरक्षेत्पृथुःपृथुलविक्रमः उदरंकमठःपातुनाभिंधन्वन्तरश्चते १९-

17

ष्याभूयादतः परम् २९ हेरोहिणिमहाबुद्धेपूजनंतुव्रजौकसाम् आगतानांसत्कुलानांयथेष्टंहीप्सितंकुरु ३० श्रीनारदउवाच
रोहिणीराजकन्यापितत्करौदानशीलिनो तत्रापिनोदितादानेद्दावतिमहामनाः ३१ गौरवर्णादिव्यवासारत्नाभरणभूषिता
व्यचरद्रोहिणीसाक्षात्पूजयन्तीव्रजौकसाम् ३२ परिपूर्णतमेसाक्षाच्छ्रीकृष्णेव्रजमागते नदत्सुनरतूर्येषुजयध्वनिरभून्म
हान् ३३ दधिक्षीरघृतैर्गोपागोप्योहैयंगवैर्नवैः सिषिचुर्हर्षितास्तत्रजगुरुच्चैःपरस्परम् ३४ बहिरन्तःपुरेजातेसर्वतोदधि-
कर्दमे वृद्धाश्चस्थूलदेहाश्चपेतुर्हास्यंकृतंपरैः ३५ सूताःपौराणिकाःप्रोक्तामागधावंशशंसकाः वंदिनस्त्वमलप्रज्ञाःप्र
स्तावसदृशोक्तयः ३६ तेभ्योनन्दोमहाराजसहस्रगाःपृथक्पृथक् वासोलंकाररत्नानिहयेभानखिलान्ददौ ३७ बन्दि
भ्योमागधेभ्यश्चसर्वेभ्योबहुलंधनम् ववर्षधनवद्भूपोनन्दराजोव्रजेश्वरः ३८ निधिःसिद्धिश्चवृद्धिश्चभुक्तिर्मुक्तिर्गृहेगृहे वी
थ्यांवीथ्यांलुठन्तीवतदिच्छाकस्यचिन्नहि ३९ सनत्कुमारकपिलशुकव्यासादिभिःसह हंसदत्तपुलस्त्याद्यैर्मयाब्रह्माजगा
म ह ४० हंसारूढोहेमवर्णोमुकुटीकुंडलीस्फुरन् चतुर्मुखोवेदकर्त्ताद्योतयन्मंडलन्दिशाम् ४१ तथातमनुभूताढ्योवृषारू
ढोमहेश्वरः रथारूढोरविःसाक्षाद्गजारूढःपुरन्दरः ४२ वायुश्चखंजनारूढोयमोमहिषवाहनः धनदःपुष्पकारूढोमृगारूढः
क्षपेश्वरः ४३ अजारूढोवीतिहोत्रोवरुणोमकरस्थितः मयूरस्थःकार्तिकेयोभारतीहंसवाहिनी ४४ लक्ष्मीचगरुडा-
रूढादुर्गाख्यासिंहवाहिनी गोरूपधारिणीपृथ्वीविमानस्थासमाययौ ४५ दोलारूढादिव्यवर्णामुख्याःषोडशमातृकाः-
षष्ठीचशिबिकारूढाखड्गैश्वर्यविधारिणी ४६ मंगलोवानरारूढोभासारूढोबुधःस्मृतः गीष्पतिःकृष्णसारस्थःशुक्रोगवय
वाहनः ४७ शनिश्चमकरारूढउष्ट्रस्थःसिंहिकासुतः कोटिबालार्कसंकाशश्चाययौनन्दमन्दिरम् ४८ कोलाहलसमायुक्तं
गोपगोपीगणाकुलम् नन्दमन्दिरमभ्येत्यक्षणंस्थित्वाययुःसुराः ४९ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंबलरूपिणम् नत्वा-

श्रीबहुलाश्वउवाच धन्योहंचकृतार्थोहंभवताभूरिकर्मणा संगोभगवद्दीपानांदुर्लभोदुर्घटोस्तिहि ५ श्रीकृष्णस्त्वर्भकःसा
क्षादद्भुतोभक्तवत्सलः अग्रेचकारकिंचित्रंचरित्रंवदमेमुने ६ श्रीनारदउवाच साधुपृष्टंत्वयाराजन्भवताकृष्णधर्मिणा-
संगमःखलुसाधूनांसर्वेषांवितनोतिशम् ७ एकदाकृष्णजन्मर्क्षेयशोदानन्दगेहिनी गोपीगोपान्समाहूयमंगलंचाकरोद्द्विजैः
८ रक्तांबरकनकभूषणभूषितांगंबालंप्रगृह्यकलितांजनपद्मनेत्रम् श्यामंस्फुरद्धुरिनखावृतचन्द्रहारंदेवान्प्रणम्यसुधनंप्रद-
दौद्विजेभ्यः ९ प्रेंखेनिधायनिजमात्मजमाशुगोपीसंपूज्यमंगलदिनेप्रतिगोपिकास्ताः नैवाशृणोत्स्फुरुदितस्यसुतस्यशब्दं
गोपेषुमंगलगृहेषुगतागतेषु १० तत्रैवकंसखलनोदितउत्कचाख्योदैत्यःप्रभंजनतनुःशकटंयएत्य बालस्यमूर्ध्नियदिपातयि
तुंप्रवृत्तःकृष्णोपितंकिलतताडतुरोदनेन ११ चूर्णंगतेथशकटेपतितेचदैत्येत्यक्त्वाप्रभंजनतनुंविमलोबभूव नत्वाहरिंशत-
हयेनरथेनयुक्तोगोलोकधामनिजलोकमलंजगाम १२ नन्दादयोव्रजजनाव्रजकोपिकाश्चसर्वेसमेत्ययुगपत्पृथुकांस्तदाहुः ए
ष स्वयंचपतितःशकटःकथंहिजानीथहेव्रजसुताःसुगताश्चयूयम् १३ बालाऊचुः प्रेंखस्थोयंक्षिपन्पादौरुदन्दुग्धार्थमेवहि-
तताडपादंशकटेतेनेदंसकटंत्वनु १४ अश्रद्धांनचक्रुर्बालोक्तेगोपागोप्यश्चविस्मिताः त्रैमासिकःक्वबालोयंक्वचैतद्भाभूत्वनः १५
बालमंकेसंगृहीत्वायशोदागृहशंकिता कारयामासविधिवद्यज्ञंविप्रैःसुतार्पितैः १६ श्रीबहुलाश्वउवाच कोयंपूर्वन्तुकुश-
लीदैत्यउत्कचनामभाक् अहोकृष्णपदस्पर्शाद्गतोमोक्षंमहामुने १७ श्रीनारदउवाच हिरण्याक्षसुतोदैत्यउत्कचोना-
ममैथिल लोमशस्याश्रमेगच्छन्वृक्षांश्चूर्णंचिकारह १८ तन्दृष्ट्वास्थूलदेहाढ्यमुत्कचाख्यंमहाबलम् शशापरोषयुग्विप्रो-
विदेहोभवदुर्मते १९ सर्प्पकंचुकवद्देहंपतन्कर्मविपाकतः सद्यस्तच्चरणोपान्तेपतित्वाप्राहदैत्यराट् २० उत्कचउवाच
हेमुनेहेकृपासिन्धोकृपांकुरुममोपरि तेप्रभावन्नजानामिदेहंमेदेहिहेप्रभो २१ श्रीनारदउवाच तदाप्रसन्नःसमुनिर्दृष्ट्वनय



18

मोहिनीगुह्यदेशंचकटिन्तेवामनोवतु पृष्ठिंपरशुरामश्चतवोरूबादरायणः २० बलोजानुद्वयंपातुजंघेबुद्धःप्रपातुते पादौपा
तुसगुल्फौचकल्किर्धर्मपतिःप्रभुः २१ सर्वरक्षाकरन्दिव्यंश्रीकृष्णकवचंपरम् इदंभगवतादत्तंब्रह्मणेनाभिपंकजे २२ -
ब्रह्मणाशंभवेदत्तंशंभुर्दुर्वाससेददौ दुर्वासाःश्रीयशोमत्यैप्रादाच्छ्रीनन्दमन्दिरे २३ अनेनरक्षांकृत्वास्यगोपीभिःश्रीयशोम
ती पाययित्वास्तनन्दानंविप्रेभ्यःप्रददौमहत् २४ तदानन्दादयोगोपा आगतामथुरापुरात् दृष्ट्वाघोरांपूतनाख्यांबभूवुर्भयवि
ह्वलाः २५ छित्वाकुठारैस्तद्देहंगोपाःश्रीयमुनातटे अनेकाश्चचिताःकृत्वादाहयामासुरेवताम् २६ एलालवंगश्रीखंडतग-
रागरुगंधिभृत् धूमोदग्धस्यदेहस्यपवित्रस्यसमुत्थितः २७ अहोकृष्णमृतंकवाव्रजामशरणंत्विह पूतनायैमोक्षगतिंद-
दौपतितपावनः २८ श्रीबहुलाश्वउवाच केयंवाराक्षसीपूर्वंपूतनाबालघातिनी विषस्तनादुष्टभावापरमोक्षंकथंगता २९
श्रीनारदउवाच बलियज्ञेवामनस्यदृष्ट्वारूपमतःपरम् बलिकन्यारत्नमालापुत्रस्नेहंचकारह ३० एतादृशोयदिभवेद्बाल
मेकंशुचिस्मितम् पाययामिस्तनन्तेनप्रसन्नंमेमनस्तदा ३१ बलेःपरमभक्तस्यसुतायैवामनोहरिः मनोरथस्तुतेभूयान्मन
स्यपिवरंददौ ३२ साभवद्द्वापरान्तेवैपूतनानामविश्रुता श्रीकृष्णस्पर्शसंभूतापरंप्राप्तमनोरथा ३३ यःपूतनामोक्षमिमंशृ
णोतिकृष्णस्यदेवस्यपरात्परस्य भक्तिर्भवेत्प्रेमयुतापितस्यत्रिवर्गसिद्धिःकिमुमैथिलेन्द्र ३४ इतिश्रीमद्गर्गाचार्यसंहि-
तायांगोलोकखंडेनारदबहुलाश्वसंवादेपूतनामोक्षोनामत्रयोदशोऽध्यायः १३ श्रीगर्गउवाच इत्येवंकथितंदिव्यंश्री-
कृष्णचरितंवरम् यःशृणोतिनरोभक्त्यासकृतार्थोनसंशयः १ श्रीशौनकउवाच स्फुधारखंडपरमिदंश्रीकृष्णचरितंशुभ
म् श्रुत्वात्वन्मुखतःसाक्षात्कृतार्थाःस्मोवयंमुने २ श्रीकृष्णभक्तःशान्तात्माबहुलाश्वःसतांवरः अतोमुनिंकिंपप्रच्छत-
न्मेब्रूहितपोधन ३ श्रीगर्गउवाच अथराजामैथिलेन्द्रोहर्षितःप्रेमविह्वलः नारदंप्राहधर्मात्मापरिपूर्णतमंस्मरन् ४ -

अतीवमोदंसंप्रापुर्वदन्तःकुशलंजनैः ४२ यशोदाबालकंनीत्वापाययित्वास्तनंमुहुः आघ्रायोरसिवस्त्रेणरोहिणींप्राह-
मोहिता ४३ श्रीयशोदोवाच एकोदैवेनदत्तोयंनपुत्राबहवश्चमे तस्यापिबहवोरिष्टाआगच्छन्तःक्षणेनवै ४४ अ-
द्यमृत्युमुखान्मुक्तोभविष्यत्किमतःपरम् किंकरोमिक्वगच्छामिकुत्रवासोभवेदतः ४५ धनन्देहोगृहं सोधोरत्नानिविवि
धानिच सर्वेषान्तुह्यवश्यंवैभूयान्मेकुशलीशिशुः ४६ हरेश्चान्दानमिष्टंपूर्वन्देवालयंशतम् करिष्यामितदाबालोरिष्टेभ्यो
विजयीयदा ४७ एकबालेनमेसौख्यमन्धयष्टिरिवप्रिये बालंनीत्वागमिष्यामिदेशेरोहिणिनिर्भये ४८ श्रीनारदउवाच
तदैवविप्राविद्वांसआगतानन्दमन्दिरम् यशोदयाचनन्देनपूजिताआसनस्थिताः ४९ श्रीब्राह्मणाऊचुः माशोचंकुरुहे
नन्दहेयशोदेव्रजेश्वरि करिष्यामःशिशोरक्षांचिरजीवीभवेदयम् ५० श्रीनारदउवाच इत्युक्त्वाद्विजमुख्यास्तेकुशाग्रैर्न
वपल्लवैः पवित्रकलशैस्तोयैर्ऋग्यजुःसामजैःस्तवैः ५१ परैःस्वस्त्ययनैर्यज्ञंकारयित्वाविधानतः अग्निंसंपूज्यविधिव
द्रक्षांविदधिरेशिशोः ५२ ब्राह्मणाऊचुः दामोदरःपातुपादौजानुनीविष्टरश्रवाः ऊरूपातुहरिर्नाभिंपरिपूर्णतमःस्व
यम् ५३ कटिंराधापतिःपातुपीतवासास्तवोदरम् हृदयंपद्मनाभश्चभुजौगोवर्द्धनोद्धरः ५४ मुखंचमथुरानाथोद्वारके
शःशिरोवतु पृष्ठिंपात्वसुरध्वंसीसर्वतोभगवान्स्वयम् ५५ श्लोकत्रयमिदंस्तोत्रंयःपठेन्मानवःसदा महासौख्यभवेत्त
स्यनभयंविद्यतेक्कचित् ५६ श्रीनारदउवाच नन्दस्तेभ्योगवांलक्षंसुवर्णंदशलक्षकम् सहस्रंनवरत्नानांवस्त्रलक्षंददौ
परम् ५७ गतेषुद्विजमुख्येषुनन्दोगोपानियम्यच भाजयामाससंपूज्यवस्त्रैर्भूषैर्मनोहरैः ५८ श्रीबहुलाश्वउवाच-
तृणावर्तःपूर्वकालेकोयंसुकृतकृन्नरः परिपूर्णतमेसाक्षाच्छ्रीकृष्णेलीनतांगतः ५९ श्रीनारदउवाच पांडुदेशोद्भवो-
राजासहस्राक्षःप्रतापवान् हरिभक्तोधर्मनिष्ठोयज्ञकृद्दानतत्परः ६० रेवातटेमहादिव्येलतावेत्रसमाकुले नारीणांचसह-

19

१८

शतंविधेः सतांरोषोपिवरदोवरोमोक्षार्थदःकिमु २२ श्रीलोमशउवाच यातदेहस्तुनेभूयाद्व्यतीतेचाक्षुषान्तरे वैवस्वतान्तरे-
मुक्तिर्भवितात्वयदाहरेः २३ श्रीनारदउवाच तस्मादुत्कचदैत्यस्तुमुक्तोलोमशतेजसा सद्योनमोस्तुयेनूनंसमर्थावरशाप-
योः २४ उत्संगेक्रीडितंबालंलालयन्त्येकदानृप गिरिभारंनसेहेतंवोढुंश्रीनन्दगेहिनी २५ अहोगिरिसमोबालःकथंस्यादितिवि-
स्मिता भूमौनिधायतंसद्योनेदंकस्मैजगादह २६ कंसप्रणोदितोदैत्यस्तृणावर्तोमहाबलः जहारबालंक्रीडंतंवातावर्तेनसु
न्दरम् २७ रजोंधकारोभूत्तत्रघोरशब्दश्चगोकुले रजस्वलानिचक्षूंषिबभूवुर्घटिकाद्वयम् २८ ततोयशोदानापश्यत्पुत्रंतं
मंदिराजिरे मोहितारुदतीघोरान्पश्यन्तीगृहशेखरान् २९ अदृष्टेचयदापुत्रेपतिताभुविमूर्छिता उच्चैरुरोदकरुणंमृतवत्सा
यथाहिगौः ३० रुरुदुश्चतदागोप्यःप्रेमस्नेहसमाकुलाः अश्रुमुख्योनन्दसूनुंपश्यन्त्यस्ताइतस्ततः ३१ तृणावर्तोनिभःप्रा
प्त ऊर्ध्वंवैलक्षयोजनम् स्कन्धेस्फुमेरुवद्बालंमन्यमानःप्रपीडितः ३२ अथकृष्णंपातयितुंदैत्यस्तत्रसमुद्यतः गलंजग्रा
हतस्यापिपरिपूर्णतमःस्वयम् ३३ मुंचमुंचेतिगदितेदैत्येकृष्णोऽद्भुतोर्भकः गलग्राहेणमहताव्यस्कन्दैत्यंचकारह ३४-
तज्ज्योतिःश्रीघनश्यामेलीनोभूद्दामिनीयथा दैत्योंबरान्निपतितःशिलायांशिशुनासह ३५ विशीर्णावयवस्यापिपतितस्य
स्वनेनवै विनेदुश्चदिशःसर्वाःकंपितंभूमिमंडलम् ३६ तत्पृष्ठिस्थंशिशुंतूर्णंरुदन्त्योगोपिकास्ततः ददृशुर्युगपत्सर्वानी-
त्वामात्रेददुर्जगुः ३७ गोप्यऊचुः नयोग्यासियशोदेत्वंबालंलालयितुमनाक् नघृणातेक्वचिद्दृष्टाकुद्धासिकथितेन
वै ३८ प्रासेंधकारेस्वारोहात्कोपिबालंजहातिहि त्वयानिर्घृणयाभूमौधृतोबालोमहाभये ३९ श्रीयशोदोवाच नजाना
मिकथंबालेभारोभूतोगिरीन्द्रवत् तस्मान्मयाकृतोभूमौचक्रवातेमहाभये ४० गोप्यऊचुः मामृषावदकल्याणिहेय-
शोदेगतव्यथे अयन्दुग्धमुखोबालोमधुःकुसुमतूलवत् ४१ श्रीनारदउवाच तदागोप्योथगोपाश्चनन्दाद्याश्चागतेशिशौ

श्रीब्रह्मोवाच युवाभ्यांयाचितंयन्मेदुर्घटंदुर्लभंवरम् तथापिभूयात्सफलंयुवयोरन्यजन्मनि १३ श्रीनारदउवाच -
द्रोणोनन्दोभवद्भूमौयशोदासाधरास्मृता कृष्णोब्रह्मवचः कर्तुंप्राप्तोघोषंपितुःपुरात् १४ सुधाखंडात्परमिष्टंश्रीकृष्ण
चरितंशुभम् गन्धमादनशृंगेवैनारायणमुखाच्छ्रुतम् १५ कृपयाचकृतार्थोहंनरनारायणस्यच मयातुभ्यंचकथितंकिं
भूयःश्रोतुमिच्छसि १६ श्रीबहुलाश्वउवाच नन्दगेहेहरिःसाक्षाच्छिशुरूपःसनातनः किंचकारबलेनापितन्मेब्रूहिम
हामुने १७ श्रीनारदउवाच एकदाशिष्यसहितोगर्गाचार्योमहामुनिः शौरिणाप्रेरितःसाक्षादाययौनन्दमन्दिरम् १८
नन्दःसंपूज्यविधिवत्पाद्याद्यैर्मुनिसत्तमम् ततःप्रदक्षिणीकृत्यसाष्टांगंप्रणनामह १९ श्रीनन्दउवाच अद्यनःपितरो
देवाःसन्तुष्टाअग्नयश्चनः पवित्रंमन्दिरंजातंयुष्मच्चरणरेणुभिः २० मत्पुत्रनामकरणंकुरुद्विजमहामुने पुण्येस्तीर्थे-
श्चदुःप्राप्यंभवदागमनंप्रभो २१ श्रीगर्गउवाच तेपुत्रनामकरणंकरिष्यामिनसंशयः पूर्ववार्तांवदिष्यामिगच्छनन्द
रहस्थलम् २२ श्रीनारदउवाच उत्थाप्यगर्गोनन्देनबालाभ्यांचयशोदया एकान्तेगोव्रजेगत्वातयोर्नामचकारह २३-
संपूज्यगणनाथादीन्ग्रहान्संशोध्ययत्नतः नन्दंप्राहप्रसन्नांगोगर्गाचार्योमहामुनिः २४ श्रीगर्गउवाच रोहिणीनन्द-
नस्यास्यनामोच्चारंशृणुष्वच रमन्तेयोगिनोह्यस्मिन्सर्वत्ररमतीतिवा २५ गुणैश्वरमयन्भक्तान्तेनरामंविदुःपरे गर्भसं
कर्षणादस्यसंकर्षणइतिस्मृतः २६ सर्वावशेषाद्यंशेषंबलाधिक्याद्बलंविदुः स्वपुत्रस्यापिनामानिशृणुनन्दयतेह्यतः २७
अद्यप्राणिपवित्राणिजगतांमंगलानिच ककारःकमलाकान्तऋकारोरामइत्यपि २८ षकारःषड्गुणपतिःश्वेतद्वीपनि
वासकृत् णकारोनारसिंहोयमकारोह्यक्षरोग्निभुक् २९ विसर्गौचतथाह्येतौनरनारायणावृषी संप्रलीनाश्चषट्पूर्णा
यस्मिन्शब्देमहामुनौ ३० परिपूर्णतमेसाक्षात्तेनकृष्णःप्रकीर्तितः शुक्लोरक्तस्तथापीतोवर्णोस्यानुयुगंधृतः ३१ द्वा-

स्त्रेणरमयन्विचचारह ६१ दुर्वाससंमुनिंसाक्षादागतंनननामह तदामुनिर्ददौशापंराक्षसोभवदुर्मते ६२ पुनस्तदं
घ्र्योःपतितंनृपेप्रादाद्दूरंमुनिः श्रीकृष्णविग्रहस्पर्शान्मुक्तिस्तेभविनानृप ६३ श्रीनारदउवाच सोपिदुर्वाससःशा
पात्तृणावर्तोभवद्भुवि श्रीकृष्णविग्रहस्पर्शात्परंमोक्षमवापह ६४ इतिश्रीमद्गर्गाचार्यसंहितायांगोलोकखंडे-
नारदबहुलाश्वसंवादेशकटासुरतृणावर्तमोक्षोनामचतुर्दशोऽध्यायः १४ श्रीनारदउवाच प्रेंखेहरित्कनकरत्न
मयेशयानंश्यामशिशुंजन मनोहरमन्दहासम् दृश्यार्तिहारिमपिबिन्दुधरंयशोदास्वांकेचकारधृतकज्जलपद्मनेत्रम्
१ पादंपिबन्तमतिचंचलमद्भुतांगंवक्रैर्विनीलनवकोमलकेशबन्धैः श्रीपत्रकेशरिनखस्फुरदर्द्धचन्द्रंतंलालयन्त्यति
घृणामुदमापगोपी २ बालस्यपीतपयसोनृपजृंभत स्यान्तस्त्वावृत्तंचवदनेसकलंविराजम् मात्रास्फुरेन्द्रियसुरैःप्र
युतंचसर्वंदृष्ट्वापरंभयमवापनिमीलिताक्षी ३ राजन्परस्यपरिपूर्णतमस्यसाक्षात्कृष्णस्यविश्वमखिलंकपटेनमो
ही नष्टस्मृतिपुनरभूत्स्वसुतेघृणार्तांकिंवर्णयामिसुतपोबहुनन्दपत्न्याः ४ श्रीबहुलाश्वउवाच नन्दोयशोदया
सार्द्धंकिंचकारतपोमहत् येनश्रीकृष्णचन्द्रोपिपुत्रीभूतोबभूवह ५ श्रीनारदउवाच अष्टानांवैवसूनांचद्रोणोमु
ख्योधरापतिः अनपत्योविष्णुभक्तोदेवराज्यंचकारह ६ एकदापुत्रकांक्षीचब्रह्मणानोदितोनृप मन्दिराद्गिंतस्त-
सुंधरयाभार्ययासह ७ कन्दमूलफलाहारौतप्तपर्णाशिनौतपः जलभक्षातनस्तौतुर्निर्जलौनिर्जनेस्थितौ ८ वर्षा-
णामर्बुदेयातेतपस्तत्तपतोर्द्वयोः ब्रह्माप्रसन्नस्तावेत्यवरंब्रूहीत्युवाचह ९ वाल्मिकान्निर्गतोद्रोणोधरयाभार्ययास
ह नत्वाविधिंचसंपूज्यहर्षितःप्राहतंप्रभुम् १० श्रीद्रोणउवाच परिपूर्णतमेकृष्णेपुत्रीभूतेजनार्दने भक्तिःस्या
दावयोःस्यातांवदन्तीप्रेमलक्षणा ११ ययांजसातरंतीहदुस्तरंभवसागरम् नान्यवरंवांछितंस्यादावयोस्तपतोर्विधे१२

र्जनंस्कन्दरस्थलम् ५० कालिन्दीजलकल्लोलकोलाहलसमाकुलम् तत्रोपविश्यगोपेशंमुनीन्द्रःप्राहधर्मवित् ५१ श्रीगर्गउ०
हेगोपगुप्तमाख्यानंकथनीयंनचत्वया परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ५२ असंख्यब्रह्मांडपतिर्गोलोके-
शःपरात्परः तस्मात्परोवरोनास्तिजातोनन्दगृहेपतिः ५३ श्रीवृषभानुरुवाच अहोभाग्यमहोभाग्यंनन्दस्यापिमहामु
ने श्रीकृष्णस्यावतारस्यसर्वंत्वंवदकारणम् ५४ श्रीगर्गउवाच भुवोभारावतारायकंसादीनांवधायच ब्रह्मणाप्रार्थि
तःकृष्णोबभूवजगतीतले ५५ श्रीकृष्णपट्टराज्ञीयागोलोकेराधिकाभिधा त्वद्गृहेसापिसंजातात्वंनजानासितांपराम्
५६ श्रीनारदउवाच तदाप्रहर्षितोगोपोवृषभानुःस्कविस्मितः कलावतींसमाहूयतयासार्द्धंविचार्यच ५७ राधाकृष्णा
नुभावंचज्ञात्वागोपवरःपरः आनन्दाश्रुकलामंचन्पुनराहमहामुनिम् ५८ श्रीवृषभानुरुवाच तस्मैदास्यामिहेब्रह्मन्
कन्यांकमललोचनाम् त्वयापंथादर्शितोमेत्वयाकार्योयदूद्वहः ५९ श्रीगर्गउवाच अहन्नकारयिष्यामिविवाहमनयोर्नृ
प तयोर्विवाहोभविताभांडीरेयमुनातटे ६० वृन्दावनसमीपेचनिर्जनेस्कन्दरस्थले परमेष्ठीसमागत्यविवाहंकारयिष्यति
६१ तस्माद्राधांगोपवरविद्ध्यर्धांगींपरस्यच लोकचूडामणिःसाक्षाद्राज्ञांगोलोकमन्दिरम् ६२ यूयंसर्वेपिगोपालागो-
लोकादागताभुवि तथागोपीगणागोपागोलोकेराधिकेच्छया ६३ यद्दर्शनंदुर्लभमेवदुर्घटंदेवैश्चयज्ञैर्नचजन्मभिःकिमु-
सविग्रहांतांतवमन्दिराजिरेलक्षन्तिगुप्तांबहुगोपगोपिकाः ६४ श्रीनारदउवाच तदाचविस्मिताराजन्दंपतीहर्षितापरम्
राधाकृष्णप्रभावंचश्रुत्वाश्रीगर्गमूचतुः ६५ दंपतीऊचतुः राधाशब्दस्यहेब्रह्मन्व्याख्यानंवदतत्वतः त्वत्तोनसंशयच्छे
त्ताकोपिभूमौमहामुने ६६ श्रीगर्गउवाच सामवेदस्यभावार्थंगन्धमादनपर्वते शिष्येनापिमयातत्रनारायणमुखाच्छ्रुत
म् ६७ रमयातुरकारःस्यादाकारस्त्वादिगोपिका धकारोधरयात्वास्यादाकारोविरजानदी ६८ श्रीकृष्णस्यपरस्यापिच

परान्तेकलेरादौबालोयंकृष्णतांगतः तस्मात्कृष्णइतिख्यातोनाम्नायंनन्दनन्दनः ३२ वसवश्चेन्द्रियाणीतितद्देव
श्चित्तएवहि तस्मिन्यश्चेष्टतेसोपिवासुदेवइतिस्मृतः ३३ वृषभानुसुताराधायाजाताकीर्तिमन्दिरे तस्याःपतिरयं
साक्षात्तेनराधापतिःस्मृतः ३४ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् असंख्यब्रह्माण्डपतिर्गोलोकेधा
म्निराजते ३५ सोयन्तवशिशुर्जातोभारावतारणायच कंसादीनांवधार्थायभक्तानांरक्षणायच ३६ अनन्ता-
न्यस्यनामानिवेदगुह्यानिभारत लीलाभिश्चभविष्यन्तितत्कर्मसुनविस्मयः ३७ अहोभाग्यंतुतेनन्दसाक्षाच्छ्रीपुरु
षोत्तमः त्वद्गृहेवर्तमानोयंशिशुरूपःपरात्परः ३८ श्रीनारदउवाच इत्युक्त्वाथगतेगर्गेस्वात्मानंपूर्णमाशिषम्
मेनेप्रमुदितःपत्न्यानन्दराजोमहामतिः ३९ अथगर्गोज्ञानिवरोज्ञानदोमुनिसत्तमः कालिन्दीतीरशोभाढ्यांवृषभा
नुपुरंगतः ४० छत्रेणशोभितंविप्रंद्वितीयमिववासवम् दंडेनराजितंसाक्षाद्धर्मराजमिवस्थितम् ४१ तेजसाद्यो
तितदिशंसाक्षात्सूर्यमिवापरम् पुस्तकीमेखलायुक्तंद्वितीयमिवपद्मजम् ४२ शोभितंशुक्लवासोभिर्देवंविष्णु-
मिवस्थितम् तंदृष्ट्वामुनिशार्दूलंसहसोत्थायसादरम् ४३ प्रणम्यशिरसासद्यःसन्मुखोभूत्कृतांजलिः मुनिचपी
ठकेस्थाप्यपाद्याद्यैरुपचारवित् ४४ पूजयामासविधिवच्छ्रीगर्गंज्ञानिनांवरम् ततःप्रदक्षिणीकृत्यवृषभानुवरोम-
हान् ४५ श्रीवृषभानुरुवाच सतांपर्य्यटनंशान्तंगृहिणांशान्तयेस्मृतम् नृणामन्तस्तमोहारीसाधुरेवनभास्क
रः ४६ तीर्थीभूतावयंगोपाजातास्त्वद्दर्शनात्प्रभो तीर्थानितीर्थीकुर्वन्तित्वादृशःसाधवःक्षितौ ४७ हेमुनेराधिका
नामकन्यामेमंगलायना कस्मैवरायदातव्यावदत्वंमेसुनिश्चितम् ४८ त्वपर्य्यटन्नर्कइवत्रिलोकींदिव्यदर्शनः वरोनया-
समोयोवैकस्मैदास्यामिकन्यकाम् ४९ श्रीनारदउवाच हस्तंगृहीत्वाश्रीगर्गोवृषभानोर्महामुनिः जगामयमुनातीरंनि

निजनाथमंकात् गतेथनन्देप्रणतेव्रजेशेतदाहिभांडीरवनंजगाम ११ गोलोकलोकाच्चपुरासमागताभूमीनिजंस्वंवपुरादधाना या पद्मरागादिखचित्सुवर्णबभूवसातत्क्षणमेवसर्वम् १२ वृन्दावनन्दिव्यवपुर्दधानंवृक्षैर्वरैःकामदुघैस्सहैव कलिन्दपुत्रीचसुव-र्णसौधैःश्रीरत्नसोपानमयीबभूव १३ गोवर्द्धनोरत्नशिलामयोभूत्सुवर्णशृंगैःपरितःस्फुरद्भिः मत्तालिभिर्निर्झरसुन्दरीभिर्दरीभिरुच्चांगकरीवराजन् १४ तदानिकुंजोपिनिजंवपुर्दधत्सभायुतंप्रांगणदिव्यमंडपम् वसंतमाधुर्यधरंमधुव्रतैर्मयूरपारावतकोकिलध्वनि १५ सुवर्णरत्नादिखचिद्भटैर्वृतंपतत्पताकावलिभिर्विराजितम् सरःस्फुरद्भिर्भ्रमरावलीठितैर्विचर्चितंकांचनचारुपंकजैः १६ तदैवसाक्षात्पुरुषोत्तमोत्तमोबभूवकैशोरवपुर्घनप्रभः पीतांबरःकौस्तुभरत्नभूषणोवंशीधरोमन्मथराशिमोहनः १७ भुजेनसंगृह्यहसन्प्रियांहरिर्जगाममध्येसुविवाहमंडपम् विवाहसंभारयुतःसमेखलंसदर्भमद्वारिघटादिमंडपम् १८ तत्रैवसिंहासनउन्नतेवरेपरस्परंसम्मिलितौविरेजतुः परंब्रुवन्तौमधुरंचदंपतीस्फुरत्प्रभौरवेचतड्डिद्धनाविव १९ तदांबराद्देववरोविधिःप्रभुःसमागतस्तस्यपरस्यसन्मुखे नत्वातदंघ्रीउशतीगिराभिःकृतांजलिश्चारुचतुर्मुखोजगौ २० श्रीब्रह्मोवाच अनादिमाद्यंपुरुषोत्तमोत्तमंश्रीकृष्णचन्द्रंनिजभक्तवत्सलम् स्वयंत्वसंख्यांडपतिंपरात्परंराधापतिंत्वांशरणंव्रजाम्यहम् २१ गोलोकनाथस्त्वमतीवलीलोलीलावतीयंनिजलोकलीला वैकुंठनाथोसियदात्वमेवलक्ष्मीस्तदेयंवृषभानुजाहि २२ त्वंरामचन्द्रोजनकात्मजेयंभूमौहरिस्त्वंकमलालयेयम् यज्ञावतारोसियदातदेयंश्रीदक्षिणास्त्रीप्रतिपत्निमुख्या २३ त्वन्नारसिंहोसिरमाहृदीयंनारायणस्त्वंचनरेणयुक्तः तदात्वियंशान्तिरतीवसाक्षाच्छायेवयातात्वतवानुरूपा २४ त्वंब्रह्मचेयंप्रकृतिस्तटस्थाकालोयदेमांचविदुःप्रधानम् महान्यदात्वंजगदंकुरोसिराधातदेयंसगुणाचमाया २५ यदान्तरात्माविदितश्चतुर्भिस्तदात्वियंलक्षणरूपवृत्तिः यदाविराड्देहधरस्त्वमेवतदाखिलंवाभुवि



22

तुर्द्धातेजसोभवत् लीलाभूःश्रीश्चविरजाचतस्त्रःपत्न्यएवहि ६९ संप्रलीनाश्चताःसर्वाराधायांकुंजमन्दिरे परिपूर्णतमाराधातस्मादाहुर्मनीषिणः ७० राधाकृष्णेतिहेगोपयेजपन्तिपुनःपुनः चतुःपदार्थंकिन्तेषांसाक्षात्कृष्णोपिलभ्यते ७१ श्रीनारदउवाच तदातिविस्मितोराजन्वृषभानुःप्रियायुतः राधाकृष्णप्रभावन्तंज्ञात्वानन्दमयोऽत्यभूत् ७२ इत्थंगर्गोज्ञानिवरःपूजितोवृषभानुना जगामस्वगृहंसाक्षान्मुनीन्द्रःसर्ववित्कविः ७३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगोलोकखंडे नारदबहुलाश्वसंवादेविश्वरूपदर्शनंनन्दपत्न्याश्रीकृष्णनामकरणंनामपंचदशोऽध्यायः १५ श्रीनारदउवाच - गाश्चारयन्नंदनमेकदेशेसंलालयन्दूरतमंसकाशात् कलिन्दजातीरसमीरकंपितंनन्दोप्यभांडीरवनंजगाम १ कृष्णेच्छया वेगतरोथवातोघनैरभून्मेदुरमंबरच तमालनीपद्रुमपल्लवैश्चपतद्भिरेजद्भिरतीवभीकैः २ तदांधकारेमहतिप्रजातेबालेरुदत्यंकगतेतिभीते नन्दोभयंप्रापशिशुंसविभ्रद्धरिंपरेशंशरणंजगाम ३ तदैवकोट्यर्कसमूहदीप्तिरागच्छतीवाचलतीदिशासु बभूवतस्यांवृषभानुपुत्रीददर्शराधांनवनन्दराजः ४ कोटींदुबिंबद्युतिमादधानांनीलांबरंसुन्दरमादिवर्णम् मंजीरधीरध्वनिनूपुराणामाबिभ्रतींशब्दमतीवमंजुम् ५ कांचीकलाकंकणशब्दमिश्रांहारांगुलीयांगदविस्फुरंतीम् श्रीनासिकामौक्तिकहंसिकीभिःश्रीकंठचूडामणिकुंडलाढ्याम् ६ तत्तेजसाधर्षितआशुनन्दोनत्वाथतामाहकृतांजलिःसन् अयन्तुसाक्षात्पुरुषोत्तमस्त्वंप्रियाग्निमुख्यासिसदैवराधे ७ गुप्तंविदंगर्गमुखेनवेद्मिगृहाणराधेनिजनाथमंकात् एनंगृहंप्रापयमेघभीतंवदामिचेत्थंप्रकृतेर्गुणाढ्यम् ८ नमामितुभ्यंभुविरक्षमांत्वंयथेप्सितंसर्वजनैर्दुरापम् श्रीराधोवाच अहंप्रसन्नातवभक्तिभावान्मद्दर्शनंदुर्लभमेवनन्द ९ श्रीनन्दउवाच यदिप्रसन्नासितदाभवेन्मेभक्तिर्दृढाकौशुवयोःपदाब्जे सतांचभक्तिस्तवभक्तिभाजांसंगःसदामेयुगेयुगेच १० श्रीनारदउवाच तथास्त्वचोक्त्वाथहरिंकराभ्यांजग्राहराधा-

व विलोक्यशाखान्तरितंचराधाजग्राहपीताम्बरमाव्रजन्ती ४१ दुद्राव राधाहरिहस्तपद्माझंकारमङ्घ्र्योःप्रतिकुर्वतीको -
निलीयमानायमुनानिकुंजेपुनर्व्रजन्तीहरिहस्तमात्रात् ४२ यथातमालःकलधौतवल्याघनोयथाचंचलयाचकास्ति नीलो
द्रिराजोनिकषाश्मखन्याश्रीराधयाद्यस्कृतथारमण्या ४३ श्रीरासरंगेजनवर्जितेपरेरेमेहरीरासरसेनराधया वृन्दावनेभृं
गमयूरकूजल्लुतेचरत्येवरतीश्वरःपरः ४४ श्रीराधयाकृष्णहरिःपरात्माननर्तगोवर्द्धनकन्दरासु मत्तालिषुप्रस्रवणैःस
रोभिर्विराजितासुद्युतिमल्लतासु ४५ चचारकृष्णोयमुनांसमेत्यवरंविहारंवृषभानुपुत्र्या राधाकराल्लक्षदलंसपद्मंधा
वन्गृहीत्वायमुनाजलेषु ४६ राधाहरेःपीतपटंचवंशींवेत्रंगृहीत्वासहसाहसन्ती देहीतिवंशींवदतोहरेश्चजगादराधाक
मलन्नुदेहि ४७ तस्मैददौदेववरोथपद्मंराधाददौपीतपटंचवंशीम् वेत्रंचतस्मैहरयेतयोःपुनर्बभूवलीलायमुनातटेषु ४८
ततश्चभांडीरवटेप्रियासुचकारशृंगारमलंमनोज्ञम् तत्रावलीपावककज्जलाद्यैःपुष्पैःसुरत्नैर्व्रजगोपरत्नः ४९ हरेश्चशृं-
गारमलंप्रकर्तुःसमुद्यतातत्रयदाहिराधा तदैवकृष्णस्तुबभूवबालोविहायकैशोरवपुःस्वयंहि ५० नन्देनदत्तंशिशुमेव
यादृशंभूमौलुठन्तंप्ररुदन्तमाभयात् हरिंविलोक्याशुरुरोदराधिकातनोषिमायांनुकथंहरेमयि ५१ इत्थंरुदन्तीसहसा
विषण्णमाकाशवागाहतदैवराधाम् शोचंनुराधेइहमाकुरुत्वंमनोरथःस्तेभविताहिपश्चात् ५२ श्रुत्वाथराधाहिहरिंगृही
त्वागताशुगेहेव्रजराजपत्न्याः दत्वाचबालंकिलनन्दपत्न्याउवाचदत्तंपथितेचभर्त्रा ५३ उवाचराधांनृपनन्दगेहिनीधन्या
सिराधेवृषभानुकन्यके त्वयाशिशुर्मेपरिरक्षितोभयान्मेघावृतेव्योम्निभयातुरोवने ५४ सम्पूजितासद्गुणश्लाघितासा
सनन्दितासावृषभानुपुत्री यदाह्यनुज्ञाप्ययशोमतींसाशनैःस्वगेहंनिजगामराधा ५५ इत्थंहरेर्गुप्तकथाचवर्णिताराधा
विवाहस्यसुमंगलावृता श्रुत्वाचयेवापठिताचपाठितातान्पापवृन्दानकदास्पृशन्ति ५६ इतिश्रीमद्गर्गाचार्यसंहिता

23

धारणेयम् २६ श्यामंचगौरंविदितंद्विधामहस्तवैवसाक्षात्पुरुषोत्तमोतमः गोलोकधामाधिपतिम्परेशंपरात्परन्त्वांशरणंव्र
जाम्यहम् २७ सदापठेद्योयुगलस्तवम्परंगोलोकधामप्रवरम्प्रयातिसः इहैवसौंदर्यसमृद्धिसिद्धयो भवन्तितस्यापिनिसर्गतः
पुनः २८ यदायुवांप्रीतियुतौचदम्पतीपरात्परौतावनुरूपरूपितो तथापिलोकव्यवहारसंग्रहाद्विधिंविवाहस्यतुकारया-
म्यहम् २९ श्रीनारदउवाच तदासउत्थायविधिर्हुताशनंप्रज्वाल्यकुंडेस्थितयोस्तयोःपुरः श्रुतेःकरग्राहविधिंविधानतोवि-
धायधातासमवस्थितोभवत् ३० सवाहयामासहरिंचराधिकांप्रदक्षिणंसप्तहिरण्यरेतसः ततश्चतौतंप्रणमय्यवेदवित्-
तौपाठयामासचसप्तमंत्रकम् ३१ ततोहरेर्वक्षसिराधिकायाःकरंचसंस्थाप्यहरेःकरंपुनः श्रीराधिकायाःकिलपृष्ठदे-
शकेसंस्थाप्यमंत्रांश्चविधिःप्रपाठयन् ३२ राधाकराभ्यांप्रददौचमालिकांकिंजल्किनींकृष्णगलेऽलिनादिनीम् हरेःकरा
भ्यांवृषभानुजागलेततश्चवह्निंप्रणमय्यवेदवित् ३३ संवासयामासस्रुपीठयोश्चतौकृताञ्जलीमौनयुतौपितामहः तौपा
ठयामासतुपंचमंत्रकंसमर्प्यराधांचपितेवकन्यकाम् ३४ पुष्पाणिदेवाववृषुस्तदानृपविद्याधरीभिर्ननृतुःस्रुरांगनाः गन्ध
र्वविद्याधरचारणाःकलंसकिन्नराःकृष्णसुमंगलंजगुः ३५ मृदंगवीणामुरुयष्टिवेणवःशंखानकादुंदुभयःसतालकाः
नेदुर्मुहुर्देववरैर्दिविस्थितैर्जयेत्यभून्मंगलशब्दमुच्चकैः ३६ उवाचतत्रैवविधिंहरिःस्वयंयथेप्सितंत्वंवदविप्रदक्षिणाम्
तदाहरिंप्राहविधिःप्रभोमेदेहित्वदंघ्रोर्निजभक्तिदक्षिणाम् ३७ तथास्तुवाक्यंवदतोविधिर्हरेःश्रीराधिकायाश्चपद
द्वयंशुभम् नत्वाकराभ्यांशिरसापुनःपुनर्जगाम्गेहंप्रणतःप्रहर्षितः ३८ ततोनिकुंजेषुचतुर्विधान्नंदिव्यंमनोज्ञंप्रिय
याप्रदत्तम् जघासकृष्णःप्रहसन्परात्माकृष्णेनदत्तंक्रमुकंचराधा ३९ ततःकरेणापिकरंप्रियायाहरिर्गृहीत्वाप्रच-
चालकुंजे जगामजल्पंमधुरंप्रपश्यन्वृन्दावनंश्रीयमुनालतांश्च ४० श्रीमल्लताकुंजनिकुंजमध्येनिलीयमानःप्रहसंतमे

१७ एकदात्वुपनन्दस्यपत्नीनाम्नाप्रजावती श्रीनन्दमन्दिरंप्राप्तायशोदांप्राहगोपिका १८ प्रभावत्युवाच नवनीतं
घृतंदुग्धंदधितक्रंयशोमती आवयोर्भेदरहितंत्वत्प्रसादाच्चमेभवत् १९ नाहंवदामिचानेनस्तेयंकुत्रापिशिक्षितम् -
शिक्षांकरोषिनसुतेनवनीतंमुषितंस्वतः २० यदामयाकृताशिक्षातदाधृष्टस्तवांगजः गालीप्रदानंदत्वायंद्रवतिप्रांगणा-
न्मम २१ व्रजाधीशस्यपुत्रोयंभूत्वास्तेयंसमाचरेत् नमयाकथितंकिंचिद्यशोदेतवगौरवात् २२ श्रीनारदउवाच
श्रुत्वाप्रभावतीवाक्यंयशोदानन्दगेहिनी बालंनिर्भर्त्स्यतामाहसाम्नाप्रेमपरायणा २३ श्रीयशोदोवाच गवांकोटिर्गृ
हेमेस्तिगोरसैराद्रिताचला नजानेदधिमुड्बालंनान्तिसोत्रकदाचन २४ अनेनमुषितंगव्यंतत्समंत्वंगृहाणमे तेशिशोर्मे
शिशोर्भेदोनास्तिकिंचित्प्रभावति २५ नवनीतमुखंचैनमत्रतोद्यानयिष्यसि तदाशिक्षांकरिष्यामिभर्त्सनंबन्धनन्तथा
२६ श्रीनारदउवाच श्रुत्वावाक्यन्तदागोपीप्रसन्नागृहमागता एकदादधिचौर्यार्थंकृष्णस्तस्यागृहंगतः २७ वयस्यै
र्बालकैःसार्द्धंपार्श्वकुड्येगृहस्यच हस्ताद्धस्तंसंगृहीत्वाशनैःकृष्णोविवेशह २८ शिक्यस्थंगोरसंदृष्ट्वाहस्ताप्राप्यंहरिः
स्वयम् उलूखलेपीठकेचगोपान्स्थाप्यारुरोहतम् २९ तदपिप्राशनालभ्यंगोरसंशिक्यसंस्थितम् श्रीदाम्नासुबलेना
पिदंडेनापितताडत ३० भग्नभाण्डात्सर्वगव्यंवहद्भूमौमनोहरम् जघासससबलोमर्कैर्बालकैःसहमाधवः ३१ भग्नभांड
स्वनंश्रुत्वाप्राप्तागोपीप्रभावती पलायितेषुबालेषुजग्राहश्रीकरंहरेः ३२ नीत्वामृषाश्रुंभीरुंचगच्छन्तीनन्दमन्दिरम् -
अग्रेनन्दंस्थितंदृष्ट्वामुखेवस्त्रंचकारह ३३ हरिर्विचिंतयन्नित्थंमातादंडंप्रदास्यति दधारतद्बालरूपंस्वच्छन्दगतिरीश्वरः
३४ सायशोदांसमेत्याशुप्राहगोपीरुषान्विता भांडंभग्नीकृतंसर्वंमुषितंदध्यनेनवै ३५ यशोदातत्कृतंवीक्ष्यहसन्ती
प्राहगोपिका वस्त्रान्तंचमुखाद्गोपीदूरीकृत्यवदांहसः ३६ अपवादोयदादेयोनिर्वासंकुरुमेपुरात् युष्मत्सुन्नकृतं-

यांगोलोकखंडेश्रीनारदबहुलाश्वसंवादेश्रीराधिकाविवाहवर्णनंनामषोडशोऽध्यायः १६ ७२ श्रीनारदउवाच
अथबालौकृष्णरामौगौरश्यामौमनोहरौ लीलयाचक्रतुरलंसुन्दरंनन्दमन्दिरे १ रिंगमाणौचजानुभ्यांपाणिभ्यांसहमै
थिलौ व्रजतात्मेनकालेनब्रुवन्तौमधुरंव्रजे २ यशोदयाचरोहिण्यालालितौपोषितौशिशू कदाविनिर्गतावंकात्कचिदंक
समाश्रितौ ३ मंजीरकिंकिणीरावंकुर्वन्तौतावितस्ततः त्रिलोकींमोहयन्तौद्वौमायाबालकविग्रहौ ४ क्रीडन्तमादाय-
शिशुंयशोदाऽजिरेलुठन्तंव्रजबालकैश्च तद्धूलिलेपावृतधूसरांगंचक्रे ह्यलंप्रोक्षणमाततान ५ जानुद्वयाभ्यांचसमंकरा
भ्यांपुनर्व्रजन्प्रांगणमेत्यकृष्णः भ्रान्तंकदेशेपुनराव्रजन्सन् बभौव्रजेकेसरिबाललीलः ६ तंसर्वतोहैमनचित्रयुक्तंपी
ताम्बरंकंचुकमादधानम् स्फुरत्प्रभंरत्नमयंचमौलिंदृष्ट्वासुतंप्रापमुदंयशोदा ७ बालंमुकुन्दमतिसुन्दरबालकेलिंदृष्ट्वाप
रंमुदमवापुरतीवगोप्यः श्रीनन्दराजव्रजमेत्यगृहंविहायसर्वास्तुविस्मृतगृहाःस्फुरद्विग्रहास्ताः ८ श्रीनन्दराजगृहकृ-
त्रिमसिंहरूपंदृष्ट्वाव्रजन्प्रतिरवन्नृपभीरुवद्यः नीत्वाचतन्निजस्कृतगृहमाव्रजन्तींगोप्योव्रजेसघृणयाह्यवदन्यशोदाम् ९
श्रीगोप्यऊचुः क्रीडार्थंचपलंह्येनंमाबहिःकारयांगणात् बालकेलिन्दुग्धमुखंकाकपक्षधरंशुभम् १० ऊर्द्धदन्तद्वयंजातं
पूर्वंमातुलदोषदम् अस्यापिमातुलोनास्तितेसुतस्ययशोमति ११ तस्माद्दानन्तुकर्तव्यंविघ्नानानाशहेतवे गोविप्रसु
रसाधूनांछंदसाम्पूजनन्तथा १२ श्रीनारदउवाच तदायशोदारोहिण्योःसुतकल्याणहेतवे वस्त्ररत्नवान्नानादान
नित्यंचचक्रतुः १३ अथव्रजेरामकृष्णौबालसिंहावलोकनौ पश्चाच्चलन्तौघोषेषुवर्द्धमानौबभूवतुः १४ श्रीदाम-
सुबलाद्यैश्चवयस्यैर्व्रजबालकैः यमुनासिकतेशश्वल्लुठन्तौसकुतूहलौ १५ कालिंद्युपवनेश्यामैस्तमालैःसघनैर्वृते -
कदंबकुंजशोभाढ्येचेरतूरामकेशवौ १६ जनयन्गोपगोपीनामानन्दंबाललीलया वयस्यैश्चोरयामासनवनीतंघृतंहरिः

अहंकिमुवदिष्यामितेषांभाग्यंमहोदयम् तेषामारोहमास्थायबालकेलिर्विभोहरिः १२ एकदायमुनातीरेमृत्कृष्णोनावली
ढिता यशोदांबालकाःप्राहुरत्तिबालोमृदन्तव १३ बलभद्रेचवदतितदासानन्दगेहिनी करेगृहीत्वास्वसुतंभीरुनेत्रमुवाच
ह १४ श्रीयशोदोवाच कस्मान्मृदंभक्षितवान्महाज्ञभवान्वयस्याश्चवदन्तिसाक्षात् ज्यायान्बलोयंवदतिप्रसिद्धंमाए-
वमर्थंनजहातिनेष्टम् १५ श्रीभगवानुवाच सर्वेमृषावादरताव्रजार्भकामातर्मयाक्वापिनमृत्प्रभक्षिता यदासमीचीनमनेन
वाक्पथंतदामुखंपश्यमदीयमंजसा १६ श्रीनारदउवाच अथगोपीबालकस्यपश्यन्तीसुन्दरंमुखम् प्रसारितंचददृशे
ब्रह्मांडंरचितंगुणैः १७ सप्तद्वीपान्सप्तसिंधून्सखंडान्सगिरीन्हृदान् आब्रह्मलोकाल्लोकांस्त्रीन्स्वात्मभिःसव्रजैःसह १८
दृष्ट्वानिमीलिताक्षीसाभूत्वाश्रीयमुनातटे बालोऽयंमेहरिःसाक्षादितिज्ञानमयीह्यभूत् १९ तदाजहासश्रीकृष्णोमोहयन्नि
जमायया यशोदावैभवद्दृष्टंनसस्मारगतस्मृतिः २० इतिश्रीमद्गर्गाचार्यसंहितायांगोलोकखण्डेनारदबहुलाश्वसंवादेब्र-
ह्मांडदर्शनंनामाष्टदशोऽध्यायः १८ श्रीनारदउवाच एकदागोकुलेगोप्योममथुर्दधिसर्वतः गृहेगृहेप्रगायन्त्योगो
पालचरितम्परम् १ यशोदापिसमुत्थायप्रातःश्रीनन्दमन्दिरे भाण्डेरायविनिक्षिप्यममन्थुर्दधिसुन्दरी २ मंजीररावंसंकु
र्वन्बालश्रीनन्दनन्दनः ननर्त्तनवनीतार्थरायःशब्दकुतूहलात् ३ बालकेलिर्विभोनृत्यन्मातुःपार्श्वमनुभ्रमन् स्वनादिकिंकि-
णीसंघझंकारंकारयन्मुहुः ४ हय्यंगवीनसततंनवनीयाचन्समातुर्मधुरंब्रुवन्सः आदायहस्तेश्मसुतंरुषासकृधीर्विभेदकृष्णो
दधिमंथपात्रम् ५ पलायमानंस्वसुतंयशोदाप्रधावतीप्रापनहस्तमात्रात् योगीश्वराणामपियोदुरापःकथंसमातुर्ग्रहणेप्र-
याति ६ तथापिभक्तेषुचभक्तवश्यतांप्रदर्शिताश्रीहरिणानृपेश्वर बालंगृहीत्वास्वसुतंयशोमतीबबंधरज्ज्वाथरुषाह्यु
लूखले ७ आदाययद्यद्दृढदामतन्तत्स्वल्पंप्रभूतंस्वसुतंयशोदा गुणैर्नबद्धःप्रकृतेःपरोयःकथंसबद्धोभवतीहदाम्ना

चौर्यमस्मत्पुत्रकृतंभवेत् ३७ जनलज्जासमायुक्तादूरीकृत्यमुखाम्बरम् सापिप्राहनिजंबालंवीक्ष्यविस्मितमानसा ३८ निःपदस्त्वंकुतःग्रासोव्रजसारोस्तिमेकरे वदन्तीत्थंचतंनीत्वानिर्गतानन्दमन्दिरात् ३९ यशोदारोहिणीनन्दोरामोगोपाश्च-गोपिकाः जहसुःकथयन्तस्तेदृश्योन्यायोव्रजेमहान् ४० भगवांस्तबहिर्वीथ्यांभूत्वाश्रीनन्दनन्दनः प्रहसन्गोपिकांप्राह धृष्टागर्भ्यंचलेक्षणः ४१ श्रीभगवानुवाच पुनर्मांयदिगृण्हासिकदाचिद्यदिगोपिके तेभर्तृरूपन्तुतदाभविष्यामिनसंशयः ४१ श्रीनारदउवाच श्रुत्वासविस्मितागोपीगतागेहंथमैथिल तदासर्वगृहेगोप्योनगृण्हन्तिहरिंह्रिया ४२ इति-श्रीमद्गर्गाचार्यसंहितायांगोलोकखंडेश्रीनारदबहुलाश्वसंवादेश्रीकृष्णबालचरित्रेदधिस्तेयवर्णननामसप्तदशोऽध्यायः १७

श्रीनारदउवाच गोपीगृहेषुविचरन्नवनीतचोरःश्यामोमनोहरवपुर्नवकंजनेत्रः श्रीबालचन्द्रइववृद्धिगतोनराणांचित्तंहरन्निवचकारव्रजेचशोभाम् १ श्रीनन्दनन्दनमतीवचलंगृहीत्वागेहंनिधायसुमुहुर्नवनन्दगोपाः सत्कन्दुकैश्चसततंपरिपाल-यन्तेगायन्तऊर्जितस्कयानजगत्स्मरंतः २ राजोवाच नवोपनन्दनामानिवददेवऋषेमम अहोभाग्यन्तुयेषांवैतेपूर्वंकेइ-हागताः ३ तथाषट्वृषभानूनांकर्माणिमंगलानिच श्रीनारदउवाच गयश्चविमलःश्रीशःश्रीधरोमंगलायनः ४ मंग-लोरंगवल्लीशोरंगोजिर्देवनायकः नवनन्दाश्चकथिताबभूवुर्गोकुलेव्रजे ५ वीतहोत्रोग्निभुक्शांवःश्रीकरोगोपतिःश्रुतः व्र-जेशःपावनःशान्तउपनन्दाःप्रकीर्तिताः ६ नीतिविन्मार्गदःशुक्लःपतन्गोदिव्यवाहनः गोपेष्टश्चव्रजेराजन्जाताषट्वृषभा-नवः ७ गोलोकेकृष्णचन्द्रस्यनिकुंजद्वारमास्थिताः वेत्रहस्ताःश्यामलांगानवनन्दाश्चतेस्मृताः ८ निकुंजेकोटिशोगाव-स्तासांपालनतत्पराः वंशीमयूरपक्षाढ्याउपनन्दाश्चतेस्मृताः ९ निकुंजदुर्गरक्षायांदंडपाशधराःस्थिताः षट्द्वारमास्थिता षट्वेकथितावृषभानवः १० श्रीकृष्णस्येच्छयासर्वेगोलोकादागताभुवि तेषांप्रभावंवक्तुंहिनसमर्थश्चतुर्मुखः ११-

26

रुणीमदिरामत्तौयुवानौ ... २८ कदाचिद्देवलोनाममुनींद्रोवेदपारगः नग्नौदृष्ट्वाचतावाहदुष्टशीलौगतस्मृती २९ देवलउवाच
युवांवृक्षसमौदृष्टौनिर्लज्जौद्रव्यदर्पितौ तस्माद्वृक्षौतुभूयास्तांवर्षाणांशतकंभुवि ३० द्वापरांतेभारतेचमाथुरेव्रजमंडले कलिंदनंदि
नीतीरेमहावनसमीपतः ३१ परिपूर्णतमंसाक्षात्कृष्णंदामोदरंहरिम् गोलोकनाथंतन्दृष्ट्वापूर्वरूपौभविष्यथः ३२ श्रीनारदउवाच
इत्थंदेवलशापेनवृक्षत्वंप्रापितौनृप नलकूबरमणिग्रीवौश्रीकृष्णेनविमोचितौ ३३ इतिश्रीमद्ग० सं० गो० खं० नारदबहुलाश्वसंवादेय
मलार्जुनभंगोनामैकोनविंशोऽध्यायः १९ श्रीनारदउ० एकदाकृष्णचंद्रस्यदर्शनार्थंपरस्यच दुर्वासामुनिशार्दूलोव्रजमंडलमाययौ १
कालिंदीनिकटेपुण्येसैकतेरमणस्थले महावनसमीपेचकृष्णमाराद्ददर्शह २ श्रीमन्मदनगोपालंलुठंतंबालकैःसह परस्परंप्रयुद्धंतंबा
लकेलिंमनोहरम् ३ धूलिधूसरसर्वांगंवक्रकेशंदिगंबरम् धावंतंबालकैःसार्द्धंहरिंवीक्ष्यसविस्मितः ४ श्रीमुनिरुवाच सईश्वरोयंभग
वान्कथंबालेलुठन्भुवि अयंतुनंदपुत्रोस्तिनश्रीकृष्णःपरात्परः ५ श्रीनारदउ० इत्थंमोहंगतेतत्रदुर्वाससिमहामुनौ क्रीडन्कृष्णस्तत्समी
पेतदंकेह्यागतःस्वयम् ६ पुनर्विनिर्गतोह्यंकाद्बालसिंहावलोकनः हसन्कलंब्रुवन्कृष्णःसन्मुखःपुनरागतः ७ हसतस्तस्यचमुखेप्रवि
ष्टःश्वसनैर्मुनिः ददर्शान्यंमहालोकंसारण्यंजनवर्जितम् ८ अरण्येभ्रममंस्तत्रकुतःप्राप्तइतिब्रुवन् तदेवाजगरेणापिनिगीर्णोभून्महा
मुनिः ९ ब्रह्मांडंतत्रददृशेसलोकंसबिलंपरम् भ्रमन्द्वीपेषुसमुनिःस्थितोभूत्पर्वतेसिते १० तपस्तत्रापवर्षाणांशतकोटिप्रभुंभजन् नै
मित्तिकाख्येप्रलयेप्राप्तेविश्वभयंकरे ११ आगच्छंतःसमुद्रास्तेप्लावयंतोधरातलम् वहंस्तेषुचदुर्वासानप्रापांतंजलस्यच १२ व्यतीतेयुग-
साहस्रेमग्नोभूद्विगतस्मृतिः पुनर्जलेषुविचरन्नंडमन्यंददर्शह १३ तच्छिद्रेचप्रविष्टोसौदिव्यांसृष्टिंगतस्ततः तदंडमूर्द्धलोकेषुविधेरायुःस
मंचरन् १४ एवंछिद्रंतत्रवीक्ष्यप्राविशत्सहरिंस्मरन् बहिर्विनिर्गतोह्यंडाद्ददर्शाथमहाजलम् १५ तस्मिन्जलेतुलक्ष्यंतेकोटिशोह्यंडराश
यः ततोमुनिर्जलंपश्यन्ददर्शविरजांनदीम् १६ तत्पारंप्रगतःसाक्षाद्गोलोकंप्राविशन्मुनिः वृन्दावनंगोवर्द्धनंयमुनापुलिनंशुभम् १७ दृष्ट्वा

८ यदायशोदागतबन्धनेच्छाखिन्नानिषण्णानृपछिन्नमानसा आसीत्तदायंकृपयास्वबंधेस्वच्छन्दयानःस्ववशोपिकृष्णः ९ एवंप्र
सादोनहिवीतकर्मणांनज्ञानिनांकर्मभियांकुतःपुनः मातुर्यथाभून्नृपएषुतस्मान्मुक्तिंव्यधाद्भक्तिमलंनमाधवः १० तदैवगोप्यस्तुस
मागतास्त्वरंदृष्ट्वाथभग्नंदधिमंथभाजनम् उलूखलेबद्धमतीवदामभिर्भीतिशिशुंवीक्ष्यजगुर्घृणातुराः ११ गोप्यऊचुः अस्मद्गृहे
षुपात्राणिभिनत्तिसततंशिशुः तदप्येनंनोवदामःकारुण्यान्नंदगेहिनि १२ गतव्यथेअकरुणेयशोदेहेव्रजेश्वरि यष्ट्यानिर्भ
र्त्सितोबालस्त्वयाबद्धोघटक्षयात् १३ श्रीनारदउवाच इत्युक्तायांयशोदायांव्यग्रायागृहकर्मसु कर्षन्नुलूखलंकृष्णोबालैः
श्रीयमुनांययौ १४ तत्तटेन्महावृक्षौपुराणौयमलार्जुनौ तयोर्मध्येगतःकृष्णोहसन्दामोदरःप्रभुः १५ चकर्षसहसाकृष्ण
स्तिर्य्यग्गतमुलूखलम् कर्षणेनसमूलौद्वौपेततुर्भूमिमंडले १६ पातनेनापिशब्दोभून्प्रचंडोवज्रपातवत् विनिर्गतौचवृक्षाभ्यां
देवौद्वावेधसोऽग्निवत् १७ दामोदरंपरिक्रम्यपादौस्पृष्टास्वमौलिना कृतांजलीहरिंनत्वानतौतत्सम्मुखेस्थितौ १८ देवावूचतुः
आवांमुक्तौब्रह्मदंडात्सद्यस्तेच्युतदर्शनात् माभूत्तेनिजभक्तानांहेलनंह्यावयोर्हरे १९ करुणानिधयेतुभ्यंजगन्मंगलशीलिने-
दामोदरायकृष्णायगोविंदायनमोनमः २० श्रीनारदउवाच इतिनत्वाहरिंतौद्वौउदीचींचदिशंगतौ तदैवह्यागताःसर्वेनंदाद्याभ
यकातराः २१ कथंवृक्षौप्रपतितौविनावातंव्रजार्भकाः वदताशुतदाबालाऊचुःसर्वेव्रजौकसः २२ बालाऊचुः अनेनपातितौवृ
क्षौताभ्यांद्वौपुरुषौस्थितौ एनंनतागतावद्यतावुदीच्यांस्फुरत्प्रभौ २३ श्रीनारदउवाच इतिश्रुत्वावचस्तेषांनतेश्रद्दधिरेततः
मुमोचनंदःस्वंबालंदाम्नाबद्धमुलूखले २४ संलालयन्स्वांकदेशेसमाघ्रायशिशुंनृप निर्भर्त्स्यभामिनींनंदोविप्रेभ्योगोशतंददौ
२५ श्रीबहुलाश्वउवाच काविमौपुरुषौदिव्यौवददेवर्षिसत्तम केनदोषेणवृक्षत्वंप्रापितौयमलार्जुनौ २६ श्रीनारदउवाच
नलकूबरमणिग्रीवौ[illegible] ... स्थितौ २७ अप्सरोभिर्गीयमानौचेरतुर्गतवाससौ वा

स्याविशंस्तत

प्रसन्नः समुनिर्निकुंज... ...पगोपीगणवृतं गवांकोटिभिरन्वितं १८ असंख्यकोटिमार्तंडज्योतिषांमंडलेततः दिव्येलक्षदलेपद्मेस्थितंराधापतिंहरिं १९ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंपुरुषोत्तमं असंख्यब्रह्मांडपतिंगोलोकेस्वंददर्शह २० श्रीकृष्णस्यापिहसतःप्रविष्टस्तन्मुखेमुनिः पुनर्बहिर्निर्गतोऽपश्यद्बालंश्रीनंदनंदनं २१ कालिंदीनिकटेपुण्येसैकतेरमणस्थले बालकैःसहितंकृष्णंविचरंतंमहावने २२ तदामुनिश्चदुर्वासाज्ञात्वाकृष्णंपरात्परं श्रीनंदनंदनंनत्वानत्वाप्राहकृतांजलिः २३ श्रीमुनिरु० बालंनवीनशतपत्रविशालनेत्रंबिंबाधरंसघनमेघरुचिंमनोज्ञं मंदस्मितंमधुरसुंदरमंदयानंश्रीनंदनंदनमहंमनसानमामि २४ मंजीरनूपुररणन्नवरत्नकांचीश्रीहारकेसरिनखप्रतियंत्रसंघं दृष्ट्यार्तिहारिमषिबिंदुविराजमानंवंदेकलिंदतनुजातटबालकेलिं २५ पूर्णेंदुसुंदरमुखोपरिकुंचिताग्राःकेशानवीनघननीलनिभाःस्फुरंति राजंतआनतशिरःकुमुदस्ययस्यनंदात्मजायसबलायनमोनमस्ते २६ श्रीनंदनंदनस्तोत्रंप्रातरुत्थाययःपठेत् तन्नेत्रगोचरोयातिसानंदंनंदनंदनः २७ श्रीनारदउ० इतिप्रणम्यश्रीकृष्णंदुर्वासामुनिसत्तमः तंध्यायन्प्रजपन्प्रागाद्बदर्य्याश्रममुत्तमं २८ श्रीगर्गउ० इत्थंदेवर्षिवर्येणनारदेनमहात्मना कथितंकृष्णचरितंबहुलाश्वायधीमते २९ मयातेकथितंब्रह्मन्यशःकलिमलापहं चतुःपदार्थदंदिव्यंकिंभूयःश्रोतुमिच्छसि ३० शौनकउ० बहुलाश्वोमैथिलेंद्रःकिंपप्रच्छमहामुनिं नारदंज्ञानदंशांतंतन्मेब्रूहितपोधन ३१ श्रीगर्गउ० नारदंज्ञानदंनत्वामानदोमैथिलोनृपः पुनःपप्रच्छकृष्णस्यचरितंमंगलायनं ३२ श्रीबहुलाश्वउ० श्रीकृष्णोभगवान्साक्षात्परमानंदविग्रहः अपरंचकारकिंचित्रंचरित्रंवदमेप्रभो ३३ पूर्णावतारेश्चरितंकृतंवैमंगलायनं अपरंकिंतुकृष्णस्यपवित्रंकिमतःपरं ३४ श्रीनारदउ० साधुसाधुत्वयापृष्टंचरित्रंमंगलंहरेः तत्तेऽहंसंप्रवक्ष्यामिवृंदारण्येचयद्यशः ३५ इदंगोलोकखंडंचगुह्यंपरमाद्भुतं श्रीकृष्णेनप्रकथितंगोलोकेरासमंडले ३६ निकुंजेराधिकायैचराधामह्यंददाविदं मयातुभ्यंश्रावितंचदत्तंसर्वार्थदंपरं ३७ इदंपठतिविप्रस्तुसर्वशास्त्रार्थगोभवेत् श्रुत्वेदंचक्रवर्तीस्यात्क्षत्रियश्चंडविक्रमः ३८ वैश्योनिधिपतिर्भूयाच्छूद्रोमुच्येतबंधनात् निष्कामोयोपिजगतिजीवन्मुक्तःसजायते ३९ योनित्यंपठतेसम्यक्भक्तिभावसमन्वितः सगच्छेत्कृष्णचंद्रस्यगोलोकंप्रकृतेःपरं ४० इतिश्रीमद्ग०सं०गो०नारदब०भगवज्जन्मवर्णनेदुर्वाससोमायादर्शनं [illegible] ... नाम विंशोऽध्यायः २० श्रीराधाकृष्णार्पणमस्तु शुभंभवतु

श्रीगणेशायनमः श्रीसरस्वत्यैनमः कृष्णातीरेकोकिलाकेलिकीरेगुंजापुंजेदेवपुष्पादिकुंजे कंबुग्रीवौक्षिप्तबाहू
चलन्तौराधाकृष्णौमंगलंमेभवन्ताम् १ अज्ञानतिमिरान्धस्यज्ञानांजनशलाकया चक्षुरुन्मीलितंयेनतस्मैश्रीगु
रवेनमः २ श्रीनारदउवाच एकदोपद्रवंवीक्ष्यनन्दोनन्दान्सहायकान् वृषभानूपनंदांश्चवृषभानुवरांस्तथा ३
समाहूयपरान्वृद्धान्सभायान्तानुवाचह नन्दउवाच किंकर्तव्यन्तुवदतोत्पाताःसन्तिमहावने ४ नारदउवाच तेषां
श्रुत्वाथसन्नन्दोगोपोवृद्धोतिमन्त्रवित् अंकेनीत्वारामकृष्णौनन्दराजमुवाचह ५ सनन्दउवाच उत्थातव्यमितोस्मा
भिःसर्वैःपरिकरैःसह गन्तव्यञ्चान्यदेशेषुयत्रोत्पातानसन्तिहि ६ बालस्तेप्राणवत्कृष्णोजीवनंव्रजवासिनाम् व्रजे
धनंकुलेदीपोमोहनोबाललीलया ७ हाबक्याशकटेनापितृणावर्तेनबालकः मुक्तोयन्द्रुमपातेनह्युत्पातंकिमतःपरम्
८ तस्माद्वृंदावनंसर्वैर्गन्तव्यंबालकैःसह उत्पातेषुव्यतीतेषुपुनरागमनंकुरु ९ नन्दउवाच कतिक्रोशैर्विस्तृतंतद्वनं
वृन्दावनंव्रजे तल्लक्षणंतत्स्वचवदबुद्धिमतांवर १० सनन्दउवाच प्रागुदीच्यांबर्हिषदोदक्षिणस्यांयदोःपुरात् प
श्चिमायांशोणपुरान्माथुरंमंडलंविदुः ११ विंशद्योजनविस्तीर्णंसार्द्धंयद्योजनेनवै माथुरंमंडलन्दिव्यंव्रजमाहुर्मनीषिणः
१२ मथुरायांशौरिगृहेगर्गाचार्यमुखाच्छ्रुतम् माथुरंमंडलन्दिव्यंतीर्थराजेनपूजितम् १३ वनेभ्यस्तत्रसर्वेभ्योवनंवृ
न्दावनम्वरम् परिपूर्णतमस्यापिलीलाक्रीडंमनोहरम् १४ वैकुंठान्नापरोलोकोनभूतोनभविष्यति एकंवृन्दावनंना
मवैकुंठाच्चपरात्परम् १५ यत्रगोवर्द्धनोनामगिरिराजोविराजते कालिन्दीनिकटेयत्रपुलिनंमंगलायनम् १६ बृहत्सा
नुर्गिरिर्यत्रयत्रनन्दीश्वरोगिरिः क्रोशानांचचतुर्विंशद्विस्तृतैःकाननैर्वृतम् १७ पशव्यंगोपगोपीनांगवांसेव्यमनो
हरम् लताकुंजवृतंतद्वैवनंवृन्दावनंस्मृतम् १८ नन्दउवाच कदाव्रजोयंसनंदतीर्थराजेनपूजितः एतद्वदितुमि-

29

नांत्वंकृतस्तीर्थराड्मया किंतुस्वस्यगृहस्यापिनकृतोराट्त्वमेवहि ५० किन्त्वंमेमन्दिरंलिप्सुर्मत्तवद्भाषसेकथम् तीर्थ
राजगृहंगच्छशृणुवाक्यंशुभंचमे ५१ मथुरामंडलंसाक्षान्मन्दिरंमेपरात्परम् लोकत्रयात्परन्दिव्यंप्रलयेपिनसंहृतम् -
५२ सनन्दउवाच इतिश्रुत्वातीर्थराजोविस्मितोभूद्गतस्मयः आगत्यनत्वासम्पूज्यमाथुरंव्रजमंडलम् ५३ ततःप्र
दक्षिणीकृत्यस्वधामगतवान्पुनः धरायामानभंगार्थंपूर्वमेतत्प्रदर्शितम् मयातवाग्रेकथितंकिंभूयःश्रोतुमिच्छसि-
५४ नन्दउवाच धरायामानभंगार्थंकेनपूर्वंप्रदर्शितम् एतन्मेवदगोपेशमाथुरंव्रजमंडलम् ५५ सनन्दउवाच आ
दौवाराहकल्पेस्मिन्हरिर्वाराहरूपधृक् रसातलात्समुद्धृत्यगांबभौदंष्ट्रयाप्रभुः ५६ गच्छन्तंवारिवृन्देषुभगवन्तंर
मेश्वरम् दंष्ट्राग्रेशोभितापृथ्वीप्राहदेवंजनार्दनम् ५७ धरोवाच देवकुत्रस्थलेत्वंवैस्थापनांमेकरिष्यसि जलपूर्णं-
जगत्सर्वंदृश्यतेवदहेप्रभो ५८ वाराहउवाच यदावृक्षाःप्रदृश्याहिभवन्त्योद्गताजले तदातेस्थापनाभूयात्पश्यं-
न्तीगच्छभूरुहान् ५९ धरोवाच स्थावराणांतुरचनाममोपरिसमाश्रिता अन्यास्तिकिंवाधरणीरहंहिधारणामयि
६० सनन्दउवाच वदंतीत्थंददर्शाग्रेजलेवृक्षान्मनोहरान् वीक्ष्यपृथ्वीहरिंप्राहसर्वतोविगतस्मया ६१ धरोवाच -
देवकस्मिन्स्थलेवृक्षाःसन्तिह्येतेसपल्लवाः इदंमनसिमेचित्रंवदयज्ञपतेप्रभो ६२ वाराहउवाच माथुरंमंडलन्दिव्यंदृ
श्यतेग्रेनितंबिनि गोलोकभूमिसंयुक्तंप्रलयेपिनसंहृतम् ६३ सनन्दउवाच तच्छ्रुत्वाविस्मितापृथ्वीगतमानाबभूवह
तस्मान्नन्दमहाबाहोव्रजोयंसर्वतोधिकः ६४ श्रुत्वेदंव्रजमाहात्म्यंजीवन्मुक्तोभवेन्नरः तीर्थराजात्परंविद्धिमाथुरंव्रज-
मंडलम् ६५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीवृन्दावनखंडेनन्दसनन्दनसंवादेवृन्दावनागमनोद्योगवर्णनंनामप्रथमो-
ध्यायः १ नन्दउवाच हेसनंदमहाप्राज्ञसर्वज्ञोसिबहुश्रुतः व्रजमंडलमाहात्म्यंवदतस्तेमुखाच्छ्रुतम् १ गिरिर्गोवर्द्धनो

च्छामिपरंकौतूहलंहिमे १९ सनन्दउवाच शंखासुरोमहादैत्यःपुरानैमित्तिकेलये स्वपतोब्रह्मणःसोपिवेदधृक्दैत्यपुंग
वः २० जित्वादेवान्ब्रह्मलोकान्जित्वावेदानूगतोर्णवे गतेषुयदिवेदेषुदेवानांचगतम्बलम् २१ तदासाक्षाद्धरिःपूर्णोधृत्वा-
मात्स्यंवपुःपरम् नैमित्तिकलयांभोधौयुयुधेतेनयज्ञराट् २२ शूलंचिक्षेपहरयेशंखोदैत्योमहाबलः स्वचक्रेणहरिःसाक्षा
त्तच्छूलंशतधाकरोत् २३ हरिंतताडशिरसाशंखोविष्णुमुरस्थले तस्यमूर्द्धप्रहारेणनचचालपरात्परः २४ तदागदां
समादायमत्स्यरूपधरोहरिः पृष्ठेजघानतन्दैत्यंशंखरूपंमहाबलम् २५ गदाप्रहारव्यथितःकिंचिद्व्याकुलमानसः पु-
नरुत्थायसर्वेशंमुष्टिनासतताडह २६ तदाविष्णुःस्वचक्रेणसम्भृगंतच्छिरोदृढम् जहारकुपितःसाक्षाद्भगवान्कमलेक्षणः
२७ जित्वाशंखंदेववरैःसार्द्धंविष्णुर्व्रजेश्वर प्रयागमेत्यसहरिर्वेदांस्तान्ब्रह्मणेददौ २८ यज्ञंचकारविधिवत्सर्वैर्देवग-
णैःसह प्रयागंचसमाहूयतीर्थराजंचकारह २९ तत्साक्षादक्षयवटःकृतोलीलातपत्रवत् मुनिभानुसुतेतस्मिंश्चामरेस्ते
विरेजतुः ३० तदैवसर्वतीर्थानिजंबूद्वीपस्थितानिच नीत्वाबलिंसमाजग्मुस्तीर्थराजायधीमते ३१ तीर्थराजंचसम्पूज्यन-
त्वातीर्थानिसर्वतः स्वधामानिययुर्नन्दहरौदेवेगतेसति ३२ तदैवनारदःप्राप्तोमुनीन्द्रःकलहप्रियः सिंहासनेभ्राजमानंती
र्थराजमुवाचह ३३ श्रीनारदउवाच तीर्थैःप्रपूजितस्त्वंवैतीर्थराजमहातपः तुभ्यंचसर्वतीर्थानिमुख्यानीहबलिंददुः ३४
वृजाद्वृदावनादीनिनागतानीहतेपुरः तीर्थानांराजराजस्त्वंप्रमत्तैस्तैस्तिरस्कृतः ३५ सनन्दउवाच इतिप्रभाष्यतंसाक्षाद्
गतेदेवर्षिसत्तमे तीर्थराजस्तदाक्रुद्धोहरिलोकंजगामह ३६ नत्वाहरिंपरिक्रम्यपुरःस्थित्वाकृतांजलिः सर्वतीर्थैःपरिवृतःश्री
नाथंप्राहतीर्थराट् ३७ तीर्थराजउवाच हेदेवदेवप्राप्तोहंतीर्थराजस्त्वयाकृतः बलिंददुर्मेतीर्थानिमथुरामंडलंविना ३८ प्र-
मत्तैर्व्रजतीर्थैश्चतैरहन्तुतिरस्कृतः तस्मात्तुभ्यंचकथितंप्राप्तोऽहन्तवमन्दिरे ३९ श्रीभगवानुवाच धरायांसर्वतीर्था

तः दिव्यौषधिसमायुक्तः सदाजीवनदोनृणाम् २२ अथौतवान्तिकेप्राप्तः काशिस्थोहंमहामुनिः गोवर्द्धनंस्फुतन्देहिनान्यैर्मे-
त्रप्रयोजनम् २३ विश्वेश्वरस्यदेवस्यकाशीनाम्नामहापुरी यत्रपापीमृतःसद्यःपरंमोक्षंप्रयातिहि २४ यत्रगंगागतासाक्षाद्वि
श्वनाथोपियत्रवै तत्रैवंस्थापयिष्यामियत्रकोपिनपर्वतः २५ गोवर्द्धनेतवस्फत्तेलतावृक्षसमाकुले तस्मिंस्तपःकरिष्यामिजा
तोयंमेमनोरथः २६ सनन्दउवाच पुलस्त्यवचनंश्रुत्वास्वसुत स्नेहविह्वलः अश्रुपूर्णोद्रोणगिरिस्तंमुनिंवाक्यमब्रवीत् २७
द्रोणउवाच पुत्रस्नेहाकुलोहंवैपुत्रोमेयमतिप्रियः तेशापभयभीतोहंवदाम्येनंमहामुने २८ हेपुत्रगच्छमुनिनाभारतेकर्मकेशु-
भे अवर्ग्यंलभतेयत्रनृभिर्मोक्षमपिक्षणात् २९ गोवर्द्धनउवाच मुनेकथंमांनयसिलंबितंयोजनाष्टकम् योजनद्वयमुच्चांगं
पंचयोजनविस्तृतम् ३० पुलस्त्यउवाच उपविश्यकरेमेत्वंगच्छपुत्रयथासुखम् वाहयामिकरंत्वांवैयावत्काशीसमागतः-
३१ गोवर्द्धनउवाच मुनेयत्रस्थलेभूम्यांस्थापनांमेकरिष्यसि करिष्यामिनचोत्थानंतद्भूम्यांशपथोमम ३२ पुलस्त्यउवाच
अहमाशाल्मलिद्वीपान्मर्यादींकृत्यकोशलम् नस्थापनांकरिष्यामिसपथस्तेमयापथि ३३ सनन्दउवाच मुनेःकरतलेतस्मि
न्नारुरोहमहाचलः प्रणम्यपितरंद्रोणमश्रुपूर्णाकुलेक्षणः ३४ मुनिस्तंदक्षिणकरेधृत्वागच्छन्शनैःशनैः स्वतेजोदर्शय-
न्नृणांप्राप्तोभूद्व्रजमंडले ३५ जातिस्मरोगिरिस्तत्रप्राहेदंपथिचिन्तयन् परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् ३६
असंख्यब्रह्मांडपतिर्व्रजेऽत्रावतरिष्यति बाललीलाचकैशोरींचेष्टांगोपालबालकैः ३७ दानलीलांमानलीलांहरिरत्रक-
रिष्यति तस्मान्मयानगन्तव्यंभूमिश्चेयंकलिन्दजा ३८ गोलोकाद्राधयासार्द्धंश्रीकृष्णोत्रागमिष्यति कृतकृत्योभवि
ष्यामिकृत्वातद्दर्शनम्परम् ३९ इतिविचार्यमनसाभूरिभारंददौकरे तदामुनिश्चश्रान्तोभूद्विस्मृतपूर्वगतस्मृतिः ४० करादुत्ता
र्यतंशैलंनिधायव्रजमंडले लघुशंकाजपार्थीहिगतोभूद्भारपीडितः ४१ कृत्वाशौचंजलेस्नात्वापुलस्त्योमुनिसत्तमः-

नामतस्योत्पत्तिंचमेवद कस्मादेनंगिरिवरंगिरिराजंवदन्तिहि २ यमुनेयंनदीसाक्षात्कस्माल्लोकात्समागता तन्माहा-
त्म्यंचवदमेत्वमसिज्ञानिनांवर ३ सनंदउवाच एकदाहास्तिनपुरेभीष्मंधर्मभृतांवरम् पप्रच्छपांडुरिस्थितंजनानांचानुशृण्व
ताम् ४ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् असंख्यब्रह्मांडपतिर्गोलोकाधिपतिप्रभुः ५ भुवोभारावताराय
गच्छन्देवोजनार्दनः राधांप्राहप्रियेभीरुगच्छत्वमपिभूतले ६ राधोवाच यत्रवृन्दावनंनास्तिनयत्रयमुनानदी यत्रगो
वर्द्धनोनास्तितत्रमेनमनःसुखम् ७ सनंदउवाच वेदनागक्रोशभूमिंस्वधाम्नःश्रीहरिःस्वयम् गोवर्द्धनंचयमुनांप्रेषया
मासभूपरि ८ वेदनागक्रोशभूमिंसापिचात्रसमागता चतुर्विंशद्वनैर्युक्तासर्वलोकैश्चवन्दिता ९ भारतात्पश्चिमदिशि
शाल्मलीद्वीपमध्यतः गोवर्द्धनोजन्मलेभेपत्न्यान्द्रोणाचलस्यच १० गोवर्द्धनोपरिसुराःपुष्पवर्षंप्रचक्रिरे हिमालयसु
मेर्वाद्याःशैलाःसर्वेसमागताः ११ नत्वाप्रदक्षिणीकृत्यपूजांकृत्वाविधानतः गोवर्द्धनस्यपरमांस्तुतिंचक्रुर्महाद्रयः -
१२ शैलाऊचुः त्वंसाक्षात्कृष्णचन्द्रस्यपरिपूर्णतमस्यच गोलोकेगोगणैर्युक्तेगोपीगोपालसंयुते १३ त्वंहिगोवर्द्धनोना
मवृन्दारण्येविराजसे त्वन्नोगिरीणांसर्वेषांगिरिराजोसिसांप्रतम् १४ नमोवृन्दावनांकायतुभ्यंगोलोकमौलिने पूर्णब्रह्मा
तपत्रायनमोगोवर्द्धनायच १५ सनन्दउवाच इतिस्तुत्वाथगिरयोजग्मुःस्वंस्वंगृहन्ततः शैलोगिरिवरःसाक्षाद्गिरिराजइ
तिस्मृतः १६ एकदातीर्थयायीचपुलस्त्योमुनिसत्तमः द्रोणाचलसुतंश्याममगिरिंगोवर्द्धनंवरम् १७ माधवीलतिकापुष्पफ
लभारसमन्वितम् निर्झरैर्नादितशान्तंकन्दरामंगलायनम् १८ तपोयोग्यंरत्नमयंशतशृंगंमनोहरम् चित्रधातुविचित्रांगंस
टंकपक्षिसंकुलम् १९ मृगैःशाखामृगैर्व्याप्तंमयूरध्वनिमंडितम् मुक्तिप्रदंमुमुक्षूणांतंददर्शमहामुनिः २० तल्लिप्सुर्मुनिशार्दू
लोद्रोणपार्श्वसमागतः पूजितोद्रोणगिरिणापुलस्त्यःप्राहतंगिरिम् २१ पुलस्त्यउवाच हेद्रोणत्वंगिरीन्द्रोसिसर्वदेवैश्चपूजि

नासाक्षाच्छ्रीगंगायांविनिर्गता १० गंगातुप्रययौशैलंहिमवन्तंमहानदी कृष्णातुप्रययौशैलंकालिन्दंप्राप्यसायदा ११
कालिन्दीतिसमाख्याताकलिन्दप्रभवायदा कलिन्दगिरिसानूनांगंडशैलतटान्बहून् १२ भित्त्वालुठन्तीभूखण्डेकृष्णावे-
गवतीसती देशान्पुनन्तीकालिन्दीप्राप्तवान्खांडवेवने १३ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंवरमिच्छती धृत्वावपुःपरन्दिव्यं
तपस्तेपेकलिन्दजा १४ पित्राविनिर्गतेगेहेजलेद्यापिसमाश्रिता ततोवेगेनकालिन्दीप्राप्ताभूद्व्रजमंडले १५ वृन्दावनस-
मीपेचमथुरानिकटेशुभे श्रीमहावनपार्श्वेचसैकतेरमणस्थले १६ श्रीगोकुलेचयमुनायूथीभूत्वातिसुन्दरी श्रीकृष्ण
चन्द्रासार्थंनिजवासंचकारह १७ अथव्रजाद्व्रजन्तीसाव्रजविक्षेपविह्वला प्रेमानन्दाश्रुसंयुक्ताभूत्वापश्चिमवाहिनी
१८ ततस्त्रिवारंवेगेननत्वाथोव्रजमंडले देशान्पुनतीप्रययौप्रयागतीर्थसत्तमम् १९ पुनःश्रीगंगयासार्द्धंक्षीराब्धिंसा
जगामह देवाःसुवर्षपुष्पाणांचक्रुर्दिविजयध्वनिम् २० कृष्णाश्रीयमुनासाक्षात्कालिन्दीसरितांवरा समुद्रमेत्यश्री
गंगांप्राहगद्गदयागिरा २१ यमुनोवाच हेगंगेत्वन्तुधन्यासिसर्वब्रह्माण्डपावनी कृष्णपादाब्जसम्भूतासर्वलोकैकव
न्दिता २२ ऊर्द्ध्वंयामिहरेर्लोकंगच्छत्वमपिहेशुभे त्वत्समानंहिदिव्यंचनभूतन्नभविष्यति २३ सर्वतीर्थमयीगंगातस्मा
त्त्वांप्रणमाम्यहम् यत्किंचिद्वाप्रकथितंतत्तत्क्षमस्वसुमंगले २४ गंगोवाच हेकृष्णेत्वन्तुधन्यासिसर्वब्रह्माण्डपावनी
कृष्णवामांससम्भूतापरमानन्दरूपिणी २५ परिपूर्णतमासाक्षात्सर्वलोकैकवन्दिता परिपूर्णतमस्यापिश्रीकृष्ण-
स्यमहात्मनः २६ पट्टराज्ञींपरांकृष्णेकृष्णांत्वांप्रणमाम्यहम् तीर्थैर्देवैर्दुर्लभात्वंगोलोकेऽपिचदुर्घटा २७ अहंयास्या-
मिपातालंश्रीकृष्णस्याज्ञयाशुभे त्वद्वियोगातुराहंवैपानंकर्तुंनचक्षमा २८ यूथीभूत्वाभविष्यामिश्रीव्रजेरासमंडले यत्त्
किंचिन्मेप्रकथितंतत्क्षमस्वहरिप्रिये २९ सनन्दउवाच इत्थंपरस्परन्नत्वाह्नेनद्यौययतुर्द्रुतम् लोकान्पवित्रीकुर्वन्तीपा

उत्तिष्ठेतिमुनिःप्राहगिरिंगोवर्द्धनम्परम् ४२ नोत्थितंभूरिभागढ्यंकराभ्यान्तंमहामुनिः स्वतेजसाबलेनापिगृहीतुमुपच-
क्रमे ४३ मुनिनासंगृहीतोपिगिरिराजंगिरार्द्दया नचचालांगुलिंकिंचित्तदपिद्रोणनन्दनः ४४ पुलस्त्यउवाच गच्छग-
च्छगिरिश्रेष्ठभारंमाकुरुमाकुरु मयाज्ञातोसिरुष्टस्त्व मभिप्रायंवदाशक्रमे ४५ गोवर्द्धनउवाच मुनेत्रमेनदोषोस्तित्वया-
मेस्थापनाकृता करिष्यामिनचोत्थानंपूर्वमेशपथःकृतः ४६ सनन्दउवाच पुलस्त्योमुनिशार्दूलःक्रोधात्प्रचलितेन्द्रियः -
स्फुरदोष्ठोद्रोणपुत्रंशशापविगतोद्यमः ४७ पुलस्त्यउवाच गिरेत्वयातिधृष्टेननकृतोमेमनोरथः तस्मात्तुतिलमात्रंहिनि
त्यंत्वंक्षीणतांव्रज ४८ सनन्दउवाच काशींगतेपुलस्त्यर्षौत्वयंगोवर्द्धनोगिरिः नित्यंसंक्षीयतेनन्दतिलमात्रंदिनेदिने ४९ या
वद्भागीरथीगंगायावद्गोवर्द्धनोगिरिः तावत्कलेःप्रभावस्तुभविष्यतिनकर्हिचित् ५० गोवर्द्धनस्यप्रकटंचरित्रंनृणांमहापापह-
रंपवित्रम् मयातवाग्रेकथितंविचित्रंसुमुक्तिदंकोरुचिरन्नचित्रम् ५१ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीवृन्दावनखण्डेगि-
रिराजोत्पत्तिकथनन्नाम द्वितीयोऽध्यायः २ सनंदउवाच गोलोकेहरिणाऽऽज्ञप्ता कालिन्दीसरितांवरा कृष्णंप्रदक्षिणी-
कृत्यगन्तुमभ्युदिताभवत् १ तदेवविरजासाक्षाद्गंगाब्रह्मद्रवोद्भवा द्वेनद्यौयमुनायान्तुसम्प्रलीनेबभूवतुः २ परिपूर्णतमाकृष्णा
तस्मात्कृष्णस्यनन्दराट् परिपूर्णतमस्यापिपट्टराज्ञींविदुर्जनाः ३ ततोवेगेनमहताकालिन्दीसरितांवरा बिभेदविरजावेगंनि
कुंजद्वारनिर्गता ४ असंख्यब्रह्मांडचयंस्पृष्ट्वाब्रह्मद्रवंगता भिन्दन्तीतज्जलंदीर्घंस्ववेगेनमहानदी ५ वामपादांगुष्ठनखभिन्न
ब्रह्मांडमस्तके श्रीवामनस्यविवरेब्रह्मद्रवसमाकुले ६ तस्मिन्श्रीगंगयासार्द्धंप्रविष्टाभूत्सरिद्वरा वैकुण्ठंचाजितपदंसं-
प्राप्यध्रुवमंडले ७ ब्रह्मलोकमभिव्याप्यपतन्तीब्रह्ममंडलात् ततःसुराणांशतशोलोकाल्लोकंजगामह ८ ततःपपातवेगे
नसुमेरुगिरिमूर्द्धनि गिरिकूटानतिक्रम्यभित्वागंडशिलातटान् ९ सुमेरोर्दक्षिणदिशांगन्तुमभ्युदिताऽभवत् ततःश्रीयमु-

चारक्रीडनपरोगोपीनांप्रीतिमावहन् ११ अथवृन्दावनेराजन्सर्वगोपालसंमतौ बभूवतुर्वत्सपालौरामकृष्णौमनोहरौ १२ चारयामासतुर्वत्सान्ग्रामसीम्न्यथर्भकैःसह कालिन्दीनिकटेपुण्येपुलिनेरामकेशवौ १३ निकुंजेषुचकुंजेषुसंप्रलीनावितस्ततः रिंगमाणौचकुत्रापिनन्दतौचेरतुर्वने १४ किंकिणीजालसंयुक्तौसुंजन्मंजीरनूपुरौ पीतवासःपरिकरौ-हारकेयूरभूषितौ १५ क्षेपणैःक्षिपतौबालैर्वंशीवादनतत्परौ मुखेनकिंकिणीशब्दंकुर्वद्भिर्बालकैर्वृतौ १६ धावन्तौपक्षिभिश्छायांरेजतूरामकेशवौ मयूरपक्षसंयुक्तौपुष्पपल्लवभूषितौ १७ एकदावत्सवृन्देषुप्राप्तेवत्सासुरन्नृप कंसप्रणोदितंज्ञात्वाशनैस्तत्रजगामह १८ धावन्गोपेषुसर्वत्रलांगूलंचालयन्मुहुः दैत्यःपश्चिमपादाभ्यांहरिंसतंताडह १९ पलायितेषुबालेषुकृष्णस्तंपादयोर्द्वयोः गृहीत्वाभ्रामयित्वाथपातयामासभूतले २० पुनर्नीत्वाकराभ्यांतंकपित्थेप्राहिणोद्धरिः तदामृत्युगतेदैत्येकपित्थोपिमहाद्रुमः २१ कपित्थान्पातयामासतदद्भुतमिवाऽभवत् विस्मितेषुचबालेषुसाधुसाध्वितिवादिषु २२ दिविदेवाजयारावापुष्पवर्षांप्रचक्रिरे तद्दैत्यस्यमहज्ज्योतिःकृष्णेलीनंबभूवह २३ बहुलाश्वउवाच अहोपूर्वंसकृतकृत्कोयंवत्सासुरोमुने श्रीकृष्णेलीनतांप्राप्तःश्रीप्रपूर्णेपरात्परे २४ नारदउवाच मुरुपुत्रोमहादैत्यःप्रमीलोनामदेवजित् वसिष्ठस्याश्रमेप्राप्तोनन्दिनींगांददर्शह २५ तल्लिप्सुर्ब्राह्मणोभूत्वाययाचेगांमनोहराम् तूष्णींस्थितेगोरुवाचवसिष्ठेदिव्यदर्शने २६ नन्दिन्युवाच मुनीनांगांसमाहर्तुंभूत्वाविप्रःसमागतः दैत्योसिमुरुजस्तस्माद्गोवत्सोभवदुर्मते २७ श्रीनारदउवाच तदैववत्सरूपोभून्मुरुपुत्रोमहासुरः वसिष्ठंगांपरिक्रम्यनत्वात्राहीत्युवाचह २८ गौरुवाच द्वापरान्तेमहादैत्यवृन्दारण्येयदातव गोवत्सेषुगतस्यापितदामुक्तिर्भविष्यति २९ श्रीनारदउवाच परिपूर्णतमेसाक्षात्कृष्णेपतितपावने तस्माद्वत्सासुरोदैत्योलीनोभून्नहिविस्मयः ३० -

तालेस्वःसरिद्वता २९ सापिभोगवतीनाम्नाबभौभोगवतीवने यज्जलंसत्रिनयनःशेषोमूर्द्धविभर्त्तिहि ३१ अथकृ
ष्णास्ववेगेनभित्वासप्ताब्धिमंडलम् सप्तद्वीपमहीपृष्ठेलुठन्तीवेगवत्तरा ३२ गत्वास्वर्णमयीम्भूमिलोकालोकाचलंग
ता तत्सानुगंडशैलानांतरंभित्वाकलिन्दजा ३३ तन्मूर्द्धिचोत्पतिताशफरस्फुरावज्जलधारया उद्गच्छन्तीतदूर्द्ध्वंसाय
यौस्वर्गंतुनाकिनाम् ३४ आब्रह्मलोकंलोकांस्तानभिव्याप्यहरेःपदम् ब्रह्माण्डरंध्रंश्रीब्रह्मद्रवयुक्तसमेत्यसा ३५ पु
ष्पवर्षाप्रवर्षत्स्रदेवेषुप्रणतेषुच पुनःश्रीकृष्णगोलोकमारुरोहसरिद्वरा ३६ कलिन्दगिरिनन्दिनीनवचरित्रमेतच्छ्रुभं
श्रुतंचयदिपाठितंभुवितनोतिसन्मंगलम् जनोपियदिधारयेत्किलपठेच्चयोनित्यशःसयातिपरमम्पदंनिजनिकुंजली
लावृतम् ३७ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीवृन्दावनखण्डे नन्दसनन्दसंवादेकालिंद्यागमनवर्णनंनामतृती-
योऽध्यायः ३ श्रीनारदउवाच सनन्दस्यवचःश्रुत्वागन्तुंनन्दःसमुद्यतः सर्वैर्गोपगणैःसार्द्धंमुदितोभून्महाम
नाः १ यशोदयाचरोहिण्यासर्वगोपीगणैःसह अश्वैरथैर्वीरजनैर्मण्डितोविप्रमंडलैः २ गोभिश्चशकटैर्युक्तोवृन्दैर्बा-
लैस्तथाऽनुगैः गायकैर्गीयमानश्चशंखदुंदुभिनिःस्वनैः ३ पुत्राभ्यांरामकृष्णाभ्यांनन्दराजोमहामतिः रथमारुह्य
हेराजन्वनंवृन्दावनंययौ ४ वृषभानुवरोगोपोगजमारुह्यभार्यया अंकेनीत्वासुतांराधांगीयमानश्चगायकैः ५
मृदंगतालवीणानांवेणूनांकलनिःस्वनैः गोपालगोगणैःसार्द्धंवृन्दारण्यंजगामह ६ उपनन्दास्तथानन्दास्तथाषट्
वृषभानवः सर्वैःपरिकरैःसार्द्धंजग्मुर्वृन्दाकंवनम् ७ वृन्दावनेसंप्रविश्यगोपाःसर्वेमहानुगाः घोषान्विधायव-
सतीर्वासंचक्रुरितस्ततः ८ सभामंडपसंयुक्तंसद्दुर्गंपरिखायुतम् चतुर्योजनविस्तीर्णंसप्तद्वारसमन्वितम् ९ स
रोवरैःपरिवृतंराजमार्गंमनोहरम् सहस्रकुंजंचपुरंवृषभानुरचीक्लृपत् १० श्रीकृष्णोनन्दनगरेवृषभानुपुरेर्भकैः च

49

रमन्दहासंभ्रूमंडलैर्मोहितकामराशिम् ३० व्रजांगनायूथपतिंव्रजेश्वरंसुसेवितंचामरछत्रकोटिभिः विज्ञायकृ-
ष्णंह्यतिकोमलंशिशुंगोपींसमाहर्तुमलंमनोकरोत् ३१ बहुलाश्वउवाच किंबभूवततोरासेशंखचूडेसमागते ए
तन्मेब्रूहिविप्रेन्द्रत्वंपरावरवित्तम ३२ नारदउवाच व्याघ्राननंकृष्णवर्णंतालवृक्षदशोच्छ्रितम् भयंकरंललज्जि
ह्वंदृष्ट्वागोप्योतितत्रसुः ३३ दुद्रुवुःसर्वतोगोप्योमहान्कोलाहलोऽभवत् हाहाकारस्तदैवासीच्छंखचूडेसमागते-
३४ शतचन्द्राननांगोपींगृहीत्वायक्षराट्खलः दुद्रावाभूत्तरामाशान्निःशंकःकामपीडितः ३५ रुदन्तींकृष्णकृ
ष्णेतिक्रोशन्तींभयविह्वलाम् तमन्वधावच्छ्रीकृष्णःशालहस्तोरुषाभृशम् ३६ यक्षोवीक्ष्यतमायान्तंकृतान्त
मिवदुर्जयम् गोपिंत्यक्त्वाजीवितेच्छुःप्राद्रवद्भयविह्वलः ३७ यत्रयत्रगतोधावन्शंखचूडोमहाखलः तत्रतत्र
गतःकृष्णःशालहस्तोभृशंरुषा ३८ हिमाचलतटंप्राप्तःशालमुद्यम्ययक्षराट् तस्थौतत्सन्मुखेराजन्युद्धकामो
विशेषतः ३९ तस्मैचिक्षेपभगवान्शालवृक्षंभुजोजसा तेनघातेनपतितोवृक्षोवातहतोयथा ४० पुनरुत्थाय
वैकुण्ठंमुष्टिनातंजघानह जगर्जसहसादुष्टोनादयन्मण्डलन्दिशाम् ४१ गृहीत्वातंहरिर्दोर्भ्यांभ्रामयित्वाभुजो
जसा पातयामासभूपृष्ठेवातःपद्ममिवोद्धृतम् ४२ शंखचूडस्तंगृहीत्वापोथयामासभूतले एवंयुद्धेसंप्रवृत्तेच-
कम्पेभूमिमण्डलम् ४३ मुष्टिनातच्छिरश्छित्वातस्माच्चूडामणिंहरिः जग्राहमाधवःसाक्षात्सुकृतीशेवधिंयथा-
४४ तज्ज्योतिर्निर्गतन्दीर्घन्द्योतयन्मंडलन्दिशाम् श्रीदाम्निश्रीकृष्णसखौलीनंजातंव्रजेनृप ४५ एवंहत्वाशंखचू
डंभगवान्मधुसूदनः मणिपाणिःपुनःशीघ्रमाययौरासमण्डलम् ४६ चन्द्राननायैचमणिंदत्वातन्दीनवत्सलः पु
नर्गोपीगणैःसार्द्धंरासंचक्रेहरिःस्वयम् ४७ इतिश्रीमद्ग० वृन्दा० रासक्रीडायांशंखचूडवधोनामविंशोऽध्यायः २०

युधेरंगभूमौविदेहराट् ११ तयोश्चगदयायुद्धंघोररूपंबभूवह ताडनाच्चतदाशब्दंकालमेघतडिद्ध्वनिः १२ शि-
शुभातेरंगमध्येमल्लौनादृष्येनदाविव इभेन्द्राविवदीर्घांगौमृगेन्द्राविवचोद्भटौ १३ द्वयोश्चयुद्धतोराजन्परस्परजिगीष
या विस्फुलिंगान्क्षरन्त्यौद्वेगदेचूर्णीबभूवतुः १४ कंसःप्रकुपितयक्षंमुष्टिनाभिजघानह शंखचूडोपितंकंसंमुष्टि
नातन्ततांडच १५ मुष्टामुष्टित्तयोरासीद्दिनानांसप्तविंशतिः द्वयोरक्षीणबलयोर्विस्मयंगतयोस्ततः १६ शंखचूडं-
संगृहीत्वाकंसोदैत्याधिपोबली बलाच्चिक्षेपसहसाव्योम्निशतयोजनम् १७ शंखचूडःप्रपतितः किंचिद्व्याकु-
लमानसः कंसंगृहीत्वानभसिचिक्षेपायुतयोजनम् १८ आकाशात्पतितः कंसः किंचिद्व्याकुलमानसः यक्षं
गृहीत्वासहसापातयामासभूतले १९ शंखचूडस्तंगृहीत्वापोथयामासभूतले एवंयुद्धेसम्प्रवृत्तेचकंपेभूमिम
ण्डलम् २० मुनीन्द्रःसर्ववित्साक्षाद्गर्गाचार्यःसमागतः रंगेप्रवन्दितस्ताभ्यांकंसंप्राहोर्जयागिरा २१ श्रीगर्गउ०
युद्धमाकुरुराजेन्द्रविफलोयंरणोत्रवै त्वत्समानोह्ययंवीरः शंखचूडोमहाबलः २२ तवमुष्टिप्रहारेणभृशमैराव
तोगजः जानुभ्यान्धरणीस्पृष्ट्वाकश्मलंपरमंययौ २३ अन्येपिबलिनोदैत्यामुष्टिनातेमृतिंगताः शंखचूडोन-
पतितः सन्देहोनास्तितच्छृणु २४ परिपूर्णतमोयोवैसोपित्वांघातयिष्यति तथैनंशंखचूडाख्यंशिवस्यापिवरा
र्जितम् २५ तस्मात्प्रेमप्रकर्तव्यंशंखचूडेयदूद्वह यक्षराट्चत्वयाकंसेकर्तव्यंप्रेमनिश्चितम् २६ नारदउवाच
गर्गेणोक्तौतदातौद्वौमिलित्वाथपरस्परम् परमंचक्रतुः प्रीतिंशंखचूड यदूद्वहौ २७ अथकंसमनुज्ञाप्यगृहंग
न्तुंसमुद्यतः गच्छन्मार्गेशृणोद्रात्रौरासगानंमनोहरम् २८ तालशब्दानुसारेणसंप्राप्तोरासमण्डले रासेश्व-
र्यासमंरासेपश्यद्रासेश्वरंहरिम् २९ श्रीराधयालंकृतवामबाहुंस्वच्छन्दवक्रीकृतदक्षिणांघ्रिम् वंशीधरंसुन्द

दनन्दनः चर्चितंताम्बूलमर्द्धंनीत्वासद्योथगोपिकाः २० चर्वयन्त्यःसुगन्धाढ्यमहोतासांतपोमहत् काश्चिच्छ्या मकपोलेषुद्यंगुलेनशनैःशनैः २१ हसन्त्यस्ताडयन्त्यस्ताःकदंबेषुबलात्पृथक् पुंवेषनायकाःकाश्चिन्मौलिकुंड-लमण्डिताः २२ नृत्यन्तःकृष्णपुरतःश्रीकृष्णइवमैथिल राधावेषधरागोप्यःशतचन्द्राननप्रभाः २३ तोषयन्त्य-श्वराध. नातथाराधापतिजगुः काश्चित्तासात्विकैर्भावैःसंयुक्ताःप्रेमविह्वलाः २४ योगीवच्चास्थिताभूमौपर मानन्दसंप्लुताः काश्चिल्लतासुवृक्षेषुभूम्यांवैविदिशासुच २५ पश्यन्त्यःश्रीपतिंदेवस्वस्मिन्वामौनमास्थिताः ए वंरासेगोपवध्वःसर्वाःपूर्णमनोरथाः २६ बभूवुरत्यगोविन्दंसर्वेशंभक्तवत्सलम् यत्प्रसादस्तुगोपीनांप्राप्तैराज-न्महामते २७ ज्ञानिनामपिनास्त्येवंकर्मिणान्तुकुतश्चसः एवंश्रीकृष्णचन्द्रस्यहरेराधापतेःप्रभोः २८ रासेचित्रं यद्बभूवतच्छृणुष्वमहामते मुनीन्द्रश्चासुरिर्नामश्रीकृष्णेष्टोमहातपाः २९ नारदाद्रौतपस्तेपेहरिर्ध्यानपरायणः -हृत्पुंडरीकेश्रीकृष्णंज्योतिर्मण्डलमास्थितम् ३० मनोज्ञराधयासार्द्धंनित्यंध्यानेददर्शह एकदाध्यानमध्येतुरात्रौ कृष्णोनचागतः ३१ वारंवारंकृतन्ध्यानंजातखिन्नोमहामुनिः ध्यानादुत्थायसमुनिःकृष्णदर्शनलालसः ३२ ना रायणाश्रमंप्रागाद्बदरीखण्डमंडितम् नददर्शहरिंदेवंनरनारायणंमुनिः ३३ तदातिविस्मितोविप्रोलोकालोकंगि-रिंययौ सहस्रशिरसंदेवनददर्शसतत्रवै ३४ पप्रच्छपार्षदांस्तत्रक्कगतोभगवानितः नविद्मोभोवयंचोक्तोमु-निःखिन्नमनास्तदा ३५ श्वेतद्वीपंययौदिव्यंक्षीरसागरशोभितम् तत्रापिशेषपर्यंकेनददर्शहरिंपुनः ३६ तदा मुनिःखिन्नमनाःप्रेम्णापुलकिताननः पप्रच्छपार्षदांस्तत्रक्कगतोभगवानितः ३७ नविद्मोभोवयंचोक्तोमुनि-श्चिन्तापरायणः किंकरोमिक्कगच्छामिदर्शनंतत्कथंभवेत् ३८ एवंब्रुवन्मनोयायीवैकुंठंप्राप्तवांस्ततः नापश्य-

नारदउवाच अथगोपीगणैःसार्द्धंपश्यन्श्रीयमुनातटम् विहर्तुमाययौकृष्णोवृन्दारण्यंमनोहरम् १ वृन्दावनेचौ-
षधयोलीलाजाताहरेर्वरात् ताःसर्वाश्चांगनाभूत्वायूथीभूत्वासमाययुः २ लतागोपीसमूहेनचित्रवर्णेनमैथिल रे
मेवृन्दावनेराजन्हरिर्वृन्दावनेश्वरः ३ कलिन्दनन्दिनीतीरेकदम्बाच्छादितेशुभे त्रिविधेनसमीरेणसर्वतःसुरभीकृते
४ विलसत्पुलिनेरम्येवंशीवटविराजते स्थितोऽभूद्राधयासार्द्धंरासश्रमसमन्वितः ५ वीणातालमृदंगादिमुरय
ष्टियुतानिच वादित्राण्यवरेनेदुःसुरैर्गोपीगणैःसह ६ देवेपुपुष्पवर्षत्सुजयध्वनियुतेषुच तोषयन्त्योहरिंगोप्योजगु
स्तद्यशउत्तमम् ७ काश्चिद्वैमेघमल्लारंदीपकंचतथापरा मालकोशंभैरवंचश्रीरागंचतथैवच ८ हिंडोलंजगुःका-
श्चिद्राजन्सप्तस्वरैःसह काश्चित्तासांप्रमुग्धाश्चकाश्चिन्मुग्धाःस्त्रियोनृप ९ काश्चित्प्रौढाःप्रेमपराःश्रीकृष्णेल-
ग्नमानसाः जारधर्मेणगोविन्दंकाश्चिद्गोप्योभजन्तिहि १० काश्चिच्छ्रीकृष्णसहिताःकन्दुकक्रीडनेरताः काश्चित्तु
प्रेम्णाहरिणाक्रीडांचक्रुःपरस्परम् ११ काश्चिल्लतासुधावन्त्यःक्वणन्नूपुरमेखलाः काश्चित्पिबन्तिसततंबलात्कृ-
ष्णाधरामृतम् १२ काश्चिद्भुजाभ्यांश्रीकृष्णंयोगिनामपिदुर्लभम् संगृहीत्वामहस्याराच्चक्रुरालिंगनमहत् १३-
मनोज्ञोयदुराजाचगोपीनांभगवान्हरिः काश्मीरमुद्रितोरेमेवनेवृन्दावनेश्वरः १४ काश्चिद्वीणांवादयन्त्यःसमंवंशी
धरेणवै काश्चिन्मृदंगंवादयन्त्योगायन्त्योभगवद्गुणम् १५ काश्चिद्वैमधुरंतालंताडयन्त्योहरेःपुरः मुरयष्टिंसंगृही-
त्वाहरिणामाधवीतले १६ गायन्त्यःसुस्थिराभूमौविस्मृत्यजगतःसुरवम् काश्चिल्लतासुश्रीकृष्णभुजेबाहुन्निधाय
च १७ वृन्दावनस्यपश्यन्त्योशोभाराजन्नितस्ततः तालजालैःसंवलितंगोपीनांहारसंचयम् १८ पृथक्चकार
गोविन्दःस्पृष्ट्वातासामुरःस्थलम् गोपीनांनासिकामुक्तावलिन्तंकुंतलंस्वयम् १९ शनैःशनैःशोभनन्तच्च केश्यीनं

तावाहुर्नृपशार्दूलमार्गस्थाद्वारपालिकाः ४ द्वारपालिकाऊचुः सर्वतोवृन्दकारण्यंकोटिशःकोटिशोवयम् रा
सरक्षांसदाकुर्मोन्यस्ताकृष्णेनभोद्विजो ५ एकोस्तिपुरुषःकृष्णोनिर्जनेरासमण्डले अन्योनयातिरहसिगो
पीयूथंविनाक्वचित् ६ चेद्दिदृक्षूयुवातस्यस्नानंमानसरोवरे कुरुतंतत्रगोपीत्वंप्राप्याशुव्रजतंमुनी ७ नारद-
उवाच इत्युक्तौतौमुनिशिवौस्नात्वामानसरोवरे गोपीत्वम्प्राप्यसहसाजग्मतूरासमण्डले ८ सौवर्णप्रख
चित्पद्मरागभूमिमनोहरे माधवीलतिकावृन्दकदम्बाच्छादितेशुभे ९ वसन्तचन्द्रकौमुद्याप्रदीप्तेसर्व-
कौशले यमुनारत्नसोपानतोलिकाभिर्विराजिते १० मयूरहंसदात्यूहकोकिलैःपूजितेपरे यमुनानिलुनी-
लैजन्तरुपल्लवशोभिते ११ सभामण्डपवीथीभिःप्राङ्गणस्तम्भपङ्क्तिभिः पतत्पताकैर्दिव्याभैःसौवर्णैः-
कलशैर्वृते १२ श्वेतारुणैःपुष्पसंघैःपुष्पमन्दिरवर्त्मभिः अलिकोलाहलैर्व्याप्तेवादित्रमधुरध्वनेः १३ स
हस्रदलपद्मानांवायुनामन्दगामिनि शीतलेनसुपुण्येनसर्वतःसुरभीकृते १४ तस्मिन्निकुंजेश्रीकृष्णंको
टिचन्द्रप्रकाशया पद्मिन्याहंसगामिन्याराधयासमलंकृतम् १५ स्त्रीरत्नैरावृतंशश्वद्रासमण्डलमध्यगम्
कोटिमन्मथलावण्यंश्यामसुन्दरविग्रहम् १६ वंशीधरम्पीतपटंवेत्रपाणिंमनोहरम् श्रीवत्सांककौस्तुभिनं
वनमालाविराजितम् १७ क्वणन्नूपुरमंजीरकांचिकेयूरभूषितम् हारकंकणबालार्ककुण्डलद्वयमण्डितम्-
१८ कोटिचन्द्रप्रतीकाशंमौलिनंनन्दनन्दनम् दानदक्षैःकटाक्षैश्चहरन्तंयोषितांमनः १९ दूरादपश्यतांरा
जन्नासुरीशौकृतांजली गोपीजनानांसर्वेषांपश्यतान्नृपसत्तम २० नत्वाश्रीकृष्णपादाब्जमूचतुर्हर्षवि
ह्वलौ द्वावूचतुः कृष्णकृष्णमहायोगिन्देवदेवजगत्पते २१ पुण्डरीकाक्षगोविन्दगरुडध्वजतेनमः-

५०

51

त्तत्रदेवेशंरमांवैकुण्ठमाविशत् ३९ नद्दष्टस्तत्रभक्तेषु मुनिनाऽसुरिणानृप ततोमुनीन्द्रोयोगीन्द्रोगोलोकंस
जगामह ४० वृन्दावनेनिकुंजेपिनददर्शपरात्परम् तदामुनिःखिन्नमनाःश्रीकृष्णविरहातुरः ४१ पप्रच्छपार्ष-
दास्तत्रक्वगतोभगवानितः ऊचुस्तत्पार्षदागोपावामनाण्डेमनोहरे ४२ पृश्निगर्भायत्रजातस्तत्रैवभगवान्स्वयम्
इत्युक्तआसुरिस्तस्मादस्मिन्नण्डेसमागतः ४३ हरिंत्वपश्यन्नचलन्कैलासेप्राप्तवान्मुनिः तत्रस्थितंमहा
देवंकृष्णध्यानपरायणम् ४४ नत्वापप्रच्छतद्वार्त्तांखिन्नचेतामहामुनिः आसुरिरुवाच भगवन्सर्वब्र-
ह्माण्डमयादृष्टमितस्ततः ४५ आवैकुण्ठाच्चगोलोकाद्भ्रमतातद्दिदृक्षुणा कुत्रापिदेवदेवस्यदर्शनन्नबभू-
वमे ४६ कुत्रास्तेभगवान्ब्रूहिसर्वविदांवर श्रीमहादेवउवाच धन्यस्त्वमासुरेब्रह्मन्कृष्णभक्तोस्यहैतुकः-
४७ दिदृक्षुणात्वयायासंकृतंवेद्मिमहामुने कर्मेन्द्रियाणीहयथारसादींस्तथासकामामुनयःस्मरवंयत् मना
न्नजानन्तिजनैरपेक्ष्यंगूढम्परंनिर्गुणलक्षणन्तत् ४८ हंसंमुनिन्दुःखगतंमहोदधौयःसर्वतोमोचयितुंगतस्त्व-
रम् सोद्यैववृन्दाविपिनेसखीजनैःकरोतिरासंरसिकेश्वरःस्वयम् ४९ षाण्मासिकीचाद्यकृतानिशीथिनीस्व-
माययादेववरेणभोमुने अहंगमिष्यामितदेवद्रष्टुन्त्वमेवगच्छाशुमनोरथंयथा ५० इतिश्रीमद्गर्गाचार्यसंहि
तायांवृन्दावनखण्डेश्रीनारदबहुलाश्वसंवादेरासक्रीडायामासुर्युपाख्यानन्नामैकविंशोऽध्यायः २१ -
श्रीनारदउवाच एवंविचिन्त्यमनसाशिवोवासुरिणासह तौकृष्णदर्शनार्थायजग्मतुर्व्रजमण्डलम् १ दिव्य
द्रुमलताकुंजतोलिकापुंजशोभिताम् पश्यन्तौतौदिव्यभूमिंकालिन्दीनिकटेगतौ २ गोलोकवासिन्योनार्यो
वेत्रहस्तामहाबलाः चक्रुर्बलात्तन्निषेधंमार्गस्थद्वारपालिकाः ३ तावूचतुश्चागतौस्वःकृष्णदर्शनलालसौ -

गांवृषभानुसुतात्वरम् ३६ एवंश्रीकृष्णचन्द्रस्यरासाख्यानंमनोहरम् सर्वपापहरम्पुण्यंकामदंमंगलायन
म् ३७ त्रिवर्गदंजनानांतुमुमुक्षूणांसुमुक्तिदम् मयातवाग्रेकथितंकिम्भूयः श्रोतुमिच्छसि ३८ इति-
श्रीमद्गर्गाचार्यसंहितायांवृन्दावनखण्डेरासक्रीडानामद्वाविंशोऽध्यायः २२ बहुलाश्वउवाच अघा
सुरादिदैत्यानांज्योतिः कृष्णेसमाविशत् श्रीदाम्निशंखचूडस्यकस्माल्लीनम्बभूवह १ एतद्वदमहाबुद्धेत्वं
परावरविदुत्तम अहोश्रीकृष्णचन्द्रस्यचरितम्परमाद्भुतम् २ नारदउवाच पुरागोलोकवृत्तान्तंनारायण
मुखाच्छ्रुतम् सर्वपापहरम्पुण्यंशृणुराजन्महामते ३ राधाश्रीर्विरजाभूश्चतिस्रः पत्न्योऽभवन्हरेः तासां
राधाप्रियातीवश्रीकृष्णस्यमहात्मनः ४ राधिकासमयाराजन्कोटिचन्द्रप्रकाशया कुंजेविरजयारेमेएका
न्तेचैकदाप्रभुः ५ सपत्नीसहितंकृष्णंराधाश्रुत्वासखीमुखात् अतीवविमनाजातासपत्नीसौख्यदुःखि
ता ६ शतयोजनविस्तारंशतयोजनमूर्द्धगम् कोट्याश्विनीसमायुक्तंकोटिसूर्यसमप्रभम् ७ विचित्रर-
त्नसौवर्णमुक्तादामविलंबितम् पताकाहैमकलशैः कोटिभिर्मण्डितंरथम् ८ समारुह्यसखीनांसावेत्रह-
स्तैर्दशार्बुदैः हरिंद्रष्टुंजगामाशुश्रीराधाभगवत्प्रिया ९ तन्निकुंजेद्वारपालंश्रीदामानंमहाबलम् हरिन्यस्तं
समालोक्यतन्निर्भर्त्स्यसखीजनैः १० वेत्रैः सन्ताड्यसहसाद्वारिगन्तुंसमुद्यता सखीकोलाहलंश्रुत्वाहरि-
रन्तरधीयत ११ राधाभयाच्चविरजानदीभूत्वावहत्तदा कोटियोजनमायामंगोलोकंसहसानदी १२ सह-
साकुण्डलीकृत्वाशुशुभेब्धिरिवावनिम् रत्नपुष्पैर्विचित्रांगायथोष्णिङ्मुद्रितातथा १३ हरिंगतंतंविज्ञायन-
दीभूतांचतांतथा आलोक्यतन्निकुंजंचस्वकुंजंराधिकाययौ १४ अथकृष्णोनदीभूतांविरजांविरजांवराम्





52

जनार्दनजगन्नाथपद्मनाभत्रिविक्रम दामोदरहृषीकेशवासुदेवनमोस्तुते २२ अद्यैवदेवपरिपूर्णतमस्त्वसाक्षा
द्भूभूरिभारहरणायसतांशुभाय प्राप्तोऽसिनन्दभवनेपरतःपरस्त्वंकृत्वाहिसर्वनिजलोकमशेषशून्यम् २३ अं
शांशकांशकलाभिरुताभिरामंवेशप्रपूर्णनिचयाभिरतीवयुक्तः विश्वंबिभर्षिरससरासमलंकरोषिवृन्दावनं
चपरिपूर्णतमःस्वयन्त्वम् २४ गोलोकनाथगिरिराजपतेपरेशवृन्दावनेशकृतनित्यविहारलील राधापते
व्रजवधूजनगीतकीर्तेगोविन्दगोकुलपतेकिलतेजयोऽस्तु २५ श्रीमन्निकुंजलतिकाकुसुमाकरस्त्वंश्रीराधि
काहृदयकण्ठविभूषणस्त्वम् श्रीरासमण्डलपतिर्व्रजमण्डलेशोब्रह्माण्डमण्डलमहीपरिपालकोसि २६-
नारदउवाच तदाप्रसन्नोभगवान्राधयासहितोहरिः मन्दस्मितोमुनीप्राहमेघगंभीरयागिरा २७-
श्रीभगवानुवाच षष्टिवर्षसहस्राणियुवयोस्तपतोस्तपः मद्दर्शनंतेनजातंसर्वतोनैरपेक्ष्ययोः २८ निष्कि
चनोयःशान्तश्चाजातशत्रुःसमत्सरवा तस्माद्युवाभ्यांमनसाव्रियतामीप्सितोवरः २९ शिवासुरीऊचतुः
नमोस्तुभूमन्युवयोःपदाब्जेसदैववृन्दावनमध्यवास नरोचतेन्योन्यमतस्त्वदंघ्रेर्नमोयुवाभ्यांहरिराधिका-
भ्याम् ३० श्रीनारदउवाच तथास्तुचोक्त्वाभगवान्वृन्दारण्येमनोहरे कालिन्दीनिकटेराजन्रासमण्ड
लमण्डिते ३१ निकुंजपार्श्वेपुलिनेवंशीवटसमीपतः शिवोपिवासुरिर्मुनिर्नित्यंवासंचकारह ३२ अथ
कृष्णोरासलीलांचक्रेपद्माकरेवने पतत्सुगन्धिरजसिगोपीभिर्भ्रमराकुले ३३ एवंषाण्मासिकीरात्रिःकृ-
ताकृष्णेनमैथिल गोपीनांरासलीलायांव्यतीताक्षणवत्सुखैः ३४ अरुणोदयवेलायांस्वगृहान्व्रजयोषि
तः यूथीभूत्वाययूराजन्सर्वाःपूर्णमनोरथाः ३५ श्रीनन्दमन्दिरंसाक्षात्प्रययौनन्दनन्दनः वृषभानुपुरंप्रा

शक्तीः कर्तुंशक्तः परात्परः तंविनिन्दसिराधेत्वंमानंमाकुरुमाकुरु ३३ राधोवाच हेमूढपितरंस्तुत्वामातरंमांविनन्दसि राक्षसोभवदुर्बुद्धेगोलोकाच्चबहिर्भव ३४ श्रीदामोवाच अनुकूलेनकृष्णेनजातंमानंशुभेतव तस्माद्भुविपरात्कृष्णात्परिपूर्णतमात्प्रभोः ३५ शतवर्षंतेवियोगोभविष्यतिनसंशयः नारदउवाच एवम्परस्परंशापात्स्वकृताद्भयभीतयोः अतीवचिंतांगतयोराविरासीत्स्वयम्प्रभुः ३६ श्रीभगवानुवाच वचनंवैस्वनिगमंदूरीकर्तुंक्षमोऽस्म्यहम् भक्तानांवचनंराधेदूरीकर्तुंनचक्षमः ३७ माशोचंकुरुकल्याणिवरंमेशृणुराधिके मासंमासंवियोगतेदर्शनंमेभविष्यति ३८ भुवोभारावतारायकल्पेवाराहसंज्ञके भक्तानांदर्शनंदातुंगमिष्यामित्वयासह ३९ श्रीदामन्शृणुमेवाक्यमंशेनत्वंसुरोभव वैवस्वतान्तरेरासेहेलनंमेकरिष्यसि ४० मद्धस्तेनचतेमृत्युर्भविष्यतिनसंशयः पुनःस्वविग्रहम्पूर्वम्प्राप्स्यसित्वंवरान्मम ४१ नारदउवाच एवंशापेनश्रीदामापुरापुण्यजनालये सुधनस्यगृहेजन्मलेभेराजन्महातपाः ४२ शंखचूडइतिख्यातोधनदानुचरोऽभवत् तस्माच्छ्रीदाम्नितज्ज्योतिर्लीनंजातंविदेहराट् ४३ स्वात्मारामोलीलयासर्वकार्यंस्वस्मिन्धाम्नित्वद्वितीयःकरोति यःसर्वेशःसर्वरूपोमहात्माचित्रंनेदंनोनमिकृष्णायतस्मै ४४ इदंमयातेकथितम्मनोहरंवैदेहवृन्दावनखण्डमग्रतः शृणोतिचैतच्चरितंनरोवरःपरम्पदम्पुण्यतमम्प्रयातिसः ४५ इतिश्रीमद्गर्गाचार्यसंहितायांवृन्दावनखण्डेश्रीनारदबहुलाश्वसंवादेशंखचूडोपाख्याननामत्रयोविंशोऽध्यायः २३ इतिवृन्दावनखण्डःसमाप्तः श्रीरुक्मिणीरमणार्पणमस्तु शुभम्भवतु-

सविग्रहांचकाराशुस्ववरेणनृपेश्वरः १५ पुनर्विरजयासार्द्धंविरजातीरजेवने निकुंजवृन्दकारण्येचक्रेरासंह
रिःस्वयम् १६ विरजायांससप्तसुताबभूवुःकृष्णतेजसा निकुंजेतेत्वलंचक्रुःशिशवोबाललीलया १७ ए
कदातैःकलिरभूल्लघुर्ज्येष्ठैश्चताडितः पलायमानोभयभृन्मातुःक्रोडेजगामह १८ तल्लालनंसमारेभेसमा
श्वास्यसुतंसती तदावैभगवान्साक्षात्तत्रैवान्तरधीयत १९ रुषासुतंसशापेयंश्रीकृष्णविरहातुरा त्वं
जलम्भवदुर्बुद्धेकृष्णविच्छेदकारकः २० कदापित्वज्जलंमर्त्यानपिबंतुकदाचन ज्येष्ठान्शशापव्रजतमेदि
नीकलिकारकाः २१ जलरूपाःपृथग्यानानसमेताभविष्यथ नैमित्तिकंचभवतांमेलनंस्यात्सदालये २२-
नारदउवाच इत्थंतेमातृशापेनधरणींतेसमागताः प्रियव्रतरथांगानांपरिखास्कसमास्थिताः २३ लवणे
क्षुसुरासर्पिर्दधिदुग्धजलार्णवाः बभूवुःसप्ततेराजन्नक्षोभ्याश्चदुरत्ययाः २४ दुर्विगाह्याश्चगंभीराञ्चायाम
लक्षयोजनात् द्विगुणंद्विगुणंजातंद्वीपंद्वीपेपृथक्पृथक् २५ अथपुत्रेषुयातेषुपुत्रस्नेहातिविह्वला स्वप्रियं
ताविरहणीमित्यकृष्णाचरन्ददौ २६ कदानतेमविच्छेदोमयिभीरुभविष्यति स्वतेजसास्वपुत्राणांसदारक्षांक
रिष्यसि २७ अथराधांविरहणींज्ञात्वाकृष्णोहरिःस्वयम् श्रीदाम्नासहवैदेहतन्निकुंजंसमाययौ २८ नि-
कुंजद्वारिसंप्राप्तंससखंप्राणवल्लभम् वीक्ष्यमानवतीभूत्वाराधाप्राहहरिंवचः २९ राधोवाच तत्रैवगच्छय-
त्राभूत्स्नेहस्तेनूतनोहरे नदीभूताहिविरजानदोभवितुमर्हसि ३० कुरुवासंतन्निकुंजेमयातेकिंप्रयोजनम् -
नारदउवाच इतिश्रुत्वाथभगवान्तन्निकुंजंजगामह श्रीकृष्णमित्रःश्रीदामाराधाम्प्राहरुषावचः ३१ श्रीदामोवाच
परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् असंख्यब्रह्माण्डपतिर्गोलोकेशोविराजते ३२ त्वादृशीःकोटिशः

55

श्रीगणेशायनमः श्रीसरस्वत्यैनमः बहुलाश्वउवाच कथंदधारभगवान्गिरिंगोवर्द्धनंवरम् उच्छिलींध्रंयथाबालोह
स्तेनैकेनलीलया १ परिपूर्णतमस्यास्यश्रीकृष्णस्यमहात्मनः तदेवचरितंदिव्यमद्भुतंमुनिसत्तम २ श्रीनारदउवाच
वार्षिकंहिकरंराज्ञेयथाशक्रायवैतथा बलिन्ददुःप्रावृडंतेगोपाःसर्वेकृषीबलाः ३ महेन्द्रयागसंभारंचयंदृष्ट्वैकदाहू-
रिः नन्दंपप्रच्छसदसिवल्लभानांचशृण्वताम् ४ श्रीभगवानुवाच शक्रस्यपूजनंह्येतत्किम्फलंचास्यविद्यते लौ
किकंवावदन्त्येतद्थवापारलौकिकम् ५ श्रीनन्दउवाच शक्रस्यपूजनंह्येतद्भुक्तिमुक्तिकरम्परम् एतद्विनानरोभू
मौजायतेनसुखीक्वचित् ६ श्रीभगवानुवाच शक्रादयोदेवगणाश्चसर्वतोभुंजन्तियेस्वर्गफलंस्वकर्मभिः क्षी
णेतिमर्त्यपदंशुभक्षयेतत्सेवनंविद्धिनमुक्तिकारणम् ७ भयंभवेद्वैपरिमेष्ठिनेयतोवार्तातुकाकौकिलतत्कृतात्मना-
म् तस्मात्परकालमलंतमेवहिसवाबलिष्ठंसुबुधाविदुःपरे ८ ततस्तमाश्रित्यसुकर्मभिःपरंभजेद्धरिंयज्ञपतिंसुरेश्व
रम् विसृज्यसर्वंमनसाकृतेःफलंव्रजेत्परंमोक्षमसौनचान्यथा ९ गोविप्रसाध्वग्निसुराःश्रुतिस्तथाधर्मश्चयज्ञाधिप
तेर्विभूतयः धिष्ण्येषुचैतेषुहरिम्भजन्तियेसदाविहामुत्रफलंव्रजन्तिते १० समुत्थितोसौहरिवक्षसोगिरिर्गोवर्द्ध
नोनामगिरीन्द्रराजराट् समागतोत्यत्रपुलस्त्यतेजसायद्दर्शनाज्जन्मपुनर्नविद्यते ११ सम्पूज्यगोविप्रसुरान्महाद्रये-
दातव्यमद्यैवपरंत्वुपायनम् एषप्रियोमेमखराजएवहिनचेद्यथेच्छास्तितथाकुरुव्रज १२ श्रीनारदउवाच तेषां
मध्येथसन्नंदोगोपोवृद्धोऽतिनीतिवित् अतिप्रसन्नःश्रीकृष्णमाहनन्दस्यशृण्वतः १३ सनन्दउवाच हेनन्दसूनो
हेतातत्वंसाक्षात्ज्ञानशेवधिः कर्तव्याकेनविधिनापूजाद्रेर्वदतत्वतः १४ श्रीभगवानुवाच आलिप्यगोमयेनाधि
गिरिराजभुवंत्वधः धृत्वाथसर्वसम्भारम्भक्तियुक्तोजितेन्द्रियः १५ सहस्रशीर्षामंत्रेणाद्रयेस्नानंचकारयेत् गंगा

यशोदयाश्रीगिरिपूजनार्थंसमाययौगर्गयुतःप्रसन्नः २ नन्दोपनन्दावृषभानवश्चपुत्रैश्चपौत्रैश्चसहांगनाभिः समाययुः
श्रीगिरिराजपार्श्वेसर्वंसमानीयचयज्ञभारम् ३ त्वरंसमारुह्यमहोन्नतंगजंविचित्रवर्णैर्धृतहेमशृंखलम् गोवर्द्धनान्तं
प्रययौगवांगणैःशरद्घनैःशक्रइवप्रियायुतः ४ सहस्रबालार्कपरिस्फुरद्युतिमारुह्यराधाशिबिकांसखीगणैः शचीव-
दिव्याम्बररत्नभूषणाबभौचकोरीभ्रमरीसमाकुला ५ समागतेपार्श्वगतेस्वलंकृतेराजन्सखीकोटिसमावृतेपरे स-
ख्यंविभातंललिताविशाखेचन्द्राननेचालितचारुचामरे ६ एवंरमावैविरजाचमाधवीमायाचकृष्णानृपजन्हुनंदनी द्वात्रिं
शदष्टौचतथाहिषोडशःसख्यश्चतासांकिलयूथश्चागतः ७ श्रीमैथिलानांकिलकौशलानांतथाश्रुतीनामृषिरूपकानाम्
तथात्वयोध्यापुरवासिनीनांश्रीयज्ञसीतावनवासिनीनाम् ८ रमादिवैकुण्ठनिवासिनीनांतथोर्द्ध्ववैकुण्ठनिवासिनीनाम् म
होज्वलद्वीपनिवासिनीनांध्रुवादिलोकाचलवासिनीनाम् ९ समुद्रजादिव्यगुणत्रयाणामदिव्यवैमानिकजौषधीनाम् जा
लंधरीणांचसमुद्रकन्याबर्हिष्मतीजास्फतलस्थितानाम् १० तथाप्सरःसर्वफणीन्द्रजानामासांचयूथाव्रजवासिनीनाम्
समाययुःश्रीगिरिराजपार्श्वेस्वलंकृताःपाणिबलिप्रदीपाः ११ गोपाश्ववृन्दाःशिशवोयुवानःपीताम्बरोष्णीषकबर्हमंडि
ताः श्रीहारगुंजावनमालिकाभीरेजुःसमेतानवयष्टिवेणुभिः १२ कृत्वोत्सवंशैलवरस्यसन्मुखाङ्गाधरोबद्धकपर्दमं
डलः कपालभृन्नस्थिजभस्मरूषितःसर्पालिमालावलयैर्विभूषितः १३ धत्तूरभृंगाविषयानविह्वलोहिमाद्रिपुत्रीस-
हितोगणावृतः आरुह्यनन्दीश्वरमादिवाहनंसमाययौश्रीगिरिराजमण्डलम् १४ राजर्षिविप्रर्षिसुरर्षयश्चसिद्धेश-
योगेश्वरहंससुख्याः आजग्मुराराद्गिरिदर्शनार्थंसहस्रशोविप्रगणाःसमेताः १५ गोवर्द्धनोरत्नशिलामयोभूत्सु
वर्णशृंगैःपरितःस्फुरद्भिः मत्तालिभिर्निर्झरसुन्दरीभिर्दरीभिरुच्चांगकरीवराजन् १६ तदैवशैलाःकिलमूर्त्तिमन्तःसो

जलेनयमुनाजलेनापिद्विजैःसह १६ शुक्लगोदुग्धधाराभिस्ततःपंचामृतैर्गिरिम् स्नापयित्वागन्धपुष्पैःपुनः कृष्णा-
जलेनवै १७ वस्त्रंदिव्यंचनैवेद्यमासनंसर्वतोधिकम् मालालंकारनिचयंधृत्वादीपावलिम्परम् १८ ततःप्रदक्षिणां-
कुर्यान्नमस्कुर्यात्ततःपरम् कृतांजलिपुटोभूत्वात्विदमेवमुदीरयेत् १९ नमोवृन्दावनांकायतुभ्यंगोलोकमौलिने पूर्ण-
ब्रह्मातपत्रायनमोगोवर्द्धनायच २० पुष्पांजलिंततःकुर्यान्नीराजनमतःपरम् घंटाकांस्यमृदंगाद्यैर्वादित्रैर्मधुरस्वनैः-
२१ वेदाहमेतंमंत्रेणवर्षेल्लाजैःसमाचरेत् तत्समीपेचान्नकूटंकुर्याच्छ्रद्धासमन्वितः २२ कृचोलानांचतुःषष्टिपंच-
पंक्तिसमन्वितम् तुलसीदलमिश्रैश्चश्रीगंगायमुनाजलैः २३ षट्पंचाशत्तमैर्भोगैःकुर्यात्सेवांसमाहितः ततोग्नीन्
ब्राह्मणान्पूज्यगाःसुरान्गन्धपुष्पकैः २४ भोजयित्वाद्विजवरान्सौगंधैर्मिष्टभोजनैः अन्येभ्यश्चाश्वपाकेभ्योदद्याद्भो-
जनमुत्तमम् २५ गोपीगोपालवृंदैश्चगवांनृत्यंचकारयेत् मंगलैर्जयशब्दैश्चकुर्याद्गोवर्द्धनोत्सवम् २६ यत्रगोवर्द्धना-
भावस्तत्रपूजाविधिंशृणु गोमयैर्गोवर्द्धनःकुर्यात्तदाकारःपरोन्नतः २७ पुष्पव्यूहैर्लताजालैरीषिकाभिःसमन्वितः पू-
जनीयःसदामर्त्यैर्गिरिर्गोवर्द्धनोभुवि २८ शिलासमानसुरटंक्षित्वाद्योतच्छिलांनयेत् गृण्हीयाद्योविनास्वर्णंसमहारौर-
वंव्रजेत् २९ शालग्रामस्यदेवस्यसेवनंकारयेत्सदा पातकंनस्पृशेत्तंवैपद्मपत्रंयथाजलम् ३० गिरिराजशिलासेवां
यःकरोतिद्विजोत्तमः सप्तद्वीपमहीतीर्थावगाहफलमेतिसः ३१ गिरिराजमहापूजांवर्षेवर्षेकरोतियः इहसर्वसुखंभु-
भुक्त्वाऽमुत्रमोक्षंप्रयातिसः ३२ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेश्रीनारदबहुलाश्वसंवादेश्रीगि
रिराजपूजाविधिवर्णनंनामप्रथमोऽध्यायः १ श्रीनारदउवाच श्रुत्वावचोनन्दसुतस्यसाक्षाच्छ्रीनन्दसन्नन्दवरा
व्रजेशाः सुविस्मिताःपूर्वकृतंविहायप्रचक्रिरेश्रीगिरिराजपूजाम् १ नीत्वाबलीन्मैथिलनन्दराजसुतौसमानीयचरामकृष्णौ

मेघानीलपंकजसुप्रभाः ४ हस्तितुल्यान्वारबिन्दून्ववृषुस्तेमदोद्धताः हस्तिशुण्डासमाभिश्चधाराभिश्चंचलान्वयाः
५ निपेतुःकोटिशश्चाद्रिकूटतुल्योपलाभृशम् वातावबुःप्रचण्डाश्चक्षेपयंतस्तरून्महान् ६ प्रचण्डवज्रपातानांमेघा
नामंतकारिणाम् महाशब्दोभवद्भूमौमैथिलेन्द्रभयंकरः ७ ननादतेनब्रह्माण्डसमलोकैर्बिलैःसह विचेलुर्दिग्गजा
स्तारापतन्नूखण्डमण्डलम् ८ भयभीतागोपमुख्याःसकुटुंबाजिगीषवः शिशून्स्वान्स्वान्पुरस्कृत्यनन्दमन्दिरमा
ययुः ९ श्रीनन्दनन्दननत्वासबलम्परमेश्वरम् ऊचुर्व्रजौकसःसर्वेभयार्ताःशरणगताः १० गोपाऊचुः राम
राममहाबाहोकृष्णकृष्णव्रजेश्वर पाहिपाहिमहाकष्टादिन्द्रदत्तान्निजान्जनान् ११ हित्वेन्द्रयागन्त्वद्वाक्यात्कृतो
गोवर्धनोत्सवः अद्यशक्रेप्रकुपितेकर्तव्यंकिंवदाशुनः १२ श्रीनारदउवाच व्याकुलंगोकुलंवीक्ष्यगोपीगोपा
लसंकुलम् सगोधनंगोकुलंचगोपानाहनिराकुलः १३ श्रीभगवानुवाच माभैष्टयाताद्रितटंसर्वैःपरिकरैःसह
वःपूजाप्रहृतायेनसरक्षांसंविधास्यति १४ नारदउवाच इत्युक्त्वास्वजनैःसार्द्धमेत्यगोवर्द्धनंहरिः समुत्पाट्यद
धाराद्रिंहस्तेनैकेनलीलया १५ यथाछित्रींध्रं शिशुरश्रमोगजःस्वपुष्करेणैववपुष्करंगिरिम् धृत्वाबभौश्रीव्रजरा
जनन्दनःकृपाकरोसौकरुणामयःप्रभुः १६ अथाहगोपान्विशताद्रिगर्तेहेतातमातर्व्रजवल्लभेशाः सोपस्करैः-
सर्वधनैश्चगोभिरत्रैवशक्रस्यभयंनकिंचित् १७ इत्थंहरेर्वचःश्रुत्वागोपागोधनसंयुताः सकुटुंबोपस्करैश्चविवि-
शुःश्रीगिरेस्तलम् १८ वयस्याबालकाःसर्वेकृष्णोक्ताःसबलानृप स्वान्स्वांश्चलकुटानद्रेरवष्टंभान्प्रचक्रिरे १९-
जलौघमागतंवीक्ष्यभगवांस्तद्गिरेरधः सुदर्शनंतथाशेषंमनसाज्ञांचकारह २० कोटिसूर्यप्रभंचाद्रेरूर्द्ध्वंचक्रंसुद
र्शनम् धारासंपातमपिबदगस्त्यइवमैथिल २१ अधोधस्तंगिरिंशेषःकुण्डलीभूतआस्थितः रुरोधतज्जलंदी





57

पायनामेरुहिमाचलाद्याः नेमुर्गिरिंमंगलपाणयस्तंगोवर्द्धनंरूपधरंगिरीन्द्राः १७ द्विजैश्चगोवर्द्धनदेवपूजनंकृत्वाऽच्यु
तोन्नंद्विजवन्हिगोधनम् सम्पूज्यधृत्वास्रुधनंमहाधनंबलिन्ददौश्रीगिरयेव्रजेश्वरः १८ नन्दोपनन्दैर्वृषभानुभिश्चगो
पीगणैर्गोपगणप्रहर्षितैः गायद्भिरानर्त्तनवाद्यतत्परैश्चकारकृष्णोद्रिवरप्रदक्षिणाम् १९ देवेषुवर्षत्सुचपुष्पवर्षं
जनेषुवर्षत्सुचलाजसंघम् रेजुर्महाराजइवाध्वरेजपेगोर्वर्द्धनोनामगिरीन्द्रराजराट् २० कृष्णोपिसाक्षाद्व्रजशैलमध्या
द्धृत्वातिदीर्घंकिलचान्यरूपम् शैलोस्मिलोकानितिभाषयन्सन्जघाससर्वंकृतमन्नकूटम् २१ गोपालगोपीगणवृ
न्दमुख्याऊचुःस्वयंवीक्ष्यगिरेःप्रभावम् दातुंवरंतत्रसमुद्यतंतंस्रुविस्मिताहर्षितमानसास्ते २२ ज्ञातोसिगोपैर्गि-
रिराजदेवप्रदर्शितोनन्दसुतेनसाक्षात् नोगोधनंवाकिलबन्धुवर्गोवृद्धिंसमायातुदिनेदिनेको २३ तथास्तुचोक्त्वागि
रिराजराजोगोवर्द्धनोदिव्यवपुर्दधानः किरीटकेयूरमनोहरांगःक्षणेनतत्रान्तरधीयतारात् २४ नन्दोपनन्दावृषभानव
श्चबलःसुचन्द्रोवृषभानुराजः श्रीनन्दराजश्चहरिश्चगोपागोप्यश्चसर्वानिजगोधनैश्च २५ द्विजाश्चयोगेश्वरसिद्धसं-
घाःशिवादयश्चान्यजनाश्चसर्वे नत्वाथसम्पूज्यगिरिम्प्रसन्नाःस्वंस्वंगृहंजग्मुरनिच्छयाच २६ श्रीकृष्णचन्द्रस्य
परंचरित्रंगिरीन्द्रराजस्यमहोत्सवंच मयातवाग्रेकथितंविचित्रंनृणांमहापापहरम्पवित्रम् २७ इतिश्रीमद्गर्गा-
चार्यसंहितायांश्रीगिरिराजखण्डेश्रीनारदबहुलाश्वसंवादेगिरिराजमहोत्सववर्णनन्नामद्वितीयोऽध्यायः २
श्रीनारदउवाच अथमन्युखतःश्रुत्वास्वात्मयागस्यनाशनम् गोवर्द्धनोत्सवंजातंकोपंचक्रेपुरन्दरः १ सांवर्त्त
कंनामगणंप्रलयेमुक्तबन्धनम् इन्द्रोव्रजविनाशायप्रेषयामाससत्वरम् २ अथमेघगणाःक्रुद्धाध्वनंतश्चित्रवर्णि
नः कृष्णाभाःपीतभाःकेचित्केचिद्धरितप्रभाः ३ इन्द्रगोपनिभाःकेचित्केचित्कर्पूरवत्प्रभाः नानाविधाश्चये

रोभगवांस्त्वमेवरिरक्षयाधर्मगवांश्रुतेश्च अद्यैवजातः परिपूर्णदेवः कंसादिदैत्येन्द्रविनाशनाय ३ त्वन्माययामोहितचित्त
वृत्तिंमदोद्धतंहेलनभाजनंमाम् पित्रेवपुत्रंह्युपतेक्षमस्वप्रसीददेवेशजगन्निवास ४ ॐ नमोगोवर्द्धनोद्धरणायगोविन्दाय
गोकुलनिवासायगोपालायगोपालपतये गोपीजनभर्त्रेगिरिराजोद्धर्त्रेकरुणानिधयेजगद्विधयेजगन्मंगलायजगन्निवासाय
जगन्मोहनायकोटिमन्मथमन्मथायवृषभानुसुतावरायश्रीनन्दराजकुलप्रदीपायश्रीकृष्णायपरिपूर्णतमायत्वसंख्यब्र
ह्माण्डपतयेगोलोकधामधिषणाधिपतयेस्वयम्भगवतेसबलायनमस्तेनमस्ते ५ श्रीनारदउवाच इतिशक्रकृतं-
स्तोत्रंप्रातरुत्थाययः पठेत् सर्वसिद्धिर्भवेत्तस्यसंकष्टान्नभयम्भवेत् ६ इतिस्तुत्वाहरिंदेवंसर्वैर्देवगणैः सह कृतां
जलिपुटोभूत्वाप्रणनामपुरन्दरः ७ अथगोवर्द्धनेरम्येसुरभिर्गौःसमुद्भवा स्नापयामासगोपेशंदुग्धधाराभिरात्म
नः ८ शुण्डादण्डैश्चतुर्भिश्चद्युगंगाजलपूरितैः श्रीकृष्णंस्नापयामासमत्तऐरावतोगजः ९ ऋषिभिः श्रुतिभिःस-
र्वैर्देवगन्धर्वकिन्नराः तुतुष्टुवुर्हरिंराजन्हर्षिताःपुष्पवर्षिणः १० कृष्णाभिषेकेसंजातेगिरिर्गोवर्द्धनोमहान् द्रवीभू-
तोवहद्राजन्हर्षानन्दादितस्ततः ११ प्रसन्नोभगवान्तस्मिन्कृतवान्हस्तपंकजम् तद्धस्तचिन्हमद्यापिदृश्यतेतद्गिरौ
नृप १२ तत्तीर्थंचपरम्भूतनराणाम्पापनाशनम् तदेवपादचिन्हस्यात्तत्तीर्थंविद्धिमैथिल १३ एतावत्तस्यतत्रैवपा
दचिन्हंबभूवह सुरभेःपादचिन्हानिबभूवुस्तत्रमैथिल १४ द्युगंगाजलपातेनकृष्णस्नानेनमैथिल तेनवैमानसीगं
गागिरौजाताऽघनाशिनी १५ सुरभेर्दुग्धधाराभिर्गोविन्दस्नानतोनृप जातोगोविन्दकुण्डोदोमहापापहरःपरः १६
कदाचित्तस्मिन्दुग्धस्यस्वादुमात्मजलेषुच तत्रस्नात्वानरःसाक्षाद्गोविन्दपदमाप्नुयात् १७ प्रदक्षिणीकृत्यहरिम्प्र
णम्यचदत्वाबलींस्तत्रपुरन्दरादयः जयध्वनिंकृत्यसपुष्पवर्षिणोययुःसुराःसौरव्ययुतास्त्रिविष्टपम् १८ कृष्णाभि

58

र्यंयथावेलामहोदधिम् २२ सप्ताहंस्फुस्थिरस्तस्थौगोवर्द्धनधरोहरिः पश्यंतःश्रीकृष्णचन्द्रंचकोराइवतेस्थिताः २३
मत्तमैरावतंनागंसमारुह्यपुरन्दरः ससैन्यःक्रोधसंयुक्तोव्रजमण्डलमाययौ २४ दूराच्चिक्षेपवज्रंस्वंनंदगोष्ठजिघांस-
या स्तंभयामासशक्रस्यसवज्रंमाधवोभुजम् २५ भयभीतस्तदाशक्रःसांवर्त्तकगणैःसह दुद्रावसहसादेवैर्यथेभः-
सिंहताडितः २६ तदेवार्कोदयोजातोगतामेघाइतस्ततः वाताउपरताःसद्योनद्यःस्वल्पजलानृप २७ विपंकंभूतलं-
जातंनिर्मलंखंबभूवह चतुष्पदाःपक्षिणश्चसुखमापुस्ततस्ततः २८ हरिणोक्तास्तदागोपानिर्ययुर्गिरिगर्त्ततः स्वंस्वं
धनंगोधनंचसमादायशनैःशनैः २९ निर्यातेतिवयस्यांश्चप्राहगोवर्द्धनोद्धरः तेतमाहुश्चनिर्गच्छधारयामोद्रिमोजसा
३० इतिवादपरान्गोपान्गोवर्द्धनधरोहरिः तदर्द्धंचगिरेर्भारंप्रादात्तेभ्योमहामनाः ३१ पतितास्तेनभारेणगोपबाला-
श्चनिर्बलाः करेणतान्समुत्थाप्यस्वस्थानेपूर्ववद्गिरिम् ३२ सर्वेषांपश्यतांकृष्णःस्थापयामासलीलया ३३ तदैव
गोपीगणागोपमुख्याःसम्पूज्यकृष्णंनृपनन्दसूनुम् गन्धाक्षताद्यैर्दधिदुग्धभोगैर्ज्ञात्वापरंनेमुरतीवसर्वे ३४ नन्दोयशो
दानृपरोहिणीचबलश्चसन्नन्दसुखाश्चवृद्धाः आलिंग्यकृष्णंप्रददुर्धनानिशुभाशिषःसंयुयुजुर्घृणार्त्ताः ३५ संश्लाघ्य
तंगायनवाद्यतत्परान्नृत्यन्तआरान्नृपनन्दनन्दनम् आजग्मुरेवस्वगृहान्व्रजौकसोहरिंपुरस्कृत्यमनोरथंगताः ३६ त
दैवदेवाववृषुःप्रहर्षिताःपुष्पैःशुभैःसुन्दरनन्दनोद्भवैः जगुर्यशःश्रीगिरिराजधारिणोगन्धर्वमुख्यादिविसिद्धसंघाः ३७
इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेश्रीनारदबहुलाश्वसंवादेगोवर्द्धनोद्धरणंनामतृतीयोऽध्यायः ३ ७
श्रीनारदउवाच अथदेवगणैःसार्द्धंशक्रस्तत्रसमागतः गतमानोगिरौकृष्णंरहसिप्रणनामह १ इन्द्रउवाच त्वंदेवदे
वःपरमेश्वरःप्रभुःपूर्णःपुराणःपुरुषोत्तमोत्तमः परात्परस्त्वंप्रकृतेःपरोहरिर्मांपाहिपाहिद्विपतेजगत्पते २ दशावता-

भारावतरणायच कंसादीनांवधार्थायभक्तानाम्पालनायच १८ अनंतान्यस्यनामानिवेदगुत्थानिभारत लीलाभिश्च
भविष्यन्तितत्कर्मस्कनविस्मयः १९ इतिश्रुत्वात्मजेगोपाःसन्देहंनकरोम्यहम् वेदवाक्यंब्रह्मवचःप्रमाणंहिमहीतले २०
गोपाऊचुः यद्यागतस्तवगृहेगर्गाचार्य्योमहामुनिः तत्क्षणेनामकरणेनाहूताज्ञातयस्त्वया २१ स्वगृहेनामकरणंभ-
वताचकृतंशिशोः नवचैताहृशीरीतिर्युसंसर्वगृहेपियत् २२ श्रीनारदउवाच एवंवदतस्तेगोपानिर्गतानन्दमन्दिरात्
वृषभानुपुरंजग्मुःक्रोधपूरितविग्रहाः २३ वृषभानुवरंसाक्षान्नन्दराजसहायकम् प्राहुर्गोपगणाःसर्वेज्ञातेर्मदसमन्वि
ताः २४ गोपाऊचुः वृषभानुवरस्त्वंवैज्ञातिमुख्योमहामनाः नन्दराजंत्यजज्ञातेहेगोपेश्वरभूपते २५ वृषभानुवर-
उवाच कोदोषोनन्दराजस्यज्ञातेस्तंसंत्यजाम्यहम् गोपेशोज्ञातिमुकुटोनन्दराजोममप्रियः २६ गोपाऊचुः नचेत्त्य
जसितंराजन्त्यजामस्त्वांव्रजौकसः त्वद्गृहेवर्द्धिताकन्योद्वाहयोग्यामहामुने २७ भवताज्ञातिमुख्येनसंयदुन्मदशा-
लिना नदत्तावरमुख्यायकलुषंतववियते २८ अद्यत्वांज्ञातिसभ्रष्टंपृथक्मन्यामहेनृप नचेच्छीघ्रंनंदराजंत्यजत्यज
महामते २९ वृषभानुवरउवाच गर्गस्यवाक्यंहेगोपावदिष्यामिसमाहितः येनगोपगणायूयंभवताशंगतव्यथाः ३०
असंख्यब्रह्माण्डपतिर्गोलोकेशःपरात्परः तस्मात्परोवरोनास्तिजातोनन्दगृहेशिशुः ३१ भुवोभारावतारायकंसादीनां
वधायच ब्रह्मणाप्रार्थितःकृष्णोबभूवजगतीतले ३२ श्रीकृष्णपट्टराज्ञीयागोलोकेराधिकाभिधा त्वद्गृहेसापिसंजा
तात्वंनजानासितांपराम् ३३ अहंनकारयिष्यामिविवाहमनयोर्नृप तयोर्विवाहोभविताभाण्डीरेयमुनातटे ३४ वृन्दा
वनसमीपेचनिर्जनेसुन्दरेस्थले परमेष्ठीसमागत्यविवाहंकारयिष्यति ३५ तस्माद्राधागोपवरविद्ध्यर्द्धांगींपरस्यच -
लोकचूडामणेःसाक्षाद्राज्ञींगोलोकमन्दिरे ३६ यूयंसर्वेपिगोपालागोलोकादागताभुवि तथागोपीगणागावोगोकुले

59

षेकस्यकथांशृणोतियोदशाश्वमेधावभृथाधिकंफलम् प्राप्नोतिराजेन्द्रसएवभूयसः परम्पदंयातिपरस्यवेधसः १९ -
इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेश्रीनारदबहुलाश्वसंवादेश्रीकृष्णाभिषेकोनामचतुर्थोऽध्यायः ४ ७
श्रीनारदउवाच एकदासर्वगोपालागोप्योनन्दसुतस्यतत् अद्भुतंचरितन्दृष्ट्वानन्दमाहुर्यशोदयम् १ गोपाऊचुः
हेगोपराजत्वद्वंशेकोपिजातोनचाद्रिधृक् नक्षमस्त्वशिलांधर्त्तुंसप्ताहंहेयशोमय २ कसंसहायनोबालःक्वाद्रिराजस्य
धारणम् तेननोजायतेशंकातवपुत्रेमहाबले ३ अयंबिभ्रद्गिरिवरंकमलंगजराडिव उद्धिर्लीध्रंयथाबालोहस्तेनैकेन
लीलया ४ गौरवर्णायशोदेत्वंनन्दत्वंगौरवर्णधृक् अयंजातःकृष्णवर्णएतत्कुलविलक्षणम् ५ यद्वास्तुक्षत्रिया
णांतुबालएतादृशोयथा बलभद्रेनदोषःस्याच्चन्द्रवंशसमुद्भवे ६ जातेस्यागंकरिष्यामोयदिसत्यंनभाषसे गोपेषु
चास्यवोत्पत्तिंवदचेन्नकलिर्भवेत् ७ श्रीनारदउवाच श्रुत्वागोपालवचनंयशोदाभयविह्वला नन्दराजस्तदाप्राह-
गोपान्क्रोधप्रपूरितान् ८ श्रीनन्दउवाच गर्गस्यवाक्यंहेगोपावदिष्यामिसमाहितः येनगोपगणायूयंभवताशङ्कगत-
व्यथाः ९ ककारःकमलाकान्तोऋकारोरामइत्यपि षकारःषड्गुणपतिःश्वेतद्वीपनिवासकृत् १० णकारोनारसिंहो
यमकारोह्यक्षरोग्निभुक् विसर्गौचतथाह्येतौनरनारायणावृषी ११ संप्रलीनाश्चषट्पूर्णायस्मिञ्छब्देमहात्मनि प
रिपूर्णतमेसाक्षात्तेनकृष्णःप्रकीर्तितः १२ शुक्लोरक्तस्तथापीतोवर्णोस्यानुयुगंधृतः द्वापरान्तेकलेरादौबालोयंकृष्ण
तागतः १३ तस्मात्कृष्णइतिख्यातोनाम्नायंनन्दनन्दनः बसवश्चेन्द्रियाणीतितद्देवाश्चित्तएवहि १४ तस्मिन्यश्चेष्ट-
तेसोपिवासुदेवइतिस्मृतः १५ वृषभानुसुताराधायाजाताकीर्तिमंदिरे तस्याःपतिरयंसाक्षात्तेनराधापतिःस्मृतः १६ प
रिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् असंख्यब्रह्माण्डपतिर्गोलोकेधाम्निराजते १७ सोऽयंतवशिशुर्जातो-

प्रष्टुंयशोदांतत्तुल्यंनीत्वाचान्तःपुरंययौ १६ चिरंदध्यौतदानन्दोयशोदाचयशस्विनी एतन्मुक्तासमानंतुद्रव्यंनास्तिगृहेम-
म १७ लोकलज्जागताःसर्वा हासःस्याच्चेद्धनोन्द्भुतम् किंकर्तव्यंतत्प्रतियच्छ्रीकृष्णोद्वाहकर्मणि १८ ततोयोग्यंतदूह
णंपश्चात्कार्यंधनागते एवंचिन्तयतस्तस्यनन्दस्यैवयशोदया १९ अलक्ष्यआगतस्तत्रभगवान्वृजिनार्दनः नीत्वादा
मशतंतेषुबहिःक्षेत्रेषुसर्वतः २० मुक्ताफलानिचैकैकमाक्षिपत्स्वकरेणवै यथाबीजानिचान्नानांस्वक्षेत्रेषुकृषीबलः
२१ अथनन्दोपिगणयन्कलिकानिचयस्पुनः शतन्यूनंचतद्दृष्ट्वासंदेहसजगामह २२ श्रीनन्दउवाच नास्तिपूर्वंयत्स-
मानंतत्रापिन्यूनतांगतम् अहोकलंकोभविताज्ञातिषुस्वेषुसर्वतः २३ अथवाक्रीडनार्थंहिकृष्णोयदिगृहीतवान् बल
देवोथवाबालस्तौपृच्छेद्दीनमानसः २४ श्रीनारदउवाच इत्थंविचार्यनन्दोपिकृष्णम्पप्रच्छसादरम् प्रहसन्भगवान्
नन्दंप्राहगोवर्द्धनोद्धरः २५ श्रीभगवानुवाच कृषीवलावयंगोपाःसर्वबीजप्ररोहकाः क्षेत्रेमुक्ताप्रबीजानिविकीर्णानिक
तवानहम् २६ नारदउवाच श्रुत्वाथस्वात्मजेनोक्तंतंनिर्भर्त्स्यव्रजेश्वरः तानिनेतुंतत्सहितस्तत्क्षेत्राणिजगामह २७
तत्रमुक्ताफलानांतुशाखिनःशतशःशुभाः दृश्यंतेदीर्घवपुषोहरित्पल्लवशोभिताः २८ मुक्तानांस्तबकानांतुकोटिशः
कोटिशोनृप संघाविलंवितारेजुर्ज्योतींषीवनभःस्थले २९ तदातिहर्षितोनन्दोज्ञात्वाकृष्णम्परेश्वरम् मुक्ताफलानि-
दिव्यानिपूर्वस्थूलसमानिच ३० तेषांतुकोटिभाराणिनिधायशकटेषुच ददौतेभ्योवृणानेभ्योनन्दराजोव्रजेश्वरः ३१
तेगृहीत्वाथतत्सर्वंवृषभानुवरंगताः सर्वेषांशृण्वतांनन्दवैभवंप्रजगुर्नृप ३२ तदातिविस्मिताःसर्वेज्ञात्वानन्दसुतंह-
रिम् वृषभानुवरंनेमुर्निःसन्देहाव्रजौकसः ३३ राधाहरेःप्रियाज्ञाताराधायाश्चप्रियोहरिः ज्ञातोव्रजजनैःसर्वैस्त
द्दिनान्मैथिलेश्वर ३४ मुक्ता क्षेपःकृतोयत्रहरिणानन्दसूनुना मुक्तासरोवरस्तत्रजातोमैथिलतीर्थराट् ३५ -

राधिकेक्षया ३७ एवमुक्त्वागतेसाक्षाद्गर्गाचार्येमहामुनौ तद्दिनादथराधायांसन्देहंनकरोम्यहम् ३८ वेदवाक्यंब्रह्म
वचःप्रमाणंहिमहीतले इतिवःकथितंगोपाःकिम्भूयःश्रोतुमिच्छथ ३९ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराज-
खण्डेनारदबहुलाश्वसंवादेगोपविवादोनामपंचमोऽध्यायः ५ श्रीनारदउवाच वृषभानुवरस्येदंवचःश्रुत्वाव्रजौक-
सः ऊचुःपुनःशान्तिगताविस्मितामुक्तसंशयाः १ गोपाऊचुः समीचीनंवचोराजन्राधेयंतुहरिप्रिया तत्प्रभावेनतेदी
र्घवैभवंदृश्यतेभुवि २ सहस्रशोगजामत्ताःकोटिशोश्वाश्चचंचलाः रथाश्चदेवधिष्ण्याभाःशिबिकाःकोटिशःशुभाः ३
कोटिशःकोटिशोगावोहेमरत्नमनोहराः मन्दिराणिविचित्राणिरत्नानिविविधानिच ४ सर्वसौख्यंभोजनाढ्यंदृश्यतेसांप्रतं
तव कंसोपिधर्षितोजातोदृष्ट्वातेबलमद्भुतम् ५ कान्यकुब्जपतेःसाक्षाद्भलंदननृपस्यच जामातात्वंमहावीरःकुबेरइवको-
शवान् ६ त्वत्समंवैभवंनास्तिनन्दराजगृहेक्वचित् कृषीबलोनन्दराजोगोपतिर्दीनमानसः ७ यदिनन्दसुतःसाक्षात्परि-
पूर्णतमोहरिः सर्वेषाम्पश्यतांनस्तत्परीक्षांकारयन्प्रभो ८ श्रीनारदउवाच तेषांवाक्यंततःश्रुत्वावृषभानुवरोमहान्-
चकारनन्दराजस्यवैभवस्यपरीक्षणम् ९ कोटिदामानिमुक्तानांस्थूलानांमैथिलेश्वर एकैकस्मिन्मुक्ताश्चकोटिमौल्याःस्फु
रत्प्रभाः १० निधायतानिपात्रेषुवृणानैःकुशलैर्जनैः प्रेषयामासनन्दायसर्वेषाम्पश्यतांनृप ११ नन्दराजसभांगत्वावृणा
नाःकुशलाभृशम् निधायदामपात्राणिनन्दमाहुःप्रणम्यतम् १२ वृणानाऊचुः विवाहयोग्यांनवकंचनेत्रांकोटीन्दुबिम्बद्युति
मादधानाम् विज्ञायराधांवृषभानुमुख्यश्चक्रेविचारंस्कवरंविचिन्वन् १३ गवागजंदिव्यमनंगमोहनंगोवर्द्धनोद्धारणदोःसमुद्भ
टम् संवीक्ष्यचास्मान्वृषभानुवन्दितःसंप्रेषयामासविशाम्पतेप्रभो १४ वरस्यचांकेभरणायपूर्वंमुक्ताफलानांनिचयंगृहाण-
इतश्चकन्यार्थमलंप्रदेहिसैषाहिचास्मत्कुलजाप्रसिद्धिः १५ श्रीनारदउवाच दृष्ट्वाद्रव्यम्परंनंदोविस्मितोपिविचारयन्-

स्त्वमेवासिसमास्थितः पथिगोपार्भकैर्गोरसलम्पटोभृशम् मात्राचपित्रासहकारयामोबलाद्भवंतंकिलकंसबन्धने १७ -
श्रीभगवानुवाच कंसंहनिष्यामिमहोग्रदण्डसबांधवंमेशपथोगवांच एवंकरिष्यामियदोःपुरेबलादानेसदाहंगिरिराजभू
मेः १८ नारदउवाच इत्युक्त्वादधिपात्राणिर्बालैर्नीत्वापृथक्पृथक् भूपृष्ठेपोथयामाससानन्दंनन्दनन्दनः १९ अहोए
षपरंधृष्टोनिर्भयोनन्दनन्दनः निरंकुशोभाषणीयोवनेवीरःपुरेबलः २० ब्रुवामहेयशोदायैनन्दायचकिलाद्यवै एवंवदंत्य
स्तागोप्यःसस्मिताःप्रययुर्गृहान् २१ नीपपालाशपत्राणांकृत्वाद्रोणानिमाधवः जघासबालकैःसार्द्धंपिच्छलानिदधी
निच २२ द्रोणाकाराणिपत्राणिबभूवुःशाखिनांतदा तत्क्षेत्रंचमहापुण्यंद्रोणंनामनृपेश्वर २३ दधिदानंतत्रकृत्वापी
त्वापत्रधृतंदधि नमस्कुर्यान्नरस्तस्यगोलोकान्नच्युतिर्भवेत् २४ नेत्रेआच्छाद्ययत्रैवलीनोभून्माधवोर्भकैः तत्रतीर्थं
लौकिकंचजातम्पापप्रणाशनम् २५ कदंबखंडतीर्थंचलीलायुक्तंहरेःसदा तस्यदर्शनमात्रेणनरोनारायणोभवेत् २६-
यत्रवैराधयारासेश्रृंगारोकारिमैथिल तत्रगोवर्द्धनेजातंस्थलंश्रृंगारमण्डलम् २७ येनरूपेणकृष्णेनधृतोगोवर्द्धनोगिरिः
तद्रूपंविद्यतेतत्रनृपश्रृंगारमण्डलम् २८ शब्दाश्चतुःसहस्राणितथाचाष्टौशतानिच गतास्तत्रकलेरादौक्षेत्रेश्रृंगारमण्ड
ले २९ गिरिराजगुहामध्यात्सर्वेषाम्पश्यतांनृप स्वतःसिद्धंचतद्रूपंहरेःप्रादुर्भविष्यति ३० श्रीनाथंदेवदमनंतंवदिष्यंतिस
ज्जनाः गिरिराजेगिरौराजन्सदालीलांकरोतियः ३१ येकरिष्यंतिनेत्राभ्यांतस्यरूपस्यदर्शनम् तेकृतार्थाभविष्यंतिमै
थिलेन्द्रकलौजनाः ३२ जगन्नाथोरंगनाथोद्वारकानाथएवच बद्रिनाथश्चतुःकोणेभारतस्यापिवर्तते ३३ मध्येगोवर्द्ध
नस्यापिनाथोयंवर्ततेनृप पवित्रेभारतेवर्षेपंचनाथाःसुरेश्वराः ३४ सद्धर्ममण्डपस्तंबाआर्तत्राणपरायणाः तेषांतुदर्श
नंकृत्वानरोनारायणोभवेत् ३५ चतुर्णांभुविनाथानांकृत्वायात्रांनरःसुधीः नपश्येद्देवदमनंसनयात्राफलंलभेत् ३६ -



61

एकंमुक्ताफलस्यापिदानंतत्रकरोतियः लक्षमुक्तादानफलंसमाप्नोतिनसंशयः ३६ एवंतेकथितंराजन्गिरिराजमहो-
त्सवः भुक्तिमुक्तिप्रदोनृणांकिम्भूयःश्रोतुमिच्छसि ३७ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेश्रीनारदबहुला
श्वसंवादेहरिपरीक्षणंनामषष्ठोऽध्यायः ६ बहुलाश्वउवाच कतिमुख्यानितीर्थानिगिरिराजेमहात्मनि एतद्ब्रूहि-
महायोगिन्साक्षात्त्वंदिव्यदर्शनः १ श्रीनारदउवाच राजन्गोवर्द्धनःसर्वःसर्वतीर्थवरःस्मृतः वृन्दावनंचगोलोकंमु
कुटोद्भिप्रपूजितः २ गोपगोपीगवांरक्षाप्रदःकृष्णप्रियोमहान् पूर्णब्रह्मातपत्रंयस्तस्मात्तीर्थवरस्तुकः ३ इन्द्रयागंवि-
निर्भर्त्स्यसर्वैर्निजजनैःसह यत्पूजनंसमारेभेभगवान्भुवनेश्वरः ४ परिपूर्णतमंसाक्षाच्छ्रीकृष्णोभगवान्स्वयम् असं
ख्यब्रह्मांडपतिर्गोलोकेशःपरात्परः ५ यस्मिन्स्थितःसदाक्रीडामर्भकैःसहमैथिल करोतितस्यमाहात्म्यंवक्तुंनालंच
तुर्मुखः ६ यत्रवैमानसीगंगामहापापौघनाशिनी गोविन्दकुण्डविशदंशुभंचन्द्रसरोवरः ७ राधाकुण्डःकृष्णकुण्डोल-
लिताकुंडएवच गोपालकुंडस्तत्रैवकुसुमाकरएवच ८ श्रीकृष्णमौलिसंस्पर्शान्मौलिचिन्हाशिलाऽभवत् तस्यदर्शन
मात्रेणदेवमौलिर्भवेज्जनः ९ यस्यांशिलायांकृष्णेनचित्राणिलिखितानिच अद्यापिचित्रितापुण्यानाम्नाचित्रशिलागि
रौ १० यांशिलामर्भकैःकृष्णोवादयन्क्रीडतेरतः वादनीसाशिलाजातामहापापौघनाशिनी ११ यत्रश्रीकृष्णचन्द्रेण-
गोपालैःसहमैथिल कृतावैकंदुकक्रीडातत्क्षेत्रंकंदुकंस्मृतम् १२ इन्द्रःशक्रपदंयातिनत्वाब्रह्मपदंचतत् विलुठन्यस्य-
रजसांसाक्षाद्विष्णुपदंव्रजेत् १३ गोपानांसुष्णिहायत्रचोरयामाससमाधवः औष्णिहंनामतत्तीर्थंमहापापहरंगिरौ १४
तत्रैकदावैदधिविक्रियार्थंविनिर्गतागोपवधूसमूहः श्रुत्वाक्वणन्नूपुरशब्दमाराद्रुरोधतन्मार्गमनंगमोही १५ वंशीधरोवे-
त्रवरेणगोपैःपुरस्थतासांविनिधायपादम् महाकरादानधनायदानंदेहीतिगोपीर्निजगादमार्गे १६ गोप्यऊचुः वक्र-

योगिदुर्लभम् १४ समुत्थितोसौहरिवक्षसोगिरिर्गोवर्द्धनोनामगिरीन्द्रराजराट् समागतोत्यत्रपुलस्त्यतेजसायद्दर्शना
ज्जन्मपुनर्नविद्यते १५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेनारदबहुलाश्वसंवादेगिरिराजविभूतिवर्णनंना
माऽष्टमोऽध्यायः ८ बहुलाश्वउवाच अहोगोवर्द्धनःसाक्षाद्गिरिराजोहरिप्रियः तत्समानंनतीर्थंहिविद्यतेभू
तलेदिवि १ कदाबभूवश्रीकृष्णवक्षसोऽयंगिरीश्वरः एतद्वदमहाबुद्धेत्वंसाक्षाद्धरिमानसः २ श्रीनारदउवाच
गोलोकोत्पत्तिवृत्तान्तंशृणुराजन्महामते चतुःपदार्थदंनृणामाद्यलीलासमन्वितम् ३ अनादिरात्मापुरुषोनिर्गुणःप्र
कृतेःपरः परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्प्रभुः ४ प्रत्यग्धामास्वयंज्योतीरममाणोनिरन्तरम् यत्रकालः
कलयतामीश्वरोधाममानिनाम् ५ राजन्नप्रभवेन्मायानमहांश्चगुणाःकुतः नविशंतिक्वचिद्राजन्मनश्चित्तोमतिर्ह्य
हम् ६ स्वधाम्निब्रह्मसाकारमिच्छयाव्यचरीकरत् प्रथमंचाभवच्छेषोविश्वश्चेतोबृहद्वपुः ७ तदुत्संगेमहालोको
गोलोकोलोकवन्दितः यंप्राप्यभक्तिसंयुक्तःपुनरावर्ततेनहि ८ असंख्यब्रह्माण्डपतेर्गोलोकाधिपतेःप्रभो -
पुनःपादाब्जसंभूतागंगात्रिपथगामिनी ९ पुनर्वामांसतस्तस्यकृष्णाभूत्सरितांवरा रेजेशृंगारकुसुमैर्यथोष्णि
ग्मुद्रितानृप १० श्रीरासमण्डलंदिव्यंहेमरत्नसमन्वितम् नानाशृंगारपटलंगुल्फाभ्यांश्रीहरेःप्रभोः ११ सभाप्रां
गणवीथीभिर्मंडपैःपरिवेष्टितः वसन्तमाधुर्यधरःकूजित्कोकिलमानसः १२ मयूरैःषट्पदैर्व्याप्तःसरोभिःपरिसेवितः
जातोनिकुंजोजंघाभ्यांश्रीकृष्णस्यमहात्मनः १३ वृन्दावनंचजानुभ्यांराजन्सर्ववनोत्तमम् लीलासरोवरःसाक्षादूरु-
भ्यांपरमात्मनः १४ कोटिदेशात्स्वर्णभूमिर्दिव्यरत्नखचित्प्रभा उदरेरोमराजिश्चमाधव्योविस्तृतालताः १५ ना-
नापक्षिगणैर्व्याप्ताध्वनद्भ्रमरभूषिताः सपुष्पफलभारैश्चनताःसत्कुलजाइव १६ श्रीनाभिपंकजान्तस्यपंकजानिस



62

श्रीनाथंदेवदमनंपश्येद्गोवर्द्धनेगिरौ चतुर्णांभुविनाथानांयात्रायाःफलमाप्नुयात् ३७ ऐरावतस्यसुरभेःपादचिन्हानि यत्रवै तत्रनत्वानरःपापीवैकुण्ठंयातिमैथिल ३८ हस्तचिन्हंपादचिन्हंश्रीकृष्णस्यमहात्मनः दृष्ट्वानत्वानरःकश्चित्साक्षात्कृष्णपदंव्रजेत् ३९ एतानिनृपतीर्थानिकुंडाद्यायतनानिच श्रृंगानिगिरिराजस्यकिम्भूयःश्रोतुमिच्छसि ४० इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखंडे श्रीनारदबहुलाश्वसंवादेश्रीगिरिराजतीर्थवर्णनंनामसप्तमोऽध्यायः ७ बहुलाश्वउवाच केषुकेषुतदंगेषुकिंकिंतीर्थंसमाश्रितम् वदद्देवमहाभागत्वम्परावरवित्तमः १ श्रीनारदउवाच यत्रयस्यप्रसिद्धिःस्यात्तदंगम्परमंविदुः क्रमतोनास्त्यंगचयोगिरिराजस्यमैथिल २ यथासर्वगतम्ब्रह्मसर्वांगानिचतस्यवै विभूतेर्भावतःशश्वत्तथावक्ष्यामिमानद ३ श्रृंगारमण्डलस्याधोमुखंगोवर्द्धनस्यच यत्रान्नकूटंकृतवान्भगवान्व्रजवासिभिः ४ नेत्रंवैमानसीगंगानासाचन्द्रसरोवरः गोविन्दकुण्डोह्यधरोचिबुकंकृष्णकुण्डकः ५ राधाकुण्डंतस्यजिव्हाकपोलौललितासरः गोपालकुंडःकर्णौचकर्णान्तःकुसुमाकरः ६ मौलिचिन्हाशिलातस्यललाटंविद्धिमैथिल शिरश्चित्रशिलातस्यग्रीवावैवादिनीशिला ७ कांदुकम्पार्श्वदेशंश्चवदौष्णीषंकटिरुच्यते द्रोणतीर्थम्पृष्ठिदेशेलौकिकंचोदरेस्मृतम् ८ कदम्बखण्डमुरसिजीवःश्रृंगारमण्डलम् श्रीकृष्णपादचिन्हेतुमनस्तस्यमहात्मनः ९ हस्तचिन्हेतथाबुद्धिरैरावतपदेपदः सुरभेःपादचिन्हेषुपक्षौतस्यमहात्मनः १० पुच्छकुण्डेतथापुच्छंवत्सकुंडेबलंस्मृतम् रुद्रकुंडेतथाक्रोधंकामंशक्रसरोवरे ११ कुबेरतीर्थेचोद्यंगंब्रह्मतीर्थेप्रसन्नताम् यमतीर्थेह्यहंकारंवदन्तीत्थंपुराविदः १२ एवमंगानिसर्वत्रगिरिराजस्यमैथिल कथितानिमयातुभ्यंसर्वपापहराणिच १३ गिरिराजविभूतिंचयःश्रृणोतिनरोत्तमः सगच्छेद्धामपरमंगोलोकं-

३४ कदंबबकुलाशोकलताजालमनोहरम् मन्दारकुन्दवृन्दाढ्यंसुपक्षिगणसंकुलम् ३५ क्षणमात्रेणवैदेहलक्षयो
जनविस्तृतम् शतकोटियोजनानांलंबितंशेषवत्पुनः ३६ ऊर्ध्वंसमुन्नतंजातंपंचाशत्कोटियोजनम् करीन्द्रवत्स्थितंश
श्वत्पंचाशत्कोटिविस्तृतम् ३७ कोटियोजनदीर्घांगैःशृंगानांशतकैःस्फुरत् उच्चकैःस्वर्णकलशैःप्रासादमिवमैथिल
३८ गोवर्द्धनाख्यंतच्चाहुःशतशृंगंतथापरे एवंभूतंतुतदपिवर्द्धितंमनसोत्सुकम् ३९ कोलाहलेतदाजातेगोलोकेभ-
यविह्वले वीक्ष्योत्थायहरिःसाक्षाद्धस्तेनाशुततताडतम् ४० किंवर्द्धसेभोप्रच्छिन्नंलोकमाच्छाद्यतिष्ठसि किंवानचैते
वसितुंतच्छान्तिमकरोद्धरिः ४१ संवीक्ष्यतंगिरिवरंप्रसन्नाभगवत्प्रिया तस्मिन्रहःस्थलेराजन्रराजहरिणासह ४२
सोयंगिरिवरःसाक्षाच्छ्रीकृष्णेनप्रणोदितः सर्वतीर्थमयःश्यामोघनश्यामःसुरप्रियः ४३ भारतात्पश्चिमदिशिशा
ल्मलीद्वीपमध्यतः गोवर्द्धनोजन्मलेभेपत्न्यांद्रोणाचलस्यच ४४ पुलस्त्येनसमानीतोभारतेव्रजमण्डले वैदेहतस्या
गमनंमयातुभ्यंपुरोदितम् ४५ यथापुरावर्द्धितुमुत्सुकोयंतथापिधानंभविताभुवोवा विचिन्त्यशापंमुनिनापरेशोद्रोणा
त्मजायेतिददौक्षयार्थम् ४६ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेश्रीनारदबहुलाश्वसंवादे श्रीगिरिरा-
जोत्पत्तिवर्णनंनामनवमोऽध्यायः ९ श्रीनारदउवाच अत्रैवोदाहरंतीममितिहासम्पुरातनम् यस्यश्रवणमात्रेण-
महापापम्प्रणश्यति १ विजयोब्राह्मणःकश्चिद्गौतमीतीरवासकृत् आययौस्वमृणंनेतुंमथुराम्पापनाशिनीम् २ कृ
त्वाकार्यंगृहंगच्छन्गोवर्द्धनतटींगतः वर्तुलंतत्रपाषाणंचैकंजग्राहमैथिल ३ शनैःशनैर्वनोद्देशेनिर्गतोव्रजमण्डलात्
अग्रेददर्शचायांतंराक्षसंघोररूपिणम् ४ हृदयेचमुखंयस्यत्रयःपादाभुजाश्चषट् हस्तत्रयंचस्थूलौष्ठौनासाहस्तसमु
न्नता ५ सप्तहस्तालललज्जिह्वाकंटकाभास्तनूरुहाः अरुणेअक्षिणीदीर्घेदन्तावक्राभयंकराः ७ राक्षसोघुर्घुरं-

हस्त्रशः सरःसुहरिलोकस्यतानिरेजुरितस्ततः १७ श्रियलिंप्रांततोवायुर्मन्दगाम्यतिशीतलः जत्रुदेशात्कुभाजाता
मथुराद्वारकापुरी १८ भुजाभ्यांश्रीहरेर्जाताःश्रीदामाद्याष्टपार्षदाः नन्दाश्चमणिबधाभ्यामुपनन्दाःकराग्रतः १९ श्रीकृ
ष्णबाहुमूलाभ्यांसर्वेवैवृषभानवः कृष्णरोमसमुद्भूताःसर्वेगोपगणानृप २० श्रीकृष्णमनसोगावोवृषाधर्मधुरन्धराः
बुद्धेर्यवसगुल्मानिबभूवुर्मैथिलेश्वर २१ तद्वामांसात्समुद्भूतंगौरंतेजःस्फुरत्प्रभम् लीलाश्रीर्भूश्चविरजातस्माज्जा
ताहरेःप्रिया २२ लीलावतीप्रियातस्यतांराधांतुविदुःपरे श्रीराधायाभुजाभ्यांतुविशाखाललितासखी २३ सहच
र्य्यस्तथागोप्योराधारोमोद्भवानृप एवंगोलोकरचनांचकारमधुसूदनः २४ विधायसर्वंनिजलोकमित्थंश्रीराधयातत्र
रराजराजन् असंख्यलोकाण्डपतिःपरात्मापरःपरेशःपरिपूर्णदेवः २५ तत्रैकदासुन्दररासमण्डलेस्फुरत्क्वणन्नूपु
रशब्दसंकुले सुच्छत्रमुक्ताफलदामजामृतस्रवद्बृहद्विन्दुविराजतांगणे २६ श्रीमालतीनांस्कवितानजालतःस्वतस्त्र
वत्सन्मकरन्दगन्धिते मृदंगतालध्वनिवेणुनादितेसत्कंठगीतादिमनोहरेपरे २७ श्रीसुन्दरीरासरसेमनोरमेमध्य-
स्थितंकोटिमनोजमोहनम् जगादराधापतिमूर्जयागिराकृत्वाकटाक्षंरसदानकौशलम् २८ श्रीराधोवाच यदिरा
सेप्रसन्नोसिममप्रेम्णाजगत्पते तदाहंप्रार्थनांत्वत्तःकरोमिमनसोत्थितम् २९ श्रीभगवानुवाच इच्छावरयवा-
मोरुयातेमनसिवर्त्तते नदेयंयद्धियद्वस्तुप्रेम्णादास्यामिलाप्रिये ३० राधोवाच वृन्दावनेदिव्यनिकुंजपार्श्वेकृष्णा
तटेरासरसाययोग्यम् रहःस्थलंत्वंकुरुतान्मनोज्ञंमनोरथंमेजनदेवदेव ३१ नारदउवाच तथास्तुचोक्त्वाभग
वान्रहयोग्यंविचिन्तयन् नेत्राभ्यांपकजाभ्यांतुहृदयंसंददर्शह ३२ तदैवकृष्णहृदयाद्गोपीव्यूहस्यपश्यतः नि
र्गतंसजलंतेजोऽनुरागस्यैवचांकुरम् ३३ पतितंरासभूमौतद्ववृधेपर्वताकृति रत्नधातुमयंदिव्यंसुनिर्झरदरीवृतम्

नाकपतिर्भवेत् २७ गोवर्द्धनेस्मिन्योयज्ञंकृत्वादत्वास्रुदक्षिणाम् नाकेपदंसंविधायसविष्णोःपदमाव्रजेत् २८ चि
त्रकूटेपयस्विन्यांश्रीरामनवमीदिने पारिपात्रेतृतीयांवावैशाखस्यद्विजोत्तमः २९ कुकुभाद्रौचपूर्णायांनीलाद्रौद्वादशी-
दिने इन्द्रकीलेचसप्तम्यांस्नानंदानंतपःक्रियाः ३० तत्सर्वंकोटिगुणितंभवतीत्थंहिभारते गोवर्द्धनेतुतत्सर्वमनन्तंजाय
तेद्विज ३१ गोदावर्यांगुरौसिंहेमायापुर्यांतुकुंभगे पुष्करेपुष्यनक्षत्रेकुरुक्षेत्रेरविग्रहे ३२ चन्द्रग्रहेतुकाश्यांवैफा-
ल्गुनेनैमिषेतथा एकादश्यांशूकरेचकार्तिक्यांगणमुक्तिदे ३३ जन्माष्टम्यांमधोःपुर्य्यांरवाण्डवेद्वादशीदिने कार्ति
क्यांपूर्णिमायांतुवटेश्वरमहावटे ३४ मकरार्केप्रयागेतुबर्हिष्मत्यांहिवैधृतौ अयोध्यासरयूतीरेश्रीरामनवमीदिने
३५ एवंशिवचतुर्दश्यांवैजनाथस्तुभेवने तथादर्शेसोमवारेगंगासागरसंगमे ३६ दशम्यांसेतुबन्धेचश्रीरंगेसप्तमीदि-
ने एषुदानंतपःस्नानंजपंदेवद्विजार्चनम् ३७ तत्सर्वंकोटिगुणितंभवतीहद्विजोत्तम तत्तुल्यस्पुण्यमाप्नोतिगिरौगो
वर्द्धनेवरे ३८ गोविन्दकुण्डेविशदेयःस्नात्वाकृष्णमानसः प्राप्नोतिकृष्णसारूप्यंमैथिलेन्द्रनसंशयः ३९ अश्वमे
धसहस्राणिराजसूयशतानिच मानसीगंगयातुल्यंनभवंतिगिरौवरे ४० त्वयाविप्रकृतंसाक्षाद्गिरिराजस्यदर्शनम् -
स्पर्शनंचततःस्नानंनत्वत्तोप्यधिकोभुवि ४१ नमन्यसेचेन्मापश्यमहापातकिनम्परम् गोवर्द्धनशिलास्पर्शात्कृष्णा
सारूप्यतांगतः ४२ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीगिरिराजखण्डेनारदबहुलाश्वसंवादेश्रीगिरिराजमाहात्म्यं
नामदशमोऽध्यायः १० श्रीनारदउवाच इतिश्रुत्वासिन्द्धुवाक्यंब्राह्मणोविस्मयंगतः पुनःपप्रच्छतंराजन्गि
रिराजप्रभाववित् १ ब्राह्मणउवाच पुराजन्मनिकस्त्वम्भोत्वयाकिंकलुषंकृतम् सर्वंवदमहाभागत्वंसाक्षाद्दिव्य
दर्शनः २ सिन्द्धुउवाच पुराजन्मनिवैश्योहंधनीवैश्यसुतोमहान् आबाल्याद्द्यूतनिरतोविटगोष्ठीविशारदः ३-

शब्दंकृत्वाचापिबुभुक्षितः आययौसन्मुखेराजन्ब्राह्मणस्य स्थितस्यच ८ गिरिराजोद्भवेनासौपाषाणेनजघान-
तम् गिरिराजशिलास्पर्शात्त्यक्त्वासौराक्षसींतनुम् ९ पद्मपत्रविशालाक्षःश्यामसुन्दरविग्रहः वनमालीपीतवासामु
कुटीकुंडलान्वितः १० वंशीधरोवेत्रहस्तःकामदेवइवाऽपरः भूत्वाकृतांजलिर्विप्रंप्रणनाममुहुर्मुहुः ११ सिद्धउवा०
धन्यस्त्वंब्राह्मणश्रेष्ठपरत्राणपरायणः त्वयाविमोचितोहंवैराक्षसत्वान्महामते १२ पाषाणस्पर्शमात्रेणकल्याणंमे
बभूवह नकोपिमांमोचयितुंसमर्थोहित्वयाविना १३ ब्राह्मणउवाच विस्मितस्तववाक्येऽहंनत्वांमोचयितुंक्षमः -
पाषाणस्पर्शेपिफलंनजानेवदसुव्रत १४ सिद्धउवाच गिरिराजोहरेरूपःश्रीमान्गोवर्द्धनोगिरिः तस्यदर्शनमा-
त्रेणनरोयातिकृतार्थताम् १५ गन्धमादनयात्रायांयत्फलंलभतेनरः तस्मात्कोटिगुणंपुण्यंगिरिराजस्यदर्शने १६
पंचवर्षसहस्राणिकेदारेयत्तपःफलम् तच्चगोवर्द्धनेविप्रक्षणेनलभतेनरः १७ मलयाद्रौस्वर्णभारदानस्यापिचयत्फ-
लम् तस्मात्कोटिगुणंपुण्यंगिरिराजेहिमासिकम् १८ पर्वतेमंगलप्रस्थेयोदद्यान्हेमदक्षिणाम् सयातिविष्णुसारू-
प्यंमुक्तःपापशतैरपि १९ तत्पदंहिनरोयातिगिरिराजस्यदर्शनात् गिरिराजसमम्पुण्यमन्यत्तीर्थंनविद्यते २० ऋ-
षभाद्रौकूटकाद्रौकोलकाद्रौतथानरः सुवर्णशृंगयुक्तानांगवांकोटीर्ददातियः २१ महापुण्यंलभेत्सोपिविप्रान्संपूज्यय
त्नतः तस्माल्लक्षगुणंपुण्यंगिरौगोवर्द्धनेद्विज २२ ऋष्यमूकस्यसह्यस्यतथादेवगिरेःपुनः यात्रायांलभतेपुण्यंसमस्ता
याभुवःफलम् २३ गिरिराजस्ययात्रायांतस्मात्कोटिगुणम्फलम् गिरिराजसमंतीर्थंनभूतोनभविष्यति २४ श्रीशै
लेदशवर्षाणिकुण्डेविद्याधरेनरः स्नानंकरोतिसुकृतीशतयज्ञफलंलभेत् २५ गोवर्द्धनेपुच्छकुण्डेदिनैकंस्नानकृ-
न्नरः कोटियज्ञफलंसाक्षात्पुण्यमेतिनसंशयः २६ व्यंकटाद्रौवारिधारेमहेन्द्रेविन्ध्यपर्वते यज्ञंकृत्वाह्यश्वमेधंनरो

शाम् श्रीकृष्णलोकंप्रययौपरात्परंनिकुंजलीलाललितंमनोहरम् २३ विप्रोपितस्मात्पुनरागतोगिरिंगोवर्द्धनंसं
वैगिरीन्द्रदैवतम् प्रदक्षिणीकृत्यपुनःप्रणम्यतंययौगृहंमैथिलतत्प्रभाववित् २४ इदंमयातेकथितंप्रखण्डंसमुक्ति
दंश्रीगिरिराजखण्डम् श्रुत्वाजनःपापपरोपिचण्डंस्वप्नेनपश्येद्यमदूतदण्डम् २५ यःशृणोतिगिरिराजयशस्यं-
गोपराजनवकेलिरहस्यम् देवराजइवसोत्रसमेतिनन्दराजइवशान्तिममुत्र २६ इतिश्रीमद्गर्गाचार्यसंहितायां
श्रीगिरिराजखण्डेश्रीनारदबहुलाश्वसंवादेश्रीगिरिराजप्रभावप्रस्तावर्णनेसिद्धमोक्षोनामैकादशोऽध्यायः ११
श्रीराधाकृष्णार्पणमस्तु शुभंभवतु श्रीलक्ष्मीकान्तःसुप्रसन्नोस्तु श्रीकृष्णार्पणमस्तु ॐ ॐ-
इतिगिरिराजखण्डः समाप्तः श्रीरस्तु

65

वेश्यारक्तः कुमार्गोहंमदिरामदविह्वलः मात्रापित्राभार्ययापिभर्त्सितोहंसदाद्विज ४ एकदातुमयाविप्रपितरौग रदानतः मारितौचतथाभार्याखड्गेनपथिमारिता ५ गृहीत्वातद्धनंसर्वंवेश्ययासहितःखलः दक्षिणाशांचगतवा नूदस्युकर्मातिनिर्दयः ६ एकदातुमयावेश्यानिःक्षिप्तात्वंधकूपके दस्युनाहिमयापाशैर्मारिताःशतशोनराः - ७ धनलोभेनभोविप्रब्रह्महत्याशतंकृतम् क्षत्रिहत्यावैश्यहत्याःशूद्रहत्याःसहस्रशः ८ एकदामांसमाने तुंमृगान्हन्तुंवनेगतम् सर्पादशात्पदास्पृष्टोदुष्टमानिधनंगतम् ९ संताड्यमुद्गरैर्घोरैर्यमदूताभयंकरा बध्वा- मानरकंनिन्युर्महापातकिनंखलम् १० मन्वन्तरंतुपतितःकुंभीपाकेमहाखले कल्पैकंतमसूमौचमहादुःखंगतः खलः ११ चतुराशीतिलक्षाणानरकाणाम्पृथक्पृथक् वर्षंवर्षंनिपतितोनिर्गतोहंयमेच्छया १२ ततस्तुभार- तेवर्षेप्राप्तोहंकर्मवासनाम् दशवारंशूकरोहंव्याघ्रोहंशतजन्मसु १३ उष्ट्रोहंजन्मशतकंमहिषःशतजन्मसु - सर्पोहंजन्मसाहस्रमारितोदुष्टमानवैः १४ एवंवर्षायुतान्तेतुनिर्जलेविपनेद्विज राक्षसश्चेद्दशोजातोविकरालो महाखलः १५ कस्यशूद्रस्यदेहंवैसमारुह्यव्रजंगतः वृन्दावनस्यनिकटेयमुनानिकटाच्छुभात् १६ समुत्थि तायष्टिहस्ताःश्यामलाःकृष्णपार्षदाः तैस्ताडितोधर्षितोहंव्रजभूमौपलायितः १७ बभुक्षितोबहुदिनैस्त्वां- खादयितुमागतः तावन्त्वयाताडितोहंगिरिराजाश्मनामुने १८ श्रीकृष्णकृपयासाक्षात्कल्याणमेवभूवह- श्रीनारदउवाच एवंप्रवदतस्तस्यगोलोकाच्चमहारथः १९ सहस्रादित्यसंकाशोहयायुतसमन्वितः २० - सहस्रचक्रध्वनिभृल्लक्षपार्षदमण्डितः मंजीरकिंकिणीजालीमनोपर्यासमागतः २१ पश्यतस्तस्यविप्रस्यतत्- मानेतुंविदेहराट् तमागतंरथंदिव्यंतेमतुर्विप्रनिर्जरौ २२ ततःसमारुह्यरथंसमिद्धोविरंजयन्मैथिलमण्डलंदि-

ग० सं०
६५

मा० अ०
१

श्रीगणेशायनमः श्रीसरस्वत्यैनमः अतसीकुसुमोपमेयकांतिर्यमुनाकूलकदंबमध्यवर्ती नवगोपवधूविलास-
शालीवनमालीवितनोतुमंगलानि १ परिकरीकृतपीतपटंहरिंशिखिकिरीटनतीकृतकंधरम् लकुटवेणुकरंचलकुण्डलं
पटुतरंनटवेशधरंभजे २ बहुलाश्वउवाच श्रुतिरूपाद्यागोप्योभूतपूर्ववरान्मुने कथंश्रीकृष्णचन्द्रेणजाताःपूर्णं
मनोरथाः ३ गोपालकृष्णचरितंपवित्रंपरमाद्भुतम् एतद्वदमहाबुद्धेत्वम्परावरवित्तम ४ श्रीनारदउवाच श्रुतिरूपा
श्चयागोप्योगोपानांसुकुलेव्रजे लेभिरेजन्मवैदेहशेषशायिवराच्छ्रुतात् ५ कमनीयंनन्दसूनुंवीक्ष्यवृन्दावनेचताः वृ
न्दावनेश्वरींवृन्दांभेजिरेतद्वरेच्छया ६ वृन्दादत्ताद्वरादाशुप्रसन्नोभगवान्हरिः नित्यंतासांगृहेयातिरासार्थंभक्तवत्स-
लः ७ एकदातुनिशीथिन्याव्यतीतेप्रहरद्वये रासार्थंभगवान्कृष्णःप्राप्तवान्तद्गृहेनृप ८ तदाउत्कंठितागोप्यः कृ-
त्वातत्पूजनम्परम् पप्रच्छुःपरयाभक्त्यागिरामधुरयाप्रभुं ९ गोप्यऊचुः कथंनचागतःशीघ्रंनोगृहान्वृजिनार्दन उत्कं
ठितानांगोपीनांत्वयिचंद्रेचकोरवत् १० श्रीभगवानुवाच योयस्यचित्तेवसतिनसदूरेकदाचन खेसूर्यंकमलंभूमौ
दृष्ट्वेदंस्फुरतिप्रियाः ११ भाण्डीरेमेगुरुःसाक्षाद्दुर्वासाभगवान्मुनिः आगतोद्यप्रियास्तस्यसेवार्थंगतवानहम् १२ गु-
रुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः गुरुःसाक्षात्परब्रह्मतस्मैश्रीगुरवेनमः १३ अज्ञानतिमिरांधस्यज्ञानांजनशलाकया
चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः १४ स्वगुरुंमांविजानीयान्नावमन्येतकर्हिचित् नमर्त्यबुद्ध्यासेवेतसर्वदेवमयोगु
रुः १५ तस्मात्तत्पूजनंकृत्वानत्वातत्पादपंकजम् आगतोहंविलम्बेनभवतीनांगृहान्प्रियाः १६ श्रीनारदउवाच
श्रुत्वातत्परमंवाक्यंगोप्यःसर्वास्तुविस्मिताः कृतांजलिपुटाऊचुःश्रीकृष्णंनम्रकंधराः १७ गोप्यऊचुः परिपूर्णतम-
स्यापिदुर्वासास्तेगुरुःस्मृतः अहोतद्दर्शनंकर्तुमनोनश्चोद्यतंप्रभो १८ अद्यदेवनिशीथिन्याव्यतीतेप्रहरद्वये कथंतद्दर्श-

66

६५

चोगोप्योनत्वातंमुनिपुंगवम् यमुनामेत्यमुन्युक्तंचोन्कातीर्त्वानदींनृप ३९ श्रीकृष्णपार्श्वमाजग्मुर्विस्मितामं
गलायनाः ४० अथरासेगोपवध्वःसन्देहमनसोत्थितम् पप्रच्छुःश्रीहरिंवीक्ष्यरहःपूर्णमनोरथाः ४१ गोप्यऊचुः
दुर्वाससोदर्शनंभोक्तुमस्माभिरग्रतः युवयोर्वाक्यतश्चात्रसन्देहोयंप्रजायते ४२ यथागुरुस्तथाशिष्योमृषावा
दीनसंशयः जारस्त्वमसिगोपीनारसिकोबाल्यतःप्रभो ४३ कथंबालयतिस्त्वंवैवदताहुजिनार्दन कथंदूर्वा
सपीत्वादुर्वासाबहुभुक्मुनिः ४४ नोजातएषसन्देहःपश्यंतीनांव्रजेश्वर श्रीभगवानुवाच निर्ममोनिरहंकारःस
मानोसर्वगःपरः सदावेषम्यरहितोनिर्गुणोहंनसंशयः ४५ तथापिभक्तान्भजतोभजेहंवैयथातथा तथैवसा
धुर्ज्ञानीवैवैषम्यरहितःसदा ४६ नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनाम् जोषयेत्सर्वकर्माणिविद्वान्युक्तःसमा
चरन् ४७ यस्यसर्वेसमारंभाःकामसंकल्पवर्जिताः ज्ञानाग्निदग्धकर्माणंतमाहुःपंडितंबुधाः ४८ निराशी
र्यतचित्तात्मात्यक्तसर्वपरिग्रहः शारीरंकेवलंकर्मकुर्वन्नाप्नोतिकिल्बिषम् ४९ नहिज्ञानेनसदृशंपवित्रमिहविद्य
ते तत्स्वयंयोगसंसिद्धःकालेनात्मनिविन्दति ५० ब्रह्मण्याधायकर्माणिसंगंत्यक्त्वाकरोतियः लिप्यतेनस-
पापेनपद्मपत्रमिवाम्भसा ५१ तस्मान्मुनिस्तुदुर्वासाबहुभुक्त्वन्हितेरतः नतस्यभोजनेच्छास्यादुर्वारसमिता-
शनः ५२ श्रीनारदउवाच इतिश्रुत्वावचोगोप्यःसर्वास्ताश्छिन्नसंशयाः श्रुतिरूपाज्ञानमय्योबभूवुर्मैथिलेश्व
र ५३ इतिश्रीमद्गर्गाचार्यसंहितायांमाधुर्य्यखण्डेश्रीनारदबहुलाश्वसंवादेश्रुतिरूपोपाख्याननामप्रथमोऽ-
ध्यायः १ श्रीनारदउवाच गोपीनामृषिरूपाणामाख्यानंशृणुमैथिल सर्वपापहरंपुण्यंकृष्णभक्तिविवर्धन
म् १ वंगेषुमंगलोनामगोपश्चासीन्महामनाः लक्ष्मीवाञ्छुतसम्पन्नोनवलक्षगवाम्पतिः २ भार्याःपंचसहस्राणि

नंभूयादस्माकम्परमेश्वर १९ तथामध्येदीर्घनदीयमुनाप्रतिबन्धका कथंतन्तरणंनावमृनेदेवभविष्यति २० श्रीभगवानुवाच अवश्यमेवगन्तव्यंभवतीभिर्यदाप्रियाः यमुनामेत्यचैतद्वैवक्तव्यंमार्गहेतवे २१ यदिकृष्णोबालयतिः सर्वदोषविवर्जितः तर्हिनोदेहिमार्गंवैकालिन्दिसरितांवरे २२ इत्युक्तेवचनेकृष्णामार्गंवोदास्यतिस्वतः सुखेनतेनव्रजतयूयंसर्वाव्रजांगनाः २३ श्रीनारदउवाच इतिश्रुत्वाथतद्वाक्यपात्रैर्दीर्घैर्व्रजांगनाः षट्पंचाशतमान्भोगान्नीत्वासर्वाः पृथक्पृथक् २४ यमुनामेत्यहर्युक्तंजगुरानतकंधराः सद्यः कृष्णाददौमार्गंगोपीभ्योमैथिलेश्वर २५ तेनगोप्योगताःसर्वाभाण्डीरंचातिविस्मिताः ततःप्रदक्षिणीकृत्यमुनिंदुर्वाससंनताः २६ नत्वातद्दर्शनंचक्रुःपुरोधृत्वाशनम्बहु मेपूर्वंचापिमेपूर्वंमन्नंभोज्यंत्वयामुने २७ एवंविवदमानानांगोपीनांभक्तिलक्षणम् विज्ञायमुनिशार्दूलःप्रोवाचविमलंवचः २८ मुनिरुवाच गोप्यःपरमहंसोहंणनकृत्योहिनिःक्रियः तस्मात्सुखेमेदातव्यंस्वस्वंचाप्यशनंकरैः २९ श्रीनारदउवाच एवंविदारितंतेनसुखेगोप्योतिहर्षिताः षट्पंचाशतमान्भोगान्स्वान्स्वान्सर्वाःसमाक्षिपन् ३० क्षिपंतीनांचगोपीनांपश्यंतीनांमुनीश्वरः जघासकोटिशोभारान्भोगान्सर्वान्क्षुधातुरः ३१ विस्मितानांचगोपीनांपश्यंतीनाम्परस्परम् इत्थंमूत्यानिपत्रानिबभूवुर्नृपसत्तम ३२ अथगोप्योमुनिंशान्तंनत्वातम्भक्तवत्सलम् विस्मिताःप्रयताःप्राहुःसर्वाःपूर्णमनोरथाः ३४ गोप्यऊचुः मुनेरागमनेपूर्वंकृष्णोक्त्वासानदीम् तीर्त्वागतास्त्वत्समीपंदर्शनार्थंशुभेच्छया ३४ इतःकथंगमिष्यामःसन्देहोयंमहानभूत् तर्हिधीहिनमस्तुभ्यंयेनपथालघुर्भवेत् ३५ मुनिरुवाच सुखेनातःप्रगन्तव्यंभवतीभिर्यदास्वतः यमुनामेत्यचैतद्वैवक्तव्यंमार्गहेतवे ३६ यदिदूर्वारसंपीत्वादुर्वासाःकेवलंक्षितौ व्रतीनिरन्नोनिर्वारीवर्त्ततेपृथिवीतले ३७ तर्हिनोदेहिमार्गंवैकालिंदिसरितांवरे इत्युक्तेवचनेकृष्णामार्गंवोदास्यतिस्वतः ३८ श्रीनारदउवाच इतिश्रुत्वाव-

मेमासिचक्रुःकात्यायनीव्रतम् उपचारैःषोडशभिःकृत्वादेवींमहीमयीम् ३ अरुणोदयवेलायांस्नाताःश्रीयमुनाजले
नित्यंसमेताआजग्मुर्गायन्त्योभगवद्गुणम् ४ एकदाताःस्ववस्त्राणितीरेन्यस्यव्रजांगनाः विजह्रुर्यमुनातोयेकरा
भ्यांसिंचतीर्मिथः ५ तासांवासांसिसंनीत्वाभगवान्प्रातरागतः त्वरंकदंबमारुह्यचौरवन्मौनमास्थितः ६ तान
वीक्ष्यस्ववासांसिविस्मितागोपकन्यकाः नीपस्थितंविलोक्याथसलज्जाजहसुर्नृप ७ प्रतीच्छंत्यःस्ववासांसिस-
र्वास्त्वागत्यचान्तिके अन्यथानहिदास्यामिवृक्षात्कृष्णउवाचह ८ राजंत्यस्ताःशीतजलेहसंत्यःप्राहुराननताः ९ गो
प्यऊचुः हेनन्दनन्दनमनोहरगोपरत्नगोपालवंशनवहंसमहार्तिहारिन् श्रीश्यामसुन्दरतवोदितमद्यवाक्यंकुर्मःकथं
विवसनाःकिलतेपिदास्यः १० गोपांगनावसनमुट्नवनीतहारीजातोव्रजेऽतिरसिकःकिलनिर्भयोसि वासांसिदेहि
नहिचेन्मथुराधिपायवक्ष्यामहेऽनयमतीवकृतंत्वयात्र ११ श्रीभगवानुवाच दास्योममैवयदिसुन्दरमन्दहासाइ-
च्छंतुवैत्यकिलचात्रकदंबमूले नोचेत्समस्तवसनानिनयामिगेहान्तस्मात्करिष्यथममैववचोविलंबात् १२ श्रीनारद
उवाच तदातानिर्गताःसर्वाजलाद्गोप्योतिवेपिताः आननतायोनिमाच्छाद्यपाणिभ्यांशीतकर्शिताः १३ कृष्णादत्ता-
निवासांसिदधुःसर्वाव्रजांगनाः मोहिताश्चास्थितास्तत्रकृष्णेलज्जायितेक्षणाः १४ ज्ञात्वातासामभिप्रायंपरमंप्रे
मलक्षणम् आहमन्दस्मितःकृष्णःसमंताद्वीक्ष्यतांवचः १५ श्रीभगवानुवाच भवतीभिर्मार्गशीर्षेकृतंकात्या
यनीव्रतम् मदर्थंतच्चसफलंभविष्यतिनसंशयः १६ परश्वोहंनिचादव्यांकृष्णातीरेमनोहरे युष्माभिश्चकरिष्या
मिरासंपूर्णमनोरथम् १७ इत्युक्त्वाथगतेकृष्णेपरिपूर्णतमेहरौ प्राप्तानन्दामन्दहासागोप्यःसर्वागृहान्ययुः-
१८ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्य्यखण्डेनारदबहुलाश्वसंवादेमैथिलोपाख्यानंनामतृतीयोऽध्यायः ३



68

बभूवुस्तस्यमैथिल कदाचिद्दैवयोगेनधनंसर्वंक्षयंगतम् ३ चौरैर्नीतास्तस्यगावःकाश्चिद्राजाहृताबलात् एवंदैन्ये-
चसम्प्राप्तेदुःखितोमंगलोऽभवत् ४ तदाश्रीरामस्यवराद्दण्डकारण्यवासिनः ऋषयःस्त्रीत्वमापन्नाबभूवुस्तस्य-
कन्यकाः ५ दृष्ट्वाकन्यासमूहंसदुःखीगोपोथमंगलः उवाचदैन्यदुःखाढ्यश्चाधिव्याधिसमाकुलः ६ मंगल-
उवाच किंकरोमिक्वगच्छामिकोमेदुःखंव्यपोहति श्रीर्नभूतिर्नाभिजननंनबलंमेस्तिसाम्प्रतम् ७ धनंविनाकथंचा-
सांविवाहोहाभविष्यति भोजनेयत्रसंदेहोधनाशातत्रकीदृशी ८ सन्तिदैन्येकन्यकाःस्युःकाकतालीयवद्गृहे त-
स्मात्कस्यापिराज्ञस्तुधनिनोबलिनेस्त्वहम् ९ दास्याम्येताःकन्यकाश्चकन्यानांसौख्यहेतवे श्रीनारदउवाच कद
र्थीकृत्यताःकन्याएवंबुद्ध्यास्थितोऽभवत् तदैवमाथुराद्देशाद्गोपश्चैकःसमागतः १० तीर्थयायीजयोनामवृद्धोबु
द्धिमतांवरः तन्मुखान्नन्दराजस्यश्रुतंवैभवमद्भुतम् ११ नन्दराजस्यवलयेमंगलोदैन्यपीडितः विचिन्त्यप्रेषयामा
सकन्यकाश्चारुलोचनाः १२ तानन्दराजस्यगृहेकन्यकारत्नभूषिताः गवांगोमयहारिण्योबभूवुर्गोव्रजेषुच १३-
श्रीकृष्णंसुन्दरंदृष्ट्वाकन्याजातिस्मराश्चताः कालिन्दीसेवनंचक्रुर्नित्यंश्रीकृष्णहेतवे १४ अथैकदाश्यामलांगी
कालिन्दीदीर्घलोचना ताभ्यःस्वदर्शनन्दत्वावरंदातुंसमुद्यता १५ तावत्त्रिरव्रजेशस्यपुत्रोभूयात्पतिश्चनः तथास्त्व
चोक्त्वाकालिन्दीतत्रैवांतरधीयत १६ ताःप्राप्तावृन्दकारण्येकार्तिक्यांरासमण्डले ताभिःसार्द्धंहरीरेमेस्फुरीभिः
सुरराडिव १७ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेश्रीनारदबहुलाश्वसंवादेऋषिरूपोपाख्याननाम-
द्वितीयोऽध्यायः २ श्रीनारदउवाच मैथिलानांगोपिकानामाख्यानंशृणुमैथिल दशाश्वमेधतीर्थस्यफलदंभ
क्तिवर्द्धनम् १ श्रीरामस्यवराज्जातानवनन्दगृहेषुयाः कमनीयंनन्दसूनुंदृष्ट्वातामोहमास्थिताः २ मार्गशीर्षेशु-

नाममैथिल बभूवतस्यांविमलोराजाधर्मपरायणः २ कुबेरइवलोकाढ्योमनस्वीमृगराडिव विष्णुभक्तःप्रशांतात्माप्र
न्हादइवमूर्तिमान् ३ भार्याणांषट्सहस्राणिबभूवुस्तस्यभूपतेः रूपवंत्यःकंजनेत्रावंध्यत्वंताःसमागताः ४ अपत्यं
केनपुण्येनभूयान्मेप्रवदन्नृप एवंचिन्तयतस्तस्यबहवोवत्सरागताः ५ एकदायाज्ञवल्क्यस्तुमुनीन्द्रस्तमुपागतः तंन
त्वाभ्यर्च्यविधिवन्नृपस्तत्सन्मुखेस्थितः ६ चिन्ताकुलंनृपंवीक्ष्ययाज्ञवल्क्योमहामुनिः सर्वज्ञःसर्वविच्छांतःप्रत्युवाच
नृपोत्तमम् ७ याज्ञवल्क्यउवाच राजन्कृशोसिकस्मात्त्वंकाचिंतानेहृदिस्थिता समस्तांगेषुकुशलंदृश्यतेसांप्र
तंतव ८ विमलउवाच ब्रह्मंस्त्वंकिंनजानासितपसादिव्यचक्षुषा तथाप्यहंवदिष्यामिभवतोवाक्यगौरवात् ९
अनपत्येनदुःखेनव्याप्तोऽहंमुनिसत्तम किंकरोमितपोदानंवदयेनभवेत्प्रजा १० नारदउवाच इतिश्रुत्वायाः-
ज्ञवल्क्योध्यानस्तिमितलोचनः दीर्घंदध्यौमुनिश्रेष्ठोभूतंभव्यंविचिन्तयत् ११ याज्ञवल्क्यउवाच अस्मिन्जन्मनि
राजेन्द्रपुत्रोनैवचनैवच पुत्र्यस्तवभविष्यंतिकोटिशोनृपसत्तम १२ राजोवाच पुत्रंविनापूर्वऋणान्नकोपिप्रमुच्यतेभू
मितलेमुनीन्द्र सदाह्यपुत्रस्यगृहंव्यथास्यात्सुरंत्विहामुत्रसुखंनकिंचित् १३ याज्ञवल्क्यउवाच माखेदंकुरुराजे
न्द्रपुत्र्योदेयास्त्वयाखलु श्रीकृष्णायभविष्यायपरंदायादिकैःसह १४ तेनैवतेसर्वऋणंदेवर्षिपितृणांप्रभो मुच्यते
नृपशार्दूलपरंमोक्षमवाप्स्यसि १५ श्रीनारदउवाच तदातिहर्षितोराजाश्रुत्वावाक्यंमहामुनेः पुनःपप्रच्छसन्देहंया-
ज्ञवल्क्यंमहामुनिम् १६ राजोवाच कस्मिन्कुलेकुत्रदेशेभविष्यःश्रीहरिःस्वयम् किंवर्णःकीदृशोरूपोवर्षैश्चकतिभि
र्गतैः १७ याज्ञवल्क्यउवाच द्वापरस्ययुगस्यास्यतवराज्यान्महाभुज अवशेषेवर्षशतेतथापंचदशेनृप १८ त
स्मिन्वर्षेयदुकुलेमथुरायांयदोःपुरि भाद्रेबुधेकृष्णपक्षेधात्रर्क्षेहर्षणेवृषे १९ बवेष्टम्यामर्द्धरात्रेनक्षत्रेशमहोदये अं-

श्रीनारदउवाच कौशलानांगोपिकानांवर्णनंशृणुमैथिल सर्वपापहरम्पुण्यंश्रीकृष्णचरितामृतम् १ नवोपनन्दगेहेषुजातारामवराद्व्रजे परिणीतागोपजनैरूलभूषणभूषिताः २ पूर्णचन्द्रप्रतीकाशानवयौवनसंयुताः पद्मिन्योहंसगमनाः पद्मपत्रविलोचनाः ३ जारधर्मेणसुस्नेहंसुहृढसर्वतोधिकम् चक्रुः कृष्णेनन्दसुतेकमनीयेमहात्मनि ४ ताभिःसार्द्धंसदाहास्यंव्रजवीथीषुमाधवः स्मितैःपीनपटादानैःकर्षणैःसचकारह ५ दधिविक्रयार्थंयान्त्यः-कृष्णकृष्णेतिचाब्रुवन् कृष्णेहिप्रेमसंयुक्ताभ्रमंत्यःकुंजमण्डले ६ खेवायौवाग्निसलिलेमत्त्वांज्योतिर्दिशासुच द्रुमेषुजनवृन्देषुतासांकृष्णोहिलक्ष्यते ७ प्रेमलक्षणसंयुक्ताःश्रीकृष्णहृतमानसाः अष्टभिःसात्विकैर्भावैःसम्पन्नास्ताश्चयोषितः ८ प्रेम्णापरमहंसानांपदवींसमुपागताः कृष्णानन्दाःप्रभावन्त्योव्रजवीथीषुतान्नृप ९ जडाजडंनजानंत्योजडोन्मत्तपिशाचवत् अब्रुवन्त्याब्रुवंत्योवागतलज्जागतव्यथाः १० एवंकृतार्थतांप्राप्तास्तन्मयायाश्चगोपिकाः बलादाकृष्यकृष्णस्यचुचुम्बुर्मुखपंकजम् ११ तासांतपःकिंकथयामिराजन्पूर्णेपरेब्रह्मणिवासुदेवे याश्चक्रिरेप्रेमहृदिंद्रियाद्यैर्विसृज्यलोकव्यवहारमार्गम् १२ यारासरंगेविनिधायबाहुंकृष्णांसयोःप्रेमविभिन्नचित्ताः चक्रुर्वशेकृष्णमलंतपस्त्वहृत्कुंनशक्तोवदनैःफणीन्द्रः १३ योगेनसांख्येनशुभेनकर्मणान्यायादिवैशेषिकतत्त्ववित्तमैः यत्प्राप्यतेतत्त्वपदंविदेहराड्संप्राप्यतेकेवलभक्तिभावतः १४ भक्त्यैववश्योहरिरादिदेवःसदाप्रणामंकिलचात्रगोप्यः सांख्यंचयोगंनकृतंकदापिप्रेम्णैवयस्यप्रकृतिंगताःस्युः १५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्य्यखण्डेश्रीनारदबहुलाश्वसंवादेकौशलोपाख्याननामचतुर्थोऽध्यायः ४ श्रीनारदउवाच अयोध्यावासिनीनांतुगोपीनांवर्णनंशृणु चतुःपदार्थदंसाक्षात्कृष्णप्राप्तिकरम्परम् १ सिन्धुदेशेषुनगरीचंपका-

माल्यतिसुन्दरः १६ द्विभुजोगोपसूनुश्चपरंत्वेतद्विलक्षणम् त्वयाचतुर्भुजश्चोक्तोवसुदेवात्मजोहरिः १७ -
किंकर्तव्यंवदनृपमुनिवाक्यमृषानहि यत्रयत्रयथेच्छातेतत्रमांप्रेषयप्रभो १८ नारदउवाच इतिचिन्तयतस्तस्य
विस्मितस्यनृपस्यच गजाह्वयात्सिन्धुदेशान्जेतुंभीष्मःसमागतः १९ विमलउवाच याज्ञवल्क्येनपूर्वोक्तो
मथुरायांहरिःस्वयम् वसुदेवस्यदेवक्यांभविष्यतिनसंशयः २० नजातोवसुदेवस्यसकाशेद्यहरिःपरः ऋ-
षिवाक्यंमृषानस्यात्कस्मैदास्यामिकन्यकाः २१ महाभागवतःसाक्षात्त्वंपरावरवित्तमः जितेन्द्रियोबाल्यभावा
द्धीरोधन्वीवसूत्तमः २२ एतद्वदमहाबुद्धेकिंकर्तव्यंमयाध्रुवं नारदउवाच विमलस्याहगांगेयोमहाभागवतःकविः
२३ दिव्यदृक्धर्मतत्त्वज्ञःश्रीकृष्णस्यप्रभाववित् २४ भीष्मउवाच हेराजन्गुप्तमाख्यानंवेदव्यासमुखाच्छ्रुतम्
सर्वपापहरंपुण्यंशृणुहर्षविवर्द्धनम् २५ देवानांरक्षणार्थायदैत्यानांहिवधायच वसुदेवगृहेजातःपरिपूर्णतम-
मोहरिः २६ अर्द्धरात्रेकंसभयान्नीत्वाशौरिश्चतंत्वरम् गत्वाचगोकुलेपुत्रंनिधायशयनेनृप २७ यशोदान
न्दयोःपुत्रींमायांनीत्वापुरंययौ ववृधेगोकुलेकृष्णोगुप्तोज्ञातोनकैर्नृभिः सोद्यैवंवृन्दकारण्येहरिर्गोपालवेषधृक्-
२९ एकादशसमास्तत्रगूढोवासंकरिष्यति दैत्यंकंसंघातयित्वाप्रकटःसंभविष्यति ३० अयोध्यापुरवासिन्यः
श्रीरामस्यवराञ्चयाः ताःसर्वास्तवभार्य्यास्कबभूवुःकन्यकाःशुभाः ३१ गूढायदेवदेवायदेयाःकन्यास्त्वया-
खलु नविलम्बःक्वचित्कार्य्योदेहःकालवशोह्ययम् ३२ इत्युक्त्वाथगतेभीष्मेसर्वज्ञेहस्तिनापुरम् दूतंस्वंप्रेष
यामासविमलोनन्दसूनवे ३३ इतिश्रीमद्गर्गाचार्य्यसंहितायांश्रीमाधुर्य्यखण्डेनारदबहुलाश्वसंवादेऽयोध्यापु
रवासिन्युपाख्यानंनामषष्ठोऽध्यायः ६ श्रीनारदउवाच अथदूतःसिन्धुदेशान्माथुरान्पुनरागतः चर-

धकारावृतेकालेदेवक्यांशौरिमन्दिरे २० भविष्यतिहरिःसाक्षादरिण्यामध्वरेऽभवन् श्रीवत्सांकोघनश्यामोवनमाल्य
तिसुन्दरः २१ पीतांवरःपद्मनेत्रोभविष्यतिचतुर्भुजः तस्मैदेयात्वयाकन्याश्रायुस्तेऽस्तिनसंशयः २२ इतिश्रीम-
द्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेऽयोध्यापुरवासिन्युपाख्यानोनामपंचमोऽध्यायः ५ ६२
नारदउवाच एवमुक्त्वागतेसाक्षाद्याज्ञवल्क्येमहामुनौ अतीवहर्षमापन्नोविमलश्चंपकापतिः १ अयोध्यापुर-
वासिन्यःश्रीरामस्यवराद्वयाः बभूवुस्तस्यभार्यासुताःसर्वाःकन्यकाःशुभाः २ विवाहयोग्यास्ताहृष्ट्वाचिन्तयंश्चम्पका-
पतिः याज्ञवल्क्यवचःस्मृत्वादूतमाहनृपेश्वरः ३ विमलउवाच मथुरांगच्छदूतत्वंगत्वाशौरिगृहंशुभम् दर्शनी
यस्त्वयापुत्रोवसुदेवस्यसुन्दरः ४ श्रीवत्सांकोघनश्यामोवनमालीचतुर्भुजः यदिस्यात्तर्हिदास्यामितस्मैसर्वास्तु
कन्यकाः ५ नारदउवाच इतिवाक्यंततःश्रुत्वादूतोसौमथुरांगतः पप्रच्छसर्वाभिप्रायंमाथुरांश्चमहाजनान् ६
तद्वाक्यंमाथुराःश्रुत्वाकंसभीताःसुबुद्धयः रहसिप्राहुतद्दूतंकर्णांतेमन्दवाक्यया ७ माथुराऊचुः वसुदेव
स्ययेपुत्राःकंसेनबहवोहताः एकावशिष्टावरजाकन्यासापिदिवंगता ८ वसुदेवोस्तिचात्रैवद्यापुत्रोदीनमानसः-
इदंनकथनीयंहित्वयाकंसभयेपुरे ९ शौरिसन्तानवार्तांयोवक्तिचेन्मथुरापुरे तंदंडयतिकंसोसौशौर्य्येष्टमशिशूरि
पुः १० नारदउवाच जनवाक्यंततःश्रुत्वादूतोवैचम्पकापुरीम् गत्वाथकथयामासराज्ञेकारणमद्भुतम् ११ दूत-
उवाच मथुरायामस्तिशौरिरनपत्योऽतिदीनवत् तत्पुत्रास्तुपराजाताःकंसेननिहताःश्रुतम् १२ एकावशिष्टाक-
न्यापिस्वंगताकंसहस्ततः एवंश्रुत्वायदुपुरान्निर्गतोहंशनैःशनैः १३ चरन्वृन्दावनेरम्येकालिन्दीनिकटेशुभे अक-
स्माल्लतिकावृन्देहष्टःकश्चिच्छिशुर्मया १४ तल्लक्षणसमोराजन्गोगोपगणमध्यतः श्रीवत्सांकोघनश्यामोवन-

यागिरा १७ श्रीभगवानुवाच महामतेवरंब्रूहियत्तेमनसिवर्त्तते याज्ञवल्क्यस्यवचसाजातंमद्दर्शनंतव १८ -
विमलउवाच मनोमेभ्रमरीभूतंसदात्वत्पादपंकजे वासंकुर्याद्देवदेवनान्येच्छामेकदाचन १९ श्रीनारदउवाच
इत्युक्त्वाविमलोराजासर्वकोशधनंमहत् द्विपवाजिरथैःसार्द्धंचक्रेआत्मनिवेदनम् २० समर्घ्यविधिनासर्वाः कन्यका
हरयेनृप नमश्चकारकृष्णायविमलोभक्तवत्सलः २१ तदाजयजयारावोबभूवजनमण्डले ववृषुःपुष्पवर्षाणिदेवता
गगनस्थिताः २२ तदैवकृष्णसारूप्यंप्राप्तोनंगस्फुरद्द्युतिः शतसूर्य्यप्रतीकाशोद्योतयन्मण्डलंदिशाम् २३ वैन
तेयंसमारुह्यनत्वाश्रीगरुडध्वजम् सभार्य्यःपश्यतांनृणांवैकुण्ठंविमलोययौ २४ दत्वामुक्तिंनृपतयेश्रीकृष्णोभग
वान्स्वयम् तत्सुताःसुन्दरीर्नीत्वाव्रजमण्डलमाययौ २५ तत्रकामवनेरम्येदिव्यमन्दिरसंयुते क्रीडन्त्यःकंदुकैःसर्वाः
स्तस्थुःकृष्णप्रियाःशुभाः २६ यावतीश्चप्रियामुख्यास्तावद्रूपधरोहरिः रराजरासेव्रजराड्रंजयन्तन्मनःशुभः २७
रासेविमलपुत्रीणामानन्दजलबिन्दुभिः च्युतैर्विमलकुण्डोऽभूत्तीर्थानांतीर्थमुत्तमम् २८ दृष्ट्वापीत्वाचतंस्नात्वापूज
यित्वानृपेश्वर छित्वामेरुसमंपापंगोलोकंयातिमानवः २९ अयोध्यावासिनीनांतुकथांयःशृणुयान्नरः सव्रजेद्धाम-
परमंगोलोकंयोगिदुर्लभम् ३० इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेऽयोध्यापुरवासि
न्युपाख्यानंनामसप्तमोऽध्यायः ७ श्रीनारदउवाच गोपीनांयज्ञसीतानामाख्यानंशृणुमैथिल सर्वपापहरंपु
ण्यंकामदंमंगलायनम् १ उशीनरोनामदेशोदक्षिणस्यांदिशिस्थितः एकदायत्रपर्जन्योनववर्षसमादश २ धनवंतस्त
त्रगोपाश्चनावृष्टिभयातुराः सकुटुम्बागोधनैश्चव्रजमण्डलमाययुः ३ पुण्येवृन्दावनेरम्येकालिन्दीनिकटेशुभे नन्द
राजसहायेनवासंतेचक्रिरेनृप ४ तेषांगृहेषुसंजातायज्ञसीताश्चगोपिकाः श्रीरामस्यवराद्दिव्यादिव्ययौवनभूषिताः

न्वृन्दावनेकृष्णतीरेकृष्णंददर्शह १ कृष्णंप्रणम्यरहसिकृतांजलिपुटः शनैः प्रदक्षिणीकृत्यदूतोविमलोक्तमु-
वाच २ दूतउवाच स्वयम्परंब्रह्मपरः परेशः परैरदृश्यः परिपूर्णदेवः यःपुण्यसंघैःसततंहिदूरस्तस्मैनमः सज्जनगो
चराय ३ गोविप्रदेवश्रुतिसाधुधर्मरक्षार्थमद्यैवयदोःकुलेऽजः जातोसिकंसादिवधाययोसौतस्मैनमोनंतगुणार्णवा
य ४ अहोपरंभाग्यमलंव्रजौकसांधन्यंकुलंनन्दवरस्यतेपितुः धन्योव्रजोधन्यमरण्यमेतद्यत्रैवसाक्षात्प्रकटःप-
रोहरिः ५ यत्राधिकासुन्दरकण्ठरत्नंकस्तूरिकामोदइवप्रसिद्धः यशश्चतेनिर्मलमाशुशर्क्कीकरोतिसर्वत्रजगत्त्रि
लोकीम् ६ जानासिसर्वंजनचैत्यभावंक्षेत्रज्ञआत्माकृतवृन्दसाक्षी तथापिवक्ष्येनृपवाक्यमुक्तंपरंरहस्यंरह-
सिस्वधर्मम् ७ यासिन्धुदेशेषुपुरीप्रसिद्धाश्रीचम्पकानामशुभाययथेन्द्री नृपालकोसौविमलोयथेन्द्रस्त्वत्पादप
द्मेकृतचित्तवृत्तिः ८ सदाकृतंयज्ञशतंत्वदर्थंदानंतपोब्राह्मणसेवनंच तीर्थंजपंयेनसुसाधनेनतस्मैपरंदर्शनमे-
वदेहि ९ तत्कन्यकाःपद्मविशालनेत्राःपूर्णंपतिंत्वांमृगयंत्यआरात् सदात्वदर्थंनियमव्रतस्थास्त्वत्पादसेवाविम
लीकृतांगाः १० गृहाणतासांव्रजदेवपाणीन्दत्वापरंदर्शनमद्भुतंस्वम् गच्छाशुसिन्धून्विशदीकुरुत्वंविमृश्यकर्त
व्यमिदंत्वयाहि ११ नारदउवाच दूतवाक्यंततःश्रुत्वाप्रसन्नोभगवान्हरिः क्षणमात्रेणगतवान्सदूतश्चम्पकां
पुरीम् १२ विमलस्यमहायज्ञेवेदध्वनिसमाकुले सदूतःकृष्णआकाशात्सहसाऽवततारह १३ श्रीवत्सांकं
घनश्यामंसुन्दरंवनमालिनम् पीताम्बरंपद्मनेत्रंयज्ञवाटागतंहरिम् १४ तन्दृष्ट्वासहसोत्थायविमलःप्रेमविह्व
लः पपातचरणोपांतेरोमांचीसकृतांजलिः १५ संस्थाप्यपीठकेदिव्येरत्नहेमरचितपदे स्तुत्वासम्पूज्यवि-
धिवद्धाजातत्सन्मुखेस्थितः १६ गवाक्षेभ्यःप्रपश्यतीःसुन्दरीर्वीक्ष्यमाधवः उवाचविमलंकृष्णोमेघगंभीर-

ह्मणेभ्योदद्यात्सद्दक्षिणांपुनः रात्रौजागरणंकुर्याद्गायन्कृष्णपदानिच २५ कांस्यंमांसंमसूरांश्चकोद्रवंचणकंतथा
शाकंमधुपरान्नंचपुनर्भोजनमैथुनम् २६ वैष्णवेव्रतकर्तव्येदशम्यांदशवर्जयेत् द्यूतंक्रीडांचनिद्रांचताम्बूलंदन्तधाव
नम् २७ परापवादंपैशून्यंस्तेयंहिंसांतथारतिम् क्रोधाढ्यंत्वनृतंवाक्यमेकादश्यांविवर्जयेत् २८ कांस्यंमांसंच-
क्षौद्रंचतैलंवितथभोजनम् पुष्टिषष्टिमसूरांश्चद्वादश्यांपरिवर्जयेत् २९ अनेनविधिनाकुर्याद्द्वादशीव्रतमुत्तमम् ३०
गोप्यऊचुः एकादशीव्रतस्यास्यकालंवदमहामते किम्फलंवदनस्यास्तुमाहात्म्यंवदतत्वतः ३१ श्रीराधोवाच
दशमीपंचपंचाशत्घटिकाश्चेत्प्रदृश्यते तर्हिचैकादशीत्याज्याद्वादशींसमुपोषयेत् ३२ दशमीपलमात्रेणत्याज्या-
चैकादशीतिथिः मदिराबिन्दुपातेनत्याज्यंगंगाघटंयथा ३३ एकादशीयदावृद्धिर्द्वादशीचयदागता तदापरात्वु-
पोष्यास्यात्पूर्वाचेद्वादशीव्रते ३४ एकादशीव्रतस्यास्यफलंवक्ष्येव्रजांगनाः यस्यश्रवणमात्रेणवाजयेयफलंलभेत्
३५ अष्टाशीतिसहस्राणिद्विजान्भोजयतेतुयः तत्कृतंफलमोप्नोतिद्वादशीव्रतकृन्नरः ३६ ससागरवनोपेतां
योददातिवसुन्धराम् तत्सहस्रगुणंपुण्यमेकादश्यांमहाव्रते ३७ येसंसारार्णवेमग्नाःपापपंकसमाकुले तेषा
मुद्धारणार्थायद्वादशीव्रतमुत्तमम् ३८ रात्रौजागरणंकृत्वैकादशीव्रतकृन्नरः नपश्यतियमंरौद्रंयुक्तःपापशतैर
पि ३९ पूजयेद्योहरिंभक्त्याद्वादश्यांतुलसीदलैः लिप्यतेनसपापेनपद्मपत्रमिवांभसा ४० अश्वमेधसहस्राणि
राजसूयशतानिच एकादश्युपवासस्यकलांनार्हंतिषोडशीम् ४१ दशवैमातृकेपक्षेतथावैदशपैतृके प्रियायाद
शपक्षेतुपुरुषानुद्धरेन्नरः ४२ यथाशुक्लातथाकृष्णाद्वयोश्चसदृशम्फलम् धेनुःश्वेतायथाकृष्णाउभयोःसदृशं
पयः ४३ मेरुमन्दिरमात्राणिपापानिशतजन्मसु एकाचैकादशीगोप्योदहतेतूलराशिवत् ४४ विधिवद्विधि-

५ श्रीकृष्णंसुन्दरंदृष्ट्वामोहितास्तान्नृपेश्वर व्रतंकृष्णप्रसन्नार्थंप्रष्टुंराधांसमाययुः ६ गोप्यऊचुः वृषभानुसुते दिव्येहेराधेकंजलोचने श्रीकृष्णस्यप्रसन्नार्थंवदकिंचिद्व्रतंशुभे ७ नवश्योनन्दसूनुर्दैवैरपिसुदुर्गमः त्वंजगन्मोहिनीराधेसर्वशास्त्रार्थपारगा ८ श्रीराधोवाच श्रीकृष्णस्यप्रसन्नार्थंकुरुतैकादशीव्रतम् तेनवश्योहरिःसाक्षाद्भविष्यतिनसंशयः ९ गोप्यऊचुः संवत्सरस्यद्वादश्यांनामानिवदराधिके मासेमासेव्रतंतस्याः कर्तव्यंकेनभावतः -
१० राधोवाच मार्गशीर्षेकृष्णपक्षेउत्पन्नाविष्णुदेहतः मुरवैचवधार्थायतिथिरेकादशीवरा ११ मासेमासेपृथक्भूतासैवसर्वव्रतोत्तमा तस्याःषड्विंशतिर्नाम्नांवक्ष्यामिहितकाम्यया १२ उत्पन्निश्चतथामोक्षासफलाचततःपरम् पुत्रदाषट्तिलाचैवजयाचविजयातथा १३ आमर्दकीततःपश्चान्नाम्नावैपापमोचनी कामदाचततःपश्चात्कथितावैवरूथिनी १४ मोहिनीचापराप्रोक्तानिर्जलाकथिताततः योगिनीदेवशयनीकामिनीचततःपरम् १५ पवित्राचाप्यजापद्माइन्दिराचततःपरम् पापांकुशारमाचैवततःपश्चात्प्रबोधिनी १६ सर्वसंपत्प्रदाचैवद्वेप्रोक्तेमलमासजे एवंषड्विंशतिर्नाम्नामेकादश्याःपठेन्नरः १७ संवत्सरंद्वादशीनांफलमाप्नोतिसोपिहि एकादश्याश्चनियमंशृणुताथव्रजांगनाः भूमिशायीदशम्यांतुचैकभक्तोजितेन्द्रियः १८ एकवारंजलंपीत्वाधौतवस्त्रोतिनिर्मलः ब्राह्मेमुहूर्तेउत्थायचैकादश्यांहरौनतः १९ अधमंकूपिकास्नानंवाप्यांस्नानंतुमध्यमम् तडागेचोत्तमंस्नानंनद्याःस्नानंततःपरम् २० एवंस्नात्वानरवरःक्रोधलोभविवर्जितः नलिप्येत्तद्दिनेनीचान्तथापाखंडिनोन्नरान् २१ मिथ्यावादरतांश्चैवतथाब्राह्मणनिन्दकान् - अन्यांश्चैवदुराचारानगम्यागमनेरतान् २२ परद्रव्यापहारांश्चपरदाराभिगामिनः दुर्वृत्तान्भिन्नमर्यादान्नालायतसब्रवीन्नरः २३ केशवम्पूजयित्वातुनैवेद्यंतत्रकारयेत् दीपंदद्याद्गृहेतत्रभक्तियुक्तेनचेतसा २४ कथांश्रुत्वाब्रा-

लेस्फुराः एकादशीव्रतंचक्रुः सर्वकल्याणहेतवे १० व्रतंचकारमेधावीद्वादश्याःपितृवाक्यतः अप्सरःस्पर्शदोषेण
मुक्तोभून्निर्मलद्युतिः ११ गन्धर्वोललितःपत्न्यागतःशापात्सरक्षताम् एकादशीव्रतेनापिपुनर्गन्धर्वतांगतः १२-
एकादशीव्रतेनापिमांधातास्वर्गतिंगतः सगरश्चककुत्स्थश्चमुचकुन्दोमहामतिः १३ धुंधुमारादयश्चान्येराजानो
बहवस्तथा ब्रह्मकपालनिर्मुक्तोबभूवभगवान्भवः १४ धृष्टबुद्धिर्वैश्यपुत्रोज्ञातित्यक्तोमहाखलः एकादशीव्रतं
कृत्वावैकुण्ठंसजगामह १५ राज्ञारुक्मांगदेनापिकृतमेकादशीव्रतम् तेनभूमण्डलंभुक्त्वावैकुंठंसपुरोययौ १६
अंबरीषेणराज्ञापिकृतमेकादशीव्रतम् नास्पृशद्ब्रह्मशापोपियोनप्रतिहतःक्वचित् १७ हेममालीनामयक्षःकुष्ठी-
धनदशापतः एकादशीव्रतंकृत्वाचन्द्रतुल्योबभूवह १८ महीजितान्नृपेणापिकृतमेकादशीव्रतम् तेनपुत्रंशुफ-
भंलब्ध्वावैकुण्ठंसजगामह १९ हरिश्चन्द्रेणराज्ञापिकृतमेकादशीव्रतम् तेनलब्ध्वामहीराज्यंवैकुण्ठंसपुरोययौ-
२० श्रीशोभनोनामपुराकृतेयुगेजामातृकोभून्मुचुकुन्दभूभृतः एकादशींयःसमुपोष्यभारतेप्राप्तःसदेवैःकिलमं
दिराचले २१ अद्यापिराज्यंकुरुतेकुबेरवद्राज्ञायुतासौकिलचन्द्रभागया एकादशीसर्वतिथीश्वरीपराजानीथगोप्यो
नहितत्समान्याः २२ श्रीनारदउवाच इतिराधामुखाच्छ्रुत्वायज्ञसीताश्चगोपिकाः एकादशीव्रतंचक्रुर्विधिवत्कृ
ष्णलालसाः २३ एकादशीदिनेनापिप्रसन्नःश्रीहरिःस्वयम् मार्गशीर्षपूर्णिमायांरासंताभिश्चकारह २४ इति
श्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेएकादशीमाहात्म्येयज्ञसीतोपाख्यानंनामनवमोऽध्यायः९
श्रीनारदउवाच पुलिंदकानांगोपीनांकरिष्येवर्णनंह्यतः सर्वपापहरंपुण्यमद्भुतंभक्तिवर्द्धनम् १ पुलिंदाउग्रदाःके-
चिद्विंध्याद्रिवनवासिनः विलुंपंतोराजवस्तूदीनानांनकदाचन २ कुपितस्तेषुबलवान्विन्ध्यदेशाधिपोबली अ-



73

हीनंवाद्वादश्यांदानमेवच स्वल्पंवास्फकृतंगोप्योमेरुतुल्यंभवेच्चतत् ४५ एकादशीदिनेविष्णोःशृणुतेयोहरेःकथाम्
सप्तद्वीपवतीदानेतत्फलंलभतेवसूः ४६ शंखोद्धारेनरःस्नात्वादृष्ट्वादेवंगदाधरम् एकादश्युपवासस्यकलांनार्हन्ति-
षोडशीम् ४७ प्रभासेचकुरुक्षेत्रेकेदारेबद्रिकाश्रमे काश्यांचशूकरक्षेत्रेग्रहणेचन्द्रसूर्य्ययोः ४८ संक्रांतीनांचतु-
र्लक्षंदानंदत्तंचयन्नरैः एकादश्युपवासस्यकलांनार्हंतिषोडशीम् ४९ नागानांचयथाशेषःपक्षिणांगरुडोयथा देवा-
नांचयथाविष्णुर्वर्णानांब्राह्मणोयथा ५० वृक्षाणांचयथाश्वत्थःपत्राणांतुलसीयथा व्रतानांचतथागोप्योवराचैका
दशीतिथिः ५१ दशवर्षसहस्राणिस्तपस्तप्यतियोनरः तत्तुल्यम्फलमाप्नोतिद्वादशीव्रतकृन्नरः ५२ इत्थमेका
दशीनांचफलमुक्तंव्रजांगनाः कुरुताशुव्रतंयूयंकिम्भूयःश्रोतुमिच्छथ ५३ इतिश्रीमद्गर्गाचार्य्यसंहितायांश्री-
माधुर्यखण्डेश्रीनारदबहुलाश्वसंवादेयज्ञसीतोपाख्यानंनामाष्टमोऽध्यायः ८ गोप्यऊचुः वृषभानुसुतेसु-
भ्रुसर्वशास्त्रार्थपारगे विडंबयंतीतेवाचावाचंवाचस्पतिंमुनिम् १ एकादशीव्रतंराधेकेनकेनपुराकृतम् तद्ब्रूहिनो
विशेषेणत्वंसाक्षाज्ज्ञानशेवधिः २ श्रीराधोवाच आदौदेवैःकृतंगोप्योवरमेकादशीव्रतम् भ्रष्टराज्यस्यला
भार्थंदैत्यानांनाशनायच ३ वैशंलेनपुराराज्ञाकृतमेकादशीव्रतम् स्वपितुस्तारणार्थायंयमलोकगतस्यच ४ अ
कस्माल्लुपकेनापिज्ञातित्यक्तेनपापिना एकादशीकृतायेनराज्यंलेभेसलुपकः ५ भद्रावत्यांकेतुमताकृतमे-
कादशीव्रतम् पुत्रहीनेनसद्वाक्यात्पुत्रंलेभेसमानवः ६ ब्राह्मण्यैदेवपत्नीभिर्दत्तमेकादशीफलम् तेनलेभेस्वर्ग-
सौख्यंधनधान्यंचमानुषी ७ पुष्पदंतीमाल्यवंतौशक्रशापात्पिशाचताम् प्राप्तौकृतंव्रतंताभ्यांपुनर्गन्धर्वतांगतौ
८ पुराश्रीरामचन्द्रेणकृतमेकादशीव्रतम् समुद्रेसेतुबन्धार्थंरावणस्यवधायच ९ लयांतेचसमुत्पन्नधात्रीवृक्षत

जाः ३ उर्द्धवैकुंठवासिन्यस्तदाजनपदाश्रिताः श्रीलोकाचलवासिन्यः श्रीसख्योपिसमुद्भजाः ४ श्रीकृष्णस्य
प्रसन्नार्थेनाभिर्माघव्रतंकृतम् चिन्तयन्त्यः सदाश्रीमद्गोविन्दचरणाम्बुजम् ५ माघस्यशुक्लपञ्चम्यांवसंतादौहरिः
स्वयम् यासांप्रेमपरीक्षार्थंकृष्णस्तासांगृहानुगतः ६ व्याघ्रचर्मांबरंबिभ्रत्जटामुकुटमंडितः विभूतिधूसरोवे
णुवादयन्मोहयन्जगत् ७ तासांवीथीषुसंप्राप्तिंवीक्ष्यगोप्योपिसर्वतः आययौदर्शनंकर्तुंमोहिताःप्रेमविह्वलाः
८ अतीवसुन्दरंदृष्ट्वायोगिनंगोपकन्यकाः ऊचुःपरस्परंसर्वाःप्रेमानन्दसमाकुलाः ९ गोप्यऊचुः कोयंशिशु
र्नन्दसुताकृतिर्वाकस्यापिपुत्रोधनिनोनृपस्य नारीकुवाग्बाणविभिन्नमर्माजातोविरक्तोगतकृत्यकर्मा १० -
अतीवरम्यः सुकुमारदेहोमनोजवद्विश्वमनोहरोयम् अहोकथंजीवतिचास्यमातापिताचभार्याभगिनीविनैनम्
११ एवंयः सर्वतोयूथाभूत्वासर्वाव्रजांगनाः पप्रच्छुस्तंयोगिवरंविस्मिताःप्रेमविह्वलाः १२ गोप्यऊचुः कस्त्वं
योगिन्नामकिंतेकुत्रवासस्तुतेमुने कावृत्तिस्तवकासिद्धिर्वदनोवदतांवर १३ सिद्धउवाच योगेश्वरोहंमेवासः-
सदामानसरोवरे नाम्नास्वयंप्रकाशोऽहंनिरन्नः स्वबलात्सदा १४ स्वार्थंपरमहंसानांयाम्यहंहेव्रजांगनाः भूतं
भव्यंवर्तमानंवेद्म्यहंदिव्यदर्शनः १५ उच्चाटनमारणंचमोहनंस्तंभनंतथा जानामिमंत्रविद्याभिर्वशीकरणमेवच -
१६ गोप्यऊचुः यदिजानासियोगिंस्त्वंवार्ताकालत्रयोद्भवान् किंवर्ततेनोमनसिवदतर्हिमहामते १७ सिद्धउवाच
भवतीनांचकर्णांतेकथनीयमिदंवचः त्वदाज्ञयावावक्ष्येहंसर्वेषांशृण्वतामिह १८ गोप्यऊचुः सत्यंयोगेश्वरो-
सित्वंत्रिकालज्ञोनसंशयः वशीकरणमंत्रेणसद्यः पठनमात्रतः १९ यदिसोत्रैवचायातिर्चिंतितोयस्तुतेमुने त-
दामन्यामहेत्वांवैमंत्रिणांप्रवरंपरम् २० सिद्धउवाच दुर्लभंदुर्घटंभावंयुष्माभिर्गदितंस्त्रियः तथाप्यहंकरि-

14

क्षौहिणीभ्यांतान्सर्वान्पुलिंदान्सरुरोधह ३ युयुधुस्तेपिरवड्गैश्चकुन्तैःशूलैःपरस्वधैः शक्त्यर्ष्टिभिर्भुसुंडीभिः शरैःकतिदिनानिच ४ पत्नंतेप्रेषयामासुःकंसाययदुभूभृते कंसप्रणोदितोदैत्यःप्रलंबोबलवांस्तदा ५ योजनद्वयमुच्चांगकालमेघसमद्युतिम् किरीटकुण्डलधरंसर्पहारविभूषितम् ६ पादयोःशृंखलायुक्तंगदापाणिं कृतांतवत् ललज्जिह्वंघोररूपंपातयन्तंगिरीन्द्रुमान् ७ कम्पयंतंभुवंवेगात्प्रलंबंयुद्धदुर्मदम दृष्ट्वाप्रधर्षितोराजासंसैन्योरणमंडले ८ त्यक्त्वादुद्रावसहसासिंहंवीक्ष्यगजोयथा प्रलंबस्तान्समानीयमथुरामाययौपुनः ९ पुलिन्दास्तेपिकंसस्यभृत्यत्वंसमुपागताः सकुटुंबाःकामगिरौवासंचक्रुर्नृपेश्वर १० तेषांगृहेषुसंजाताश्रीराम स्यवरात्परात् पुलिंद्यःकन्यकादिव्यारूपिण्यःश्रीरिवार्चिताः ११ तद्दर्शनस्मररुजःपुलिंद्यःप्रेमविह्वलाः - श्रीमत्पादरजोधृत्वाध्यायंत्यस्तमहर्निशिम् १२ ताश्चापिरासेसंप्राप्ताःश्रीकृष्णंपरमेश्वरम् परिपूर्णतमंसाक्षाद्गोलोकाधिपतिंप्रभुम् १३ श्रीकृष्णचरणांभोजरजोदेवैःसुदुर्लभम् अहोभाग्यंपुलिंदीनांतासांप्राप्तंविशेषतः १४ यःपारमेष्ठ्यमखिलंनमहेन्द्रधिष्ण्यंनोसार्वभौममनिशंनरसाधिपत्यम् नोयोगसिद्धिमभितोनपुनर्भवंवावांछत्यलंपरमपादरजःसभक्तः १५ निष्किंचनाःस्वकृतकर्मफलैर्विरागायत्तत्पदंहरिजनामुनयोमहांतः भक्ताजुषंतिहरिपादरजःप्रसक्ताअन्येविदंतिनसुखंकिलनैरपेक्ष्यम् १६ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखंडे नारदबहुलाश्वसंवादेपुलिंदकोपाख्यानंनामदशमोऽध्यायः १० नारदउवाच अन्यासांचैवगोपीनांवर्णनं शृणुमैथिल सर्वपापहरंपुण्यंहरिभक्तिविवर्द्धनम् १ नीतिविन्मार्गदःशुक्लःपतंगोदिव्यवाहनः गोपेष्वव्रजेराजन्जाताषड्वृषभानवः २ तेषांगृहेषुसंजातालक्ष्मीपतिवरात्प्रजाः रमावैकुण्ठवासिन्यःश्रीसख्योपिसमुद्र

निर्गच्छफाल्गुनमिषेणविहायमानंदातव्यमद्यचयशः किलहोलिकायै कर्तव्यमाशुनिजमन्दिररंगवारिपाटीरपंकमकरन्दच यच्चूर्णम् ११ उत्तिष्ठगच्छसहसानिजमण्डलीभिर्यत्रास्तिसोपिकिलतत्रमहामतेत्वम् एतादृशोपिसमयोनकदापिल भ्यः प्रक्षालितंकरतलंविदितः प्रवाहे १२ श्रीनारदउवाच अथमानवतीराधामानंत्यक्त्वासमुत्थिता सखीसंघैः परि वृताप्रकर्तुंहोलिकोत्सवम् १३ श्रीखंडागुरुकस्तूरीहरिद्राकुंकुमद्रवैः पूरिताभिर्दृतीभिश्चसंयुक्तास्ताव्रजांगनाः १४ उपहस्ताः पीतवस्त्राः कूजन्नूपुरमेखलाः गायंत्योहोलिकागीतान्गालीभिर्हास्यसंधिभिः १५ आबीरारुणचूर्णानां मुष्टिभिस्ताडतस्ततः कुर्वत्यश्चारुणंभूमिंदिगंतंचांबरंतथा १६ कोटिशः कोटिशस्तत्रस्फुरंत्याबीरमुष्टयः सुगंधा रुणचूर्णानांकोटिशः कोटिशस्तथा १७ सर्वतोजगृहुः कृष्णंकराभ्यांव्रजगोपिकाः यथामेघंचदामिन्यः संध्यायां श्रावणस्यच १८ तन्मुखंचविलिपंत्योऽथाबीरारुणवृष्टिभिः कुंकुमाक्तदृतीभिस्तमार्द्रीचक्रुर्विधानतः १९ भगवा नपितत्रैवयावतीर्व्रजयोषितः धृत्वारूपाणितावंतिविजहारनृपेश्वर २० राधयाशुशुभेतत्रहोलिकायामहोत्सवे व र्षासंध्याक्षणेकृष्णः सौदामिन्याघनोयथा २१ कृष्णोपितन्हस्तकृताञ्जनेत्रोदत्त्वास्वकीयंनवमुत्तरीयम् ताभ्यो- ययौनन्दगृहंपरेशोदेवेषुवर्षत्सुचपुष्पवर्षाम् २२ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखंडेनारदबहुलाश्वसंवा- देहोलिकोत्सवेदिव्यात्रिगुणवृत्तिभूमिगोप्युपाख्याननामद्वादशोऽध्यायः १२ नारदउवाच अथदेवांगनानांच गोपीनांवर्णनंशृणु चतुःपदार्थदंनृणांभक्तिवर्धनमुत्तमम् १ बभूवमालवेदेशेगोपोनन्दोदिवस्पतिः भार्यासहस्र- संयुक्तोधनमान्नीतिमत्परः २ तीर्थयात्राप्रसंगेनमथुरायांसमागतः नन्दराजंव्रजाधीशंश्रुत्वाश्रीगोकुलंययौ ३ मिलित्वागोपराजंसदृष्ट्वावृन्दावनश्रियम् नन्दराजाज्ञयातत्रवासंचक्रेमहामनाः ४ योजनद्वयमाश्रित्यघोषंचक्रेगवां

ष्यामिवाक्यंनचलतेसताम् २१ निमीलयतनेत्राणिमाशोचंकुरुतस्त्रियः भविष्यतिनसंदेहोयुष्माकंकार्यमेवच-
२२ नारदउवाच तथेतिमीलितास्क्षास्तागोपीषुभगवान्हरिः विहायतद्योगिरूपंबभौश्रीनन्दनंदनः २३ नेत्राण्यु
न्मील्यददृशुः सानन्दंनन्दनन्दनम् विस्मितास्तत्प्रभावज्ञाहर्षितामोहमागताः २४ माघमासेमहारासे-
पुण्येवृन्दावनेवने ताभिःसार्द्धंहरीरेमेसुन्दरीभिःसुरराडिव २५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेना
रदबहुलाश्वसंवादेरमावैकुण्ठश्वेतद्वीपोर्ध्ववैकुंठाजितपदश्रीलोकाचलवासिनीश्रीसखीनामुपाख्यानंनामएकाद-
शोऽध्यायः ११ श्रीनारदउवाच इदंमयातेकथितंगोपीनांचरितंशुभम् अन्यासांचैवगोपीनांवर्णनंशृ
णुमैथिल १ वीतिहोत्रोग्निभुक्शांबःश्रीकरोगोपतिःश्रुतः व्रजेशःपावनःशांतउपनन्दाव्रजेभवाः २ धनवंतोरू
पवंतःपुत्रवंतोबहुश्रुताः शीलादिगुणसंपन्नाःसर्वदानपरायणाः ३ तेषांगृहेषुसंजाताःकन्यकादेववाक्यतः -
काश्चिद्दिव्याश्चादिव्याश्चतथात्रिगुणवृत्तयः ४ भूमिगोप्यश्चसंजाताःपुण्यैर्नानाविधैःकृतैः ताराधिकासुहृच्च
र्यःसख्योऽभूवन्विदेहराट् ५ एकदामानिनींराधांताःसर्वाव्रजगोपिकाः ऊचुर्वीक्ष्यहरिंप्राप्तंहोलिकायामहोत्स
वे ६ गोप्यऊचुः रंभोरुचन्द्रवदनेमधुमानिनीशेराधेवचःसुललितंललनेशृणुत्वम् श्रीहोलिकोत्सवविहारमलंवि
धातुमायातितेपुरवनेव्रजभूषणोऽयम् ७ श्रीयौवनोन्मदविघूर्णितलोचनोसौनीलालकालिकलितांसकपोलगोलः
सत्पीतकंचुकघनांतमशेषमाराद्चालयन्ध्वनिमतास्वयदारुणेन ८ बालार्कमौलिविमलांगदहारमुद्यद्विद्युत्क्षिपन्मक
रकुण्डलमादधानः पीतांबरेणजयतिद्युतिमण्डलोसौभूमण्डलेसधनुषेवघनोदिविस्थः ९ आबीरकुंकुमरसैश्च-
विलिप्तदेहोहस्तागृहीतनवसेचनयंत्रआरात् प्रेक्षन्तवाशुसखिवाटमतीवराधेत्वद्वासरंगरसकेलिरतःस्थितःसः १०

किंचित्धृतराष्ट्रायभूभृते ८ कारागारान्महाभीमात्कदाचित्सपलायितः राज्ञोरंगपुरंप्रागाद्रंगोजिर्गोपनायकः ९ पुनस्तंहिसमाहर्तुंधृतराष्ट्रप्रणोदितम् अक्षौहिणीत्रयंराजन्समर्थबलवाहनम् १० ताभिःसार्द्धंसबाणौघैस्तीक्ष्णधारैःस्फुरत्प्रभैः युयुधेदंशितोयुद्धेधनुष्टंकारयन्मुहुः ११ शत्रुभिश्छिन्नकवचश्छिन्नधन्वाहतस्वकः पुरमेत्यमृधंचक्रेरंगोजिःकतिभिर्दिनैः १२ अनाथःशरणंचेच्छन्कंसाययदुभूभृते दूतंस्वंप्रेषयामासरंगोजिर्भयकातरः १३ दूतस्तुमथुरामेत्यसभांगत्वाननताननः कृतांजलिश्चौग्रसेनिंनत्वाप्राहगिराद्वया १४ दूतउवाच रंगोजिनामानृपरंगपत्तनेगोपोस्तिनीतिज्ञवरःपुराधिपः स्वशत्रुसंरुद्धपुरोमहाधिभृदलब्धनाथःशरणंगतस्तव १५ त्वंदीनदुःखार्तिहरोमहीतलेभौमादिसंगीतगुणोमहाबलः क्रूराक्रूरानुद्भटभूमिपालकान्विजित्ययुद्धेक्रूरराडिवस्थितः १६ चन्द्रंचकोरश्चरविंकुशेशयंयथाशरच्छीकरमेवचातकः क्षुधातुरोन्नंचजलंतृषातुरःस्मरत्यसौशत्रुभयेतथातव १७ नारदउवाच इत्यंश्रुत्वावचस्तस्यकंसोवैदीनवत्सलः दैत्यकोटिसमायुक्तोमनोगंतुंसमादधे १८ गोमूत्रचयसिन्दूरकस्तूरीपत्रभृन्मुखम् विंध्याद्रिसदृशंश्यामंमदनिर्झरसंयुतम् १९ पादेचशृंखलाजालंनदंतंघनवद्भृशम् द्वीपंकुवलयापीडंसमारुह्यमदोत्कटः २० चाणूरमुष्टिकाद्यैश्चकेशिव्योमावृषासुरैः सहसादंशितःकंसःप्रययौरंगपत्तने २१ यदूनांचकुरूणांचबलयोस्तुपरस्परम् बाणैःखड्गैस्त्रिशूलैश्चघोरंयुद्धंबभूवह २२ बाणांधकारेसंजातेकंसोनीत्वामहागदाम् विवेशकुरुसेनासुवनेवैश्वानरोयथा २३ कांश्चिद्वीरान्सकवचान्गदयावज्रकल्पया पातयामासभूपृष्ठेवज्रेणेंद्रोयथागिरीन् २४ रथान्ममर्दपादाभ्यांपार्ष्णिघातेनघोटकान् गजेगजंताडयित्वागजान्प्रोन्नीयचांघ्रिषु २५ स्कन्धयोःकक्षयोर्धृत्वासनीडान्रत्नकंबलान् कांश्चिद्भ्रामयित्वाचिक्षेपगगनेबली २६ गजान्शुंडासुचोन्नीयलोलघंटासमावृतान्-

वांपुनः मुदंप्रापव्रजेराजन्ज्ञातिभिःसदिवस्पतिः ५ तस्यदेवलवाक्येनसर्वादेवजनस्त्रियः जाताःकन्यामहादि
व्याज्वलदग्निशिखोपमाः ६ श्रीकृष्णंसुन्दरंदृष्ट्वामोहिताःकन्यकाभ्दुताः दामोदरस्यप्राप्त्यर्थंचक्रुर्माघव्रतंपरम् ७
अर्धोदयेर्केयमुनांनित्यंस्नात्वाव्रजांगनाः उच्चैर्जगुःकृष्णलीलांप्रेमास्पदसमाकुलाः ८ तासांप्रसन्नःश्रीकृष्णोवरं-
ब्रूहीत्युवाचह ताऊचुस्तत्परंनत्वाकृतांजलिपुटाःशनैः ९ गोप्यऊचुः गोपीश्वराणांकिलदुर्लभस्त्वंसर्वेश्वरःकारण-
कारणोसि त्वंनेत्रगामीभवतात्सदानोवंशीधरोमन्मथमन्मथांगः १० तथास्त्विचोक्त्वाहरिरादिदेवस्तासांतुयोदर्शी-
नमाततान भूयात्सदातेहृदिनेत्रमार्गेतथासखाहूतइवाशुचित्ते ११ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोनान्यएवहि ए
ककार्यार्थमागत्यकोटिकार्यंचकारह १२ परिकरीकृतपीतपटंहरिंशिखिकिरीटनतीकृतकन्धरम् लकुटवेणुकरंचल-
कुण्डलंपटुतरंनटवेषधरंभजे १३ भक्त्यैववश्योहरिरादिदेवःसदाप्रमाणंकिलचात्रगोप्यः सांख्यंचयोगंनकृतंसदा
पिप्रेम्णैवयस्यप्रकृतिंगताःस्युः १४ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेदेवजनस्त्र्यु-
पाख्यानंनामत्रयोदशोऽध्यायः १३ नारदउवाच जालंधरीणांगोपीनांजन्मानिशृणुमैथिल कर्माणिचम-
हाराजपापघ्नानिनृणांसदा १ राजन्ससनदीतीरेरंगपत्तनमुत्तमम् सर्वसंपत्कृतंदीर्घंयोजनद्वयवर्तुलम् २ रंगोजि
त्तत्रगोपालःपुराधीशोमहाबलः पुत्रपौत्रसमायुक्तोधनधान्यसमृद्धिमान् ३ हस्तिनापुरनाथायधृतराष्ट्रायभूभृते है
मानामर्बुदंशतंवार्षिक्यंसददौसदा ४ एकदातत्रवर्षांतेव्यतीतेतत्रमैथिल वार्षिक्यंतुकरंराज्ञेनददौसमदोत्कटः ५
मिलनार्थंनचायातेरंगोजौगोपनायके वीरादशसहस्राणिधृतराष्ट्रप्रणोदिताः ६ बध्वातंदामभिर्गोपमाजग्मुस्तेगजा-
ह्वयम् कतिवर्षाणिरंगोजिःकारागारेस्थितोऽभवत् ७ सन्निरुद्धस्ताडितोपिलोभीभीरुर्नचाभवत् नददौसधनं

प्रेमविह्वलाः ९ राधयाकीर्तिस्कृतयाचन्द्रकोटिप्रकाशया रेजेवृन्दावनेकृष्णोयथारत्यारतीश्वरः १० एवंप्रासाश्च याः सर्वाः श्रीकृष्णंनन्दनन्दनम् परिपूर्णतमंसाक्षात्तासांकिंवर्ण्यतेतपः ११ नागेन्द्रकन्यायाःसर्वाश्चैत्रमासेमनोहरे बलभद्रंहरिंप्रासाःकृष्णातीरेतुताःशुभाः १२ इदंमयातेकथितंगोपीनांचरितंशुभम् सर्वपापहरंपुण्यंकिंभूयःश्रोतुमिच्छसि १३ बहुलाश्वउवाच यमुनायाश्चपंचांगदत्तंदुर्वाससामुने गोपीभ्योयेनगोविन्दःप्रासस्तद्ब्रूहिमांप्रभो १४ श्रीनारदउवाच अत्रैवोदाहरंतीममितिहासंपुरातनम् यस्यश्रवणमात्रेणपापहानिःपरंभवेत् १५ अयोध्याधिपतिःश्रीमान्मांधाताराजसत्तमः मृगयांविचरन्प्राप्तःसौभरेराश्रमंशुभम् १६ वृन्दावनेस्थितंसाक्षात्कृष्णातीरेमनोहरे नत्वाजामातरंराजासौभरिंप्राहमानदः १७ मांधातोवाच भगवन्सर्ववित्साक्षात्त्वंपरावरवित्तमः लोकानांतमसोंधानांदिव्यसूर्यइवापरः १८ इहलोकेभवेद्राज्यंसर्वसिद्धिसमन्वितम् अमुत्रकृष्णसारूप्यंयेनस्यात्तद्वदाशुमे १९ सौभरिरुवाच यमुनायाश्चपंचांगंवक्ष्यामितवाग्रतः सर्वसिद्धिकरंशश्वत्कृष्णसारूप्यकारणम् २० यावत्सूर्यउदेतिस्मयावच्चप्रतितिष्ठति तावद्राज्यप्रदंचात्रश्रीकृष्णवशकारकम् २१ कवचंचस्तवंनाम्नांसहस्रंपटलंतथा पद्धतिंसूर्यवंशेन्द्रपंचांगानिविदुर्बुधाः २२ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखंडेश्रीनारदबहुलाश्वसंवादेश्रीसौभरिमांधातृसंवादेबर्हिष्मतीपुरध्यप्सरःस्कृतलवासिनीनागेन्द्रकन्योपाख्याननामपंचदशोऽध्यायः १६ मांधातोवाच यमुनायाःकृष्णराज्ञाः कवचंसर्वतोऽमलम् देहिमत्यंमहाभागधारयिष्याम्यहंसदा १ सौभरिरुवाच यमुनायाश्चकवचंसर्वरक्षाकरंनृणाम् चतुःपदार्थदंसाक्षाच्छृणुराजन्महामते २ कृष्णांचतुर्भुजांश्यामांपुंडरीकदलेक्षणाम् रथस्थांसुन्दरींध्यात्वाधारयेत्कवचंततः ३ स्नातःपूर्वमुखोमौनीकृतसंध्यः

विक्षेपसंमुखेराजन्मृधेव्योमास्फुरोबली २७ रथान्गृहीत्वासाश्वांश्चशृंगाभ्यांभ्रामयन्मुहुः विक्षेपदिक्षुबलवा
न्दैत्योदुष्टावृषासुरः २८ बलात्पश्चिमपादाभ्यांवीरानश्वानितस्ततः पातयामासराजेन्द्रकेशीदैत्याधिपोबली-
२९ एवंभयंकरंयुद्धंदृष्ट्वावैकुरुसैनकाः शेषाभयातुरावीराजग्मुस्तेपिदिशोदश ३० रंगोजिंसकुटुंबंतंनीत्वाकं-
सोथदैत्यराट् मथुरांप्रययौवीरोनादयन्दुंदुभीन्शनैः ३१ श्रुत्वापराजयंस्वस्यकौरवाःक्रोधमूर्छिताः दैत्यानां
समयंदृष्ट्वासर्वेवैमौनमास्थिताः ३२ पुरंबर्हिषदंनामव्रजसीम्निमनोहरम् रंगोजयेददौकंसोदैत्यानामधिपोबली
३३ वासंचकारतत्रैवरंगोजिर्गोपनायकः बभूवुस्तस्यभार्यास्तुजालंधर्योहरेर्वरात् ३४ परिणीतागोपजनेरूपयौ
वनभूषिताः जारधर्मेणसुस्नेहंश्रीकृष्णेताःप्रचक्रिरे ३५ चैत्रमासेमहारासेताभिःसाकंहरिःस्वयम् पुण्येवृ
न्दावनेरम्यरेमेवृन्दावनेश्वरः ३६ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेश्रीनारदबहुलाश्वसंवादेजालंध
र्युपाख्यानंनामचतुर्दशोऽध्यायः १४ श्रीनारदउवाच व्रजेशोणपुराधीशोगोपानन्दोधनीमहान् भार्यापंच-
सहस्राणिबभूवुस्तस्यमैथिल १ जातामत्स्यवरात्तास्तुसमुद्राद्गोपकन्यकाः तथान्याश्चत्रिवाचापिपृथिवीदोहनान्नृप-
२ बर्हिष्मतीपुरस्थायाजाताजातिस्मराःपराः तथान्याप्सरसोभूमन्वराञ्चारायणस्यच ३ तथासुतलवासिन्योवाम-
नस्यवरात्स्त्रियः तथानागेन्द्रकन्याश्चजाताःशेषवरात्परात् ४ ताभ्योदुर्वाससादत्तंकृष्णपंचांगमद्भुतम् तेनस
म्पूज्ययमुनांवव्रिरेश्रीपतिंवरम् ५ एकदाश्रीहरिस्ताभिर्वृन्दारण्येमनोहरे यमुनानिकटेदिव्येपुंस्कोकिलतरुव्रजे ६-
मधुपध्वनिसंयुक्तेकूजित्कोकिलसारसे मधुमासेमन्दवायौवसन्तलतिकावृते ७ दोलोत्सवंसमारेभेहारेर्मदनमोह
नः कदम्बवृक्षेरहसिकल्पवृक्षमनोहरे ८ कालिन्दीजलकल्लोलकोलाहलसमाकुले तद्दोलाखेलनंचक्रुस्तागोप्यः

डमध्येतदनिधृतवतीमूर्मिमालांप्रयातीम् ६ दिव्यंकौनामधेयंश्रुतमथयमुनेदण्डयत्यद्रितुल्यंपापंव्यूहंत्वखण्डंवसतुमम-
गिरामण्डलेतुक्षणंतत् दंड्यांश्चाकार्यदंडयान्सकृदपिवचसाखंडितंयद्गृहीतंभ्रातुर्मार्तंडसूनोरदतिपुरिदृढस्तेप्रचंडेतिद
ण्डः ७ रज्जुर्वाविषयांधकूपतरणेपापाखुदर्वीकरीवेपथुस्त्रिकृचविराजमूर्तिशिरसोमालास्तिवासुन्दरी धन्यंभाग्यम
तःपरंभुविनृणांयत्रादिकृद्दुर्लभागोलोकेप्यतिदुर्लभातिशुभगाभात्यद्वितीयानदी ८ गोपीगोकुलगोपकेलिकलतेकालि
न्दिकृष्णप्रभेत्वत्कूलेजललोलगोलविचलत्कल्लोलकोलाहलः त्वत्कांतारकुतूहलालिकुलकृज्झंकारकेकाकुलःकूजत्को
किलसंकुलोव्रजलतालंकारभृत्पातुमां ९ भवंतिजिह्वास्तनुरोमतुल्यागिरोयदाभूसिकताइवाशु तदप्यलंयातिनतेगु
णांतंसंतोमहांतःकिलशेषतुल्याः १० कलिन्दगिरिनन्दनीस्तवमुषस्ययंवापरःश्रुतश्चयदिपाठितोभुवितनोतिसन्मंगलम्
जनोपियदिधारयेत्किलपठेच्चयोनित्यशःसयातिपरमंपदंनिजनिकुंजलीलावृतम् ११ इतिश्रीमद्गर्गाचार्यसंहितायां-
श्रीमाधुर्य्यखंडेश्रीसौभरिमांधातृसंवादेश्रीयमुनास्तवंनामसप्तदशोऽध्यायः १७ मान्धातोवाच कृष्णायाःप-
टलंपुण्यंकामदंपद्धतिंयथा वदमांमुनिशार्दूलत्वंसाक्षाज्ज्ञानशेवधिः १ सौभरिरुवाच पटलंपद्धतिंवक्ष्येयमुनायाम
हामते कृत्वाश्रुत्वाथजप्त्वावाजीवन्मुक्तोभवेन्नरः २ प्रणवंपूर्वमुद्धृत्यमायाबीजंततःपरम् रमाबीजंततःकृत्वाकाम-
बीजंविधानतः ३ कालिन्दीतिचतुर्थ्यंतंदेवीपदमतःपरम् नमःपश्चात्संविधार्यजपेन्मन्त्रमिमंनरः ४ जप्त्वैकादशलक्षा
णिमंत्रसिद्धिर्भवेद्भुवि जनैःप्रार्थ्याश्चयेकामाःसर्वेप्राप्याःस्वनश्वते ५ विधायषोडशदलंपद्मंसिंहासनेशुभे कर्णिका
यांचकालिन्दीन्यसेच्छ्रीकृष्णसंयुताम् ६ जान्हवींविरजांकृष्णांचन्द्रभागांसरस्वतीम् गोमतींकौशिकींवेणींसिंधुंगो-
दावरींतथा ७ वेदस्मृतिंवेत्रवतींशतद्रूंसरयूंतथा पूजयेन्मानवःश्रेष्ठऋषिकुल्यांककुद्मिनीम् ८ पृथक्पृथक्तत्तद्

कुशासने कुशैर्बद्धशिखोविप्रःपठेद्वैस्वस्तिकासनः ४ यमुनामेशिरःपातुकृष्णानेत्रद्वयंसदा श्यामाभ्रूभंगदेशं
चनासिकांनाकवासिनी ५ कपोलौपातुमेसाक्षात्परमानन्दरूपिणी कृष्णवामांससंभूतापातुकर्णद्वयंमम ६-
अधरौपातुकालिन्दीचिबुकंसूर्यकन्यका यमस्वसाकन्धरंचहृदयंमेमहानदी ७ कृष्णप्रियापातुपृष्ठंतटिनीमेभु-
जद्वयम् श्रोणीतटंचसुश्रोणीकटिंमेचारुदर्शना ८ उरुद्वयंतुरंभोरुर्जानुनीत्वंघ्रिभेदिनी गुल्फौरासेश्वरीपातु
पादौपापप्रहारिणी ९ अंतर्बहिरधश्चोर्ध्वंदिशासुविदिशासुच समंतात्पातुजगतःपरिपूर्णतमप्रिया १० इ
दंश्रीयमुनायाश्चकवचंपरमाद्भुतम् दशवारंपठेद्भक्त्यानिर्द्धनोधनवान्भवेत् ११ त्रिभिर्मासैःपठेद्धीमान्ब्रह्मचारी
मिताशनः सर्वराज्याधिपत्यंत्वंप्राप्यतेनात्रसंशयः १२ दशोत्तरशतंनित्यंत्रिमासावधिमाश्रितम् यःपठेत्प्रयतोभू
त्वातस्यकिंकिंनजायते १३ यःपठेत्प्रातरुत्थायसर्वतीर्थफलंलभेत् अंतेव्रजेत्परंधामगोलोकंयोगिदुर्लभम् १४
इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्य्यखण्डेश्रीसौभरिमांधातृसंवादेश्रीयमुनाकवचंनामषोडशोऽध्यायः १६ ६७
मांधातोवाच यमुनायाःस्तवंदिव्यंसर्वसिद्धिकरंपरम् सौभरेमुनिशार्दूलवदमांकृपयात्वरम् १ श्रीसौभरिरुवाच
मार्तंडकन्यकायास्तुस्तवंशृणुमहामते सर्वसिद्धिकरंभूमौचतुर्वर्गफलप्रदम् २ कृष्णवामांसभूतायैकृष्णायैसतं
तंनमः नमःश्रीकृष्णरूपिण्यैकृष्णेतुभ्यंनमोनमः ३ यःपापपंकांबुकलंककुत्सितःकामीकुधीःसत्सुकलिंकरो
तिहि वृन्दावनंधामददातितस्मैनदन्मलिन्दादिकलिन्दनन्दिनीम् ४ कृष्णेसाक्षात्कृष्णरूपंत्वमेववेगावर्तेवर्ततेम
त्स्यरूपी ऊर्मावूर्मौकूर्मरूपीसदातेबिंदौबिंदौभातिगोविन्ददेवः ५ वन्देलीलावतींत्वांसघनघननिभांकृष्णवामांसभू
तांवेगंवैवैरजारव्यंसकलजलचयंखण्डयंतीबलात्स्वात् छित्वाब्रह्मांडमारात्सुरनगरनगान्गंडशैलादिदुर्गान् भित्वाभूखं

मार्त्तण्डपुत्रीं तनुकिरणचयोद्दीप्तदीपाभिरामाम् ३ इतिध्यानम् ॐ कालिन्दीयमुनाकृष्णाकृष्णरूपासनातनी
कृष्णवामांससंभूतापरमानन्दरूपिणी ४ गोलोकवासिनीश्यामावृन्दावनविनोदिनी राधासखीरासलीलारा
समण्डलमण्डनी ५ निकुंजमाधवीवल्लीरंगवल्लीमनोहरा श्रीरासमण्डलीभूतायूथीभूताहरिप्रिया ६ गोलो
कतटिनीदिव्यानिकुंजतलवासिनी दीर्घोर्मिवेगगम्भीरापुष्पपल्लववाहिनी ७ घनश्यामामेघमालाबलाकापद्ममालि
नी परिपूर्णतमापूर्णापूर्णब्रह्मप्रियापरा ८ महावेगवतीसाक्षान्निकुंजद्वारनिर्गता महानदीमन्दगतिर्विरजावेग-
भेदिनी ९ अनेकब्रह्माण्डगताब्रह्मद्रवसमाकुला गंगामिश्रानिर्जलाभानिर्मलासरितांवरा १० रत्नबद्धोभ
यतटीहंसपद्मादिसंकुला नदीनिर्मलपानीयासर्वब्रह्माण्डपाविनी ११ वैकुण्ठपरिखीभूतापरिखापापहारि
णी ब्रह्मलोकगताब्राह्मीस्वर्गास्वर्गनिवासिनी १२ उल्लसन्तीप्रोत्पतन्तीमेरुमालामहोज्वला श्रीगंगांभःशिख
रिणीगण्डशैलविभेदिनी १३ देशान्पुनन्तीगच्छन्तीवाहन्तीभूमिमध्यगा मार्त्तण्डतनुजापुण्याकलिन्दगिरिनन्दि
नी १४ यमस्वसामन्दहासासुद्विजारचिताम्बरा नीलाम्बरापद्ममुखीचरन्तीचारुदर्शना १५ रंभोरूःपद्मन
यनामाधवीप्रमदोत्तमा तपश्चरंतीसुश्रोणीकूजन्नूपुरमेखला १६ जलस्थिताश्यामलांगीखाण्डवाभावि-
हारिणी गांडीविभाषिणीवन्याश्रीकृष्णवरमिच्छती १७ द्वारकागमनाराज्ञीपट्टराज्ञीपरंगता महाराज्ञीरत्न
भूषागोमतीतीरचारिणी १८ स्वकीयाचसुखास्वार्थास्वभक्तकार्यसाधिनी नवलांगाबलामुग्धावरांगावाम
लोचना १९ अज्ञातयौवनादीनाप्रभाकान्तिर्द्युतिश्छविः सुशोभापरमाकीर्तिःकुशलाज्ञातयौवना २०
नवोढामध्यगामध्याप्रौढिःप्रौढाप्रगल्भका धीराऽधीराधैर्य्यधराज्येष्ठाश्रेष्ठाकुलांगना २१ क्षणप्रभाचं

लेपुनामोच्चार्य्यविधानतः वृन्दावनंगोवर्द्धनंवृन्दांचतुलशींतथा ९ चतुर्दिक्षुविधायाशुपूजयेन्नामभिःपृथक् १०
ॐ नमोभगवत्यैकलिन्दनंदिन्यैसूर्यकन्यकायैयमभगिन्यैश्रीकृष्णप्रियायैयूथीभूतायैस्वाहा अनेनमंत्रेणावाहनानि-
षोडशोपचारान्समाहितउपाहरेत् इत्येवंपटलंविद्धितुल्यंवक्ष्यामिपद्धतिम् यावत्सम्पूर्णतांयातिपुरश्चरणमेवहि ११
तावद्धवेद्ब्रह्मचारिजपेन्मौनव्रतोद्विजः यवभोजीभूमिशायीपत्रभुक्जितमानसः १२ कामंक्रोधंतथालोभंमोहंद्वेषं-
विसृज्यसः भक्त्यापरमयाराजन्वर्तमानस्तुदेशकः १३ ब्राह्ममुहूर्तउत्थायध्यात्वादेवींकलिंदजाम् अरुणो-
दयवेलायांनद्यांस्नानंसमाचरेत् १४ मध्यान्हेचापिसंध्यायांसंध्यावन्दनतत्परः समाप्तेनियमेराजन्कालिन्दीती-
रमास्थितः १५ दशलक्षंब्राह्मणानांसपुत्राणांमहात्मनाम् पूजयित्वागन्धपुष्पैःप्रादातेभ्यःशुभोजनम् १६ व
स्त्रभूषणसौवर्णपात्राणिप्रस्फुरंतिच दक्षिणाश्चशुभादद्यात्ततःसिद्धिर्भवेदतः १७ इतितेपद्धतिःप्रोक्तामया
राजन्महामते कुरुत्वंनियमंसर्वंकिम्भूयःश्रोतुमिच्छसि १८ इतिश्रीमद्गर्गाचार्य्यसंहितायांश्रीमाधुर्य्यख-
ण्डेसौभरिमांधातृसंवादेपटलपद्धतिवर्णनंनामाष्टादशोऽध्यायः १८ मान्धातोवाच नाम्नांसहस्रंकृ-
ष्णायाःसर्वसिद्धिकरम्परम् वदमांमुनिशार्दूलत्वंसर्वज्ञोनिरामयः १ सौभरिरुवाच नाम्नांसहस्रंकालिं
द्यामान्धातस्तेवदाम्यहम् सर्वसिद्धिकरंदिव्यंश्रीकृष्णवशकारकम् २ ओम् अस्यश्रीकालिन्दीसहस्रना
मस्तोत्रमंत्रस्य सौभरिऋषिः श्रीयमुनादेवताऽनुष्टुप्छन्दः मायाबीजमितिकीलकम् रमाबीजमितिश
क्तिः श्रीकलिंदनन्दिनीप्रसादसिद्ध्यर्थंजपेविनियोगः अथध्यानम् श्यामामंभोजनेत्रांसघनघनरुचिंरत्नमंजी
रकूजत्कांचीकेयूरयुक्तांकनकमणिमयेबिभ्रतींकुण्डलेद्वे भ्राजच्छ्रीनीलवस्त्रस्फुरदमलचलद्धारभारांमनोज्ञांध्याये

बल्लीबहुलावनवन्दिता राधाकुण्डकलाराध्याकृष्णकुंडजलाश्रिता ४१ ललिताकुंडगाथंटाविशारदाकुंडमंडिता
गोविन्दकुण्डनिलयागोपकुण्डतरंगिणी ४२ श्रीगंगामानसीगंगाकुसुमांबरभाविनी गोवर्द्धनीगोधनाढ्यामयूरीव
रवर्णिनी ४३ सारसीनीलकंठाभाकूजत्कोकिलपोतकी गिरिराजप्रसूर्भूरिशतपत्रातपत्रिणी ४४ गोवर्द्धनां
कागोदंतीदिव्यौषधिनिधिःसृतिः पारदीपारदमयीनारदीशारदीभृतिः ४५ श्रीकृष्णचरणांकस्थाकामाकामव-
नांचिता कामाटवीनन्दिनीचनन्दग्रामममहीधरा ४६ बृहत्सानुद्युतिःप्रोतानन्दीश्वरसमन्विता काकलीकोकिलम
यीभांडीरकुशकौशला ४७ लोहार्गलप्रदाकाराकाश्मीरवसनावृता बर्हिषदीशोणपुरीशूरक्षेत्रपुराधिका ४८ -
नानाभरणशोभाढ्यानानावर्णसमन्विता नानानारीकदंबाढ्यारंगारंगमहीरुहा ४९ नानालोकगतावर्विनानाज
लसमन्विता स्त्रीरत्नंरत्ननिलयाललनारत्नरंजिनी ५० रंगिणीरंगभूम्याढ्यारंगारंगमहीरुहा राजविद्याराज
गुह्याजगत्कीर्तिर्घनाघना ५१ विलोलघंटाकृष्णांगाकृष्णदेहसमुद्भवा नीलपंकजवर्णाभानीलपंकजहारिणी -
५२ नीलाभानीलपद्माढ्यानीलांभोरुहवासिनी नागवल्लीनागपुरीनागवल्लीदलार्चिता ५३ तांबूलचर्चितांच
र्चामकरन्दमनोहरा सकेसराकेसरिणीकेशपाशाभिशोभिता ५४ कज्जलाभाकज्जलाक्ताकज्जलीकलितांज
ना आलक्तचरणाताम्रालालाताम्रीकृतांबरा ५५ सिन्दूरितालिप्तवाणीसुश्रीःश्रीखण्डमंडिता पाटीरपंक
वसनीजटामांसीरुचाम्बरा ५६ आगर्य्यगुरुगन्धाक्तातगराश्रितमारुता सुगन्धितैलरुचिराकुन्तलालिःसुकु-
न्तला ५७ शकुन्तलाऽपांशुलाचपातिव्रत्यपरायणा सूर्य्यप्रभासूर्यकन्यासूर्य्यदेहसमुद्भवा ५८ कोटिसूर्य्य
प्रतीकाशासूर्यजासूर्यनन्दिनी संज्ञासंज्ञासुतास्वेच्छासंज्ञामोदप्रदायिनी ५९ संज्ञापुत्रीस्फुरच्छायातपनीता

चलार्चाविद्युत्सौदामिनीतडित् स्वाधीनयतिकालक्ष्मीः पुष्टास्वाधीनभर्तृका २२ कलहांतरिताभीरुरिच्छाप्रोत्कं
ठिताकुला कशिपुस्थादिव्यशय्यागोविन्दहृतमानसा २३ खंडिताखण्डशोभाढ्याविप्रलब्धाभिसारिका विर-
हार्ताविरहिणीनारीप्रोषितभर्तृका २४ मानिनीमानदाप्राज्ञामन्दारवनवासिनी झंकारिणीझनत्कारीरणन्मंजी
रनूपुरा २५ मेखलामेखलाकांचीकांचनीकंचनामयी कंचुकीकंचुकमणिःश्रीकण्ठाढ्यामहामणिः २६ श्रीहा
रिणीपद्महाराभुक्तामुक्ताफलार्चिता रत्नकंकणकेयूरास्फुरदंगुलिभूषणा २७ दर्पणादर्पणीभूतादुष्टदर्पवि
नाशिनी कंबुग्रीवाकंबुधराग्रैवेयकविराजिता २८ ताटंकिनीदंतधराहेमकुण्डलमण्डिता शिखाभूषाभाल
पुष्पानासामौक्तिकशोभिता २९ मणिभूमिगतादेवीरैवताद्रिविहारिणी वृन्दावनगतावृन्दावृन्दारण्यनिवासिनी
३० वृन्दावनलतामाध्वीवृन्दारण्यविभूषणा सौंदर्यलहरीलक्ष्मीर्मथुरातीर्थवासिनी ३१ विश्रांतवासिनीका
म्यारम्यागोकुलवासिनी रमणस्थलशोभाढ्यामहावनमहानदी ३२ प्रणताप्रोन्नतापुष्टाभारतीभरतार्चिता
तीर्थराजगतिर्गोत्रागंगासागरसंगमा ३३ सप्ताब्धिभेदिनीलोलासप्तद्वीपगताबलात् लुठंतीशैलभिद्यंतीस्फुरं
तीवेगवत्तरा ३४ कांचनीकांचनीभूमिःकांचनीभूमिभाविता लोकदृष्टिर्लोकलीलालोकालोकाचलार्चिता ३५
शैलोद्धृतास्वर्गगतास्वर्गार्चास्वर्गपूजिता वृन्दावनीवनाध्यक्षारक्षाकक्षातटीपटी ३६ असिकुण्डगताकच्छास्व-
च्छन्दोच्छलिताद्रिजा कुहरस्थारयप्रस्थाप्रस्थान्छातेतरातुरा ३७ अंबुच्छटासीकराभादर्दुरादार्दुरीधरा पा
पांकुशापापसिंहीपापद्रुमकुठारिणी ३८ पुण्यसंघापुण्यकीर्त्तिःपुण्यदापुण्यवर्द्धिनी मधोर्वननदीमुख्यातुलाना
लवनस्थिता ३९ कुमुद्वननदीकुब्जाकुमुदांभोजवर्द्धिनी प्लवरूपावेगवतीसिंहसर्पादिवाहिनी ४० बहुलीबहुदा

णाकरी महत्तत्वमहंकारोमनोबुद्धिःप्रचेतना ७९ चेतोवृत्तिःस्वान्तरात्माचतुर्द्धाचतुराक्षरा चतूर्व्यूह-
श्चतुर्मूर्तिर्व्योमवायुरदोजलम् ८० महीशब्दोरसोगन्धःस्पर्शोरूपमनेकधा कर्मेंद्रियंकर्ममयीज्ञानज्ञानेन्द्रि
यंद्विधा ८१ त्रिधाधिभूतमध्यात्ममधिदैवमधिस्थितम् ज्ञानशक्तिःक्रियाशक्तिःसर्वदेवाधिदेवता ८२
तत्त्वसंघाविराट्मूर्तिर्धारणाधारणामयी श्रुतिःस्मृतिर्वेदमूर्तिःसंहितागर्गसंहिता ८३ पाराशरीशावशि
ष्टीपारहंसीविधातृका याज्ञवल्कीभागवतीश्रीमद्भागवतार्चिता ८४ रामायणमयीरम्यापुराणपुरुषप्रि
या पुराणमूर्त्तिःपुण्यांगाशास्त्रमूर्तिर्महोन्नता ८५ मनीषाधिषणाबुद्धिर्वाणीधीःशेमुषीमतिः गाय
त्रीवेदसावित्रीब्राह्मणीब्रह्मलक्षणा ८६ दुर्गापर्णासतीसत्यापार्वतीचंडिकांबिका आर्यादाक्षायिणी
दाक्षीदक्षयज्ञविघातनी ८७ पुलोमजाशचीन्द्राणीवेदीदेववरार्पिता वायुनाधारिणीधन्यावायवीवायुवेग
गा ८८ यमानुजासंयमनीसंज्ञाच्छायास्फुरद्द्युतिः रत्नदेवीरत्नवृन्दातारातरणिमण्डला ८९ रुचिः
शान्तिःक्षमाशोभादयादक्षद्युतिस्त्रपा तलतुष्टिर्विभापुष्टिःसन्तुष्टिःपुष्टभावना ९० चतुर्भुजाचारुने-
त्राद्विभुजाष्टभुजाबला शंखहस्तापद्महस्ताचक्रहस्तागदाधरा ९१ निषंगधारिणीचर्मखड्गपाणिर्धनुर्द्ध
रा धनुष्टंकारणीयोध्रीदैत्योद्भटविनाशिनी ९२ रथस्थागरुडारूढाश्रीकृष्णहृदयस्थिता वंशीधराकृष्ण
वेषास्त्रग्विणीवनमालिनी ९३ किरीटधारिणीयानामन्दमन्दगतिर्गतिः चन्द्रकोटिप्रतीकाशातन्वीकोम-
लविग्रहा ९४ भैष्मीभीष्मसुताभीमारुक्मिणीरुक्मरूपिणी सत्यभामाजांबवतीसत्याभद्रासुद-
क्षिणा ९५ मित्रवृन्दासखीवृन्दावृन्दारण्यध्वजोर्ध्वगा शृंगारकारिणीशृंगाशृंगभूः शृंगदासगा ९६-

पकारिणी सावर्ण्यानुभवावेदीवडवासौख्यदायिनी ६० शनैश्चरानुजाकीलाचन्द्रवंशविवर्द्धिनी चन्द्रवंशवधूश्च-
न्द्रावद्रावलिसहायनी ६१ चन्द्रावतीचन्द्रलेखाचन्द्रकान्तानुगांशुला भैरवीपिंगलाशंकीलीलावत्यागरीमयी ६२
धनश्रीदेवगान्धारीस्वर्मणिर्गुणवर्द्धिनी ब्रजमल्लार्यधकारीविचित्राजयकारिणी ६३ गान्धारीमंजरीटोडीगुर्ज्जर्य्या-
सावरीजया कर्णाटीरागिणीगौरीवैराटीगौरवाटिका ६४ चतुश्चन्द्रकलाहेरीतैलंगीविजयावती तालीतलस्व
रागानाक्रियामातप्रकाशिनी ६५ वैशाखीमचलाचारुर्मांचारीघूघटीघटा वैरागरीसोरटीशाकेदारीजलधारिका ६६
काशाकरश्रीकल्याणीगौडकल्याणमिश्रिता रामसंजीविनीहेलामन्दारीकामरूपिणी ६७ सारंगीमारुतीहोडासा
गरीकामवादिनी वैभासीमंगलाचान्द्रीरासमण्डलमण्डना ६८ कामधेनुःकामलताकामदाकमनीयका कल्पवृक्ष
स्थलीस्थूलाक्षुधासौधनिवासिनी ६९ गोलोकवासिनीसुभ्रूर्यष्टिभृद्द्वारपालिका शृंगारप्रकरासृंगास्वच्छाशय्यो
पकारका ७० पार्षदासुसखीसेव्याश्रीवृन्दावनपालिका निकुंजभृत्कुंजपुंजागुंजाभरणभूषिता ७१ निकुंज
वासिनीप्रोष्यागोवर्द्धनतटीभवा विशाखाललितारामानिरुजामधुमाधवी ७२ एकानैकसखीशुक्लासखीमध्याम-
हामनाः श्रुतिरूपाऋषिरूपामैथिलाःकौशलाःस्त्रियः ७३ अयोध्यापुरवासिन्योयज्ञसीताःपुलिंदकाः रमावै
कुण्ठवासिन्यःश्वेतद्वीपसखीजनाः ७४ ऊर्द्ध्ववैकुण्ठवासिन्योदिव्याजितपदाश्रिताः श्रीलोकाचलवासिन्यःश्री
सख्यःसागरोद्भवाः ७५ दिव्याअदिव्यादिव्यांगाव्याप्तास्त्रिगुणवृत्तयः भूमिगोप्योदेवनार्य्योलताओषधिवीरु
धः ७६ जालंधर्य्यःसिन्धुसुताःपृथुबर्हिष्मतीभवाः दिव्यांबराअप्सरसःसौतलानागकन्यकाः ७७ परं
धामपरंब्रह्मपौरुषाप्रकृतिःपरा तटस्थागुणभूर्गीतागुणागुणमयीगुणा ७८ चिद्घनासदसन्मालादृष्टीदृश्यागु

गंगामन्दाकिनीबलाच्छस्वर्नदीजान्हवीवेलावैष्णवीमंगलालया बालाविष्णुपदीप्रोच्यासिन्धुसागरसंगता १५-
गंगासागरशोभाढ्यासामुद्रीरत्नदाधुनी भागीरथीस्वर्धुनीभूः श्रीवामनपदच्युता १६ लक्ष्मीरमारामणी-
याभार्गवीविष्णुवल्लभा सीतार्चिर्जानकीमाताकलंकरहिताकला १७ कृष्णपादाब्जसम्भूतासर्वात्रिपथगा
मिनी धराविश्वंभरानन्ताभूमिर्धात्रीक्षमामयी १८ स्थिताधरित्रीधरणिरुर्वीशेषफणास्थिता अयोध्यारा-
घवपुरीकौशिकीरघुवंशजा १९ मथुरामाथुरीपंथायादवीध्रुवपूजिता मयायूर्बिल्वनीलद्वागंगाद्वारविनिर्गता-
२० कुशावर्तमयीध्रौव्याध्रुवमण्डलमध्यगा काशीशिवपुरीशेषाविंध्यावाराणसीशिवा २१ अवंतिकादेवपु
रीप्रोज्ज्वलोज्जयनीजिता द्वारावतीद्वारकामाकुशभूताकुशस्थली २२ महापुरीसप्तपुरीनन्दिग्रामस्थलस्थिता
शालिग्रामशिलादित्यशंभलग्राममध्यगा २३ वंशगोपालनीक्षिप्राहरिमन्दिरवर्तिनी बर्हिष्मतीहस्तिपुरीश-
क्रप्रस्थनिवासिनी २४ दाडमीसैंधवीजंबूपौष्करीपुष्करप्रसूः उत्पलावर्तगमनानैमिषीनैमिषावृता २५ कु
रुजांगलभूःकालीहैमवत्यार्बुदीबुधा शूकरक्षेत्रविदिताश्वेतवाराहधारिता २६ सर्वतीर्थमयीतीर्थातीर्था-
नांतीर्थकारिणी हारिणीसर्वदोषाणांदायिनीसर्वसर्वसम्पदाम् २७ वर्द्धनीतेजसांसाक्षाद्गर्भवासनिकृंत
नी गोलोकधामधनिनीनिकुंजनिजमंजरी २८ सर्वोत्तमासर्वपुण्यासर्वसौन्दर्य्यशृंखला सर्वतीर्थोपरिगता
सर्वतीर्थाधिदेवता २९ नाम्नांसहस्रंकालिन्द्याःकीर्त्तिदंकामदम्परम् महापापहरम्पुण्यमायुर्वर्द्धनमुत्तमम् ३०
एकवारंपठेद्रात्रौचौरेभ्योनभयंभवेत् द्विवारंप्रपठेन्मार्गेदस्युभ्योनभयंक्वचित् ३१ द्वितीयांतुसमारभ्यपठेत्पूर्णा
वधिंद्विजः दशवारमिदंभक्त्याध्यात्वादेवींकलिन्दजाम् ३२ रोगीरोगात्प्रमुच्येतबद्धोमुच्येतबन्धनात् गुर्विणी

तितिक्षेक्षास्मृतिःस्पर्धास्पृहाश्रद्धास्वनिर्वृतिः ईशातृष्णाभिदाप्रीतिर्हिंसायांचाकुमाकृषिः ९७ आशा
निद्रायोगनिद्रायोगिनीयोगदायुगा निष्ठाप्रतिष्ठाशमितिःसत्वप्रकृतिरुत्तमा ९८ तमःप्रकृतिदुर्मर्षीरजःप्र
कृतिरानतिः क्रियाऽक्रियाकृतिर्ग्लानिःसात्त्विक्याध्यात्मिकीवृषा ९९ सेवाशिखामणिर्वृद्धिराहूतिःसु
मतिर्द्युभूः रज्जुर्हृदाम्नीषट्वर्गासंहितासौख्यदायिनी १०० उक्तिःप्रोक्तिर्देशभाषाप्रकृतिःपिंगलोद्भवा-
नागभाषानागभूषानागरीनगरीनगा १ नौर्नौकाभवनौर्भाव्याभवसागरसेतुका मनोमयीदारुमयीसैकती
सिकतामयी २ लेख्यालेप्यामणिमयीप्रतिहेमविनिर्मिता शैलीशैलभवाशीलाशीकराभाचलाचला ३-
अस्थितास्वस्थितातूलीवैदिकीतांत्रिकीविधिः संध्यासंध्याभ्रवसनावेदसंधिःसुधामयी ४ सायंतनीशिखा
वेध्यासूक्ष्माजीवकलाकृतिः आत्मभूताभाविताऽणवीप्रह्वीकमलकर्णिका ५ नीराजनीमहाविद्याकंद
लीकार्यसाधनी पूजाप्रतिष्ठाविपुलापुनंतीपारलौकिकी ६ शुक्लशुक्तिर्मौक्तिकाचप्रतीतिःपरमेश्वरी वि
राजोष्णिक्विराड्वेणीवेणुकावेणुनादिनी ७ आवर्तिनीवार्तिकदावार्त्तावृत्तिर्विमानगा रासाढ्यारासिनीरा
शीरासमण्डलमण्डली ८ गोपगोपीश्वरीगोपीगोपीगोपालवन्दिता गोचारिणीगोपनदीगोपानन्दप्रदायि-
नी ९ पशव्यदागोपसेव्याकोटिशोगोगणावृता गोपानुगागोपवतीगोविन्दपदपादुका १० वृषभानुसुतारा
धाश्रीकृष्णवशकारिणी कृष्णप्राणाधिकाशश्वद्रसिकारसिकेश्वरी ११ अवटोदाताम्रपर्णीकृतमाला-
विहायसी कृष्णावेणीभीमरथीतापीरेवामहापगा १२ वैयासकीचकावेरीतुंगभद्रासरस्वती चन्द्र-
भागावेत्रवतीऋषिकुल्याककुद्मिनी १३ गौतमीकौशिकीसिन्धुर्बाणगंगातिसिद्धिदा गोदावरीरत्नमाला

स्कन्दरोलोलकुंडलः आकाशस्थःपूर्णचन्द्रः सतडिज्जलदोयथा १० दैत्यंभयंकरंवीक्ष्यबलदेवोमहाबलः
रुषाहनन्मुष्टिनातंशिरस्यद्रिंयथाद्रिभित् ११ विशीर्णमस्तकोदैत्योयथावज्रहतोगिरिः पपातभूमौसहसा
चालयन्वसुधातलम् १२ तज्ज्योतिर्निर्गतंदीर्घंबलेलीनंबभूवह तदैववर्षुर्देवाःपुष्पैर्नन्दनसंभवैः १३ अभू
ज्जयजयारावोदिविभूमौनृपेश्वर एवंश्रीबलदेवस्यचरितम्परमाद्भुतम् १४ मयातेकथितंराजन्किंभूयःश्रोतु
मिच्छसि बहुलाश्वउवाच कोयंदैत्यःपूर्वकालेप्रलंबोरणदुर्मदः बलदेवस्यहस्तेनमुक्तिंप्रापकथंमुने १५
श्रीनारदउवाच शिवस्यपूजनार्थंहियक्षराट्स्ववनेशुभे कारयामासपुष्पाणांरक्षांयक्षैरितस्ततः १६ तद
प्यस्यातिजगृहुःपुष्पाणिप्रस्फुरंतिच ततःक्रुद्धोददौशापंयक्षराड्धनदोबली १७ येगृण्हंत्यस्यपुष्पाणि
स्वेच्छान्येसुरमानवाः भवितारोऽसुराःसर्वेमच्छापात्सहसाभुवि १८ हूहूसुतोथविजयोविचरन्तीर्थभूमि
षु वनंचैत्ररथंप्राप्तोगायन्विष्णुगुणान्पथि १९ वीणापाणिरजानन्वैगन्धर्वःसुमनांसिच गृहीत्वासोऽसु
रोजातोगन्धर्वत्वंविहायतत् २० तदैवशरणंप्राप्तःकुबेरस्यमहात्मनः नत्वातत्प्रार्थनांचक्रेकृतांजलिपुटः
शनैः २१ तस्मैप्रसन्नोराजेन्द्रकुबेरोपिवरंददौ त्वंविष्णुभक्तःशांतात्मामाशोचंकुरुमानद २२ द्वाप
रांतेचतेमुक्तिर्बलदेवस्यहस्ततः भविष्यतिनसन्देहोभाण्डीरेयमुनातटे २३ श्रीनारदउवाच हूहूसुतःस
गन्धर्वःप्रलंबोभून्महासुरः कुबेरस्यवराद्राजन्परमोक्षंजगामह २४ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमा
धुर्यखण्डेनारदबहुलाश्वसंवादेप्रलंबवधोनामविंशोऽध्यायः २० श्रीनारदउवाच अथक्रीडाप्रसक्ते
षुगोपेषुसबलेषुच तृणलोभेनविविशुर्गावःसर्वामहद्वनम् १ तास्मानेतुंगोपबालाःप्राप्तामुंजाटवींपराम्

जनयेत्पुत्रंविद्यार्थीपंडितोभवेत् ३३ मोहनंस्तम्भनंशश्वद्वशीकरणमेवच उच्चाटनंघातनंचशोषणंदीपनंतथा ३४ उन्मादनतापनंचनिधिदर्शनमेवच यद्यद्वांछतिचित्तेनतत्तत्प्राप्नोतिमानवः ३५ ब्राह्मणोब्रह्मवर्चस्वीराजन्योजगतीपतिः वैश्योनिधिपतिर्भूयाच्छूद्रःश्रुत्वातुनिर्मलः ३६ पूजाकालेतुयोनित्यंपठतेभक्तिभावतः लिप्यतेनेनसपापेनपद्मपत्रमिवांभसा ३७ शतवारंपठेन्नित्यंवर्षावधिमतःपरम् पटलंपद्धतिंकृत्वास्तवंचकवचंतथा ३८ सद्वीपमहीराज्यंप्राप्नुयान्नात्रसंशयः ३९ निःकारणंपठेद्यस्तुयमुनाभक्तिसंयुतः त्रिवर्ग्यमेत्यस्कृतीजीवन्मुक्तोभवेदिह ४० निकुंजलीलाललितंमनोहरंकलिन्दजाकूललताकदम्बकम् वृन्दावनोन्मत्तमिलिन्दशब्दितंव्रजेत्सगोलोकमिदंपठेच्चयः ४१ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेश्रीसौभरिमान्धातृसंवादेयमुनासहस्रनामकथनंनामैकोनविंशोऽध्यायः १९ नारदउवाच इतिकृष्णास्तवंश्रुत्वामान्धातानृपसत्तमः अयोध्यांप्रययौवीरोनत्वाश्रीसौभरिंमुनिम् १ इदंमयातेकथितंगोपीनांचरितंशुभम् महापापहरंपुण्यंकिंभूयःश्रोतुमिच्छसि २ बहुलाश्वउवाच श्रुतंतवमुखाद्ब्रह्मन्गोपीनांवर्णनंपरम् यमुनायाश्चपंचांगंमहापातकनाशनम् ३ श्रीकृष्णःसबलःसाक्षाद्गोलोकाधिपतिःप्रभुः अग्रेचकारकांलीलांललितांव्रजमंडले ४ श्रीनारदउवाच एकदाचारयन्गाःस्वाःसबलोगोपबालकैः भाण्डीरेयमुनातीरेबाललीलांचकारह ५ विहारंकारयन्बालैर्वाह्यवाहकलक्षणम् विजहारवनेकृष्णोदर्शयन्गामनोहराः ६ तत्रागतोगोपरूपीप्रलंबःकंसनोदितः नज्ञातोबालकैःसोपिहरिणाविदितोऽभवत् ७ विहारविजयंरामंनेतुंकोपिनमन्यते उवाहतंप्रलंबोसौभाण्डीराद्यमुनातटम् ८ अवरोहणतोदैत्योमथुरांगंतुमुद्यतः दधारघनवद्रूपंगिरीन्द्रइवदुर्गमः ९ बभौबलोदैत्यपृष्ठे-

देवताः १७ युष्माकंतुप्रभावेनपतयोवोद्विजातयः सद्योयज्ञफलंप्राप्ययुष्माभिःसहनिर्मलाः १८ गमिष्यंति
परंधामगोलोकंप्रकृतेःपरम् श्रीनारदउवाच अथनत्वाहरिंसर्वाआजग्मुर्यज्ञमण्डले ताःदृष्ट्वाब्राह्मणाःसर्वे
स्वात्मानंधिक्प्रचक्रिरे दिदृक्षवस्तेश्रीकृष्णंकंसाद्भीतानचागताः २० भुक्त्वान्नंसबलःकृष्णोगोपालैःस
हमैथिल गाःपालयन्नाजगामवृंदारण्यंमनोहरम् २१ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनार
दबहुलाश्वसंवादेदावाग्निमोक्षविप्रपत्निदर्शनंनामैकविंशोऽध्यायः २१ श्रीनारदउवाच एकदानन्दराजोसौ
कृत्वाचैकादशीव्रतम् द्वादश्यांयमुनांस्नातुंगोपालैर्जलमाविशत् १ तंगृहीत्वापाशिभृत्यःपाशिलोकंजगा
मह तदाकोलाहलेजातेगोपानांमैथिलेश्वर २ आश्वास्यसर्वान्भगवान्गतवान्वारुणींपुरीम् भस्मीचकार-
सहसापुरीदुर्गंहरिःस्वयम् ३ कोटिमार्तण्डसंकाशंदृष्ट्वाप्रकुपितंहरिम् नत्वाकृतांजलिःपाशीपरिक्रम्याहधर्षि-
तः ४ वरुणउवाच नमःश्रीकृष्णचन्द्रायपरिपूर्णतमायच असंख्यब्रह्मांडभृतेगोलोकपतयेनमः ५
चतुर्व्यूहायमहसेनमस्तेसर्वतेजसे नमस्तेसर्वभावायपरस्मैब्रह्मणेनमः ६ केनापिमूढेनममानुगेनकृतंपरं
हेलनमद्यमेव तत्क्षम्यतांभोःशरणंगतंमांपरेशभूमन्परिपाहिपाहि ७ नारदउवाच इतिप्रसन्नोभगवान्नं
दंनीत्वास्फजीवतम् सौख्यंप्रकाशयन्बंधून्व्रजमंडलमाययौ ८ नन्दराजमुखाच्छ्रुत्वाप्रभावंश्रीहरेर्महत्-
गोपीगोपगणाऊचुःश्रीकृष्णंनन्दनन्दनम् ९ यदित्वंभगवान्साक्षाल्लोकपालैःसुपूजितः दर्शयाशुपरंलो
कंवैकुंठंतर्हिनःप्रभो १० नीत्वासर्वांस्ततःकृष्णएत्यवैकुण्ठमन्दिरम् दर्शयामासरूपंस्वंज्योतिर्मण्डलम
ध्यगम् ११ सहस्रभुजसंयुक्तंकिरीटकटकोज्ज्वलम् शंखचक्रगदापद्मवनमालाविराजितम् १२ असंख्यको

84

संभूतस्तत्रदावाग्निः प्रलयाग्निसमो महान् २ गोभिर्गोपाः समेतास्ते श्रीकृष्णं सबलं हरिम् वदन्तः पाहि पाहीति भयार्ताः शरणं गताः ३ वीक्ष्य वह्निभयं स्वानां कृष्णो योगेश्वरेश्वरः न्यमीलयत मा भैष्ट लोचनानीत्यभाषत ४ तथाभूतेषु गोपेषु तमग्निं भयकारकम् अपिबद्भगवान्देवो देवानां पश्यतां नृप ५ एवं पीत्वा महावह्निं-नीत्वा गोपालगोगणम् प्राप्तोऽभूद्यमुनापारे शक्राशोकवने हरिः ६ तत्र क्षुत्पीडिता गोपाः श्रीकृष्णं सबलं हरिम् कृताञ्जलिपुटा ऊचुः क्षुधार्ताः स्मो वयं प्रभो ७ तदा तान्प्रेषयामास यज्ञं चाङ्गिरसे हरिः ते गत्वा तं यज्ञवरं नत्वोचुर्विमलं वचः ८ गोपा ऊचुः गोपालबालैः सबलः समागतो गाश्चारयन् श्रीव्रजराजनन्दनः क्षुत्संयुतोऽस्मै सगणाय भूसुराः प्रयच्छतान्नं मनङ्गमोहिने ९ श्रीनारद उवाच न किंचिदूचुस्ते सर्वे वचः श्रुत्वा द्विजा नृप गोपा निराशा आगत्य इत्यूचुः सबलं हरिम् १० गोपा ऊचुः त्वमस्यधीशो व्रजमंडले बली श्रीगोकुले नन्दपुरोग्रदंडधृक् न वर्तते दंडमलं मधोः पुरि प्रचंडचंडांशुमहस्तव स्फुरत् ११ श्रीनारद उवाच पुनस्तान्प्रेषयामास तत्पत्नीभ्यो हरिः स्वयम् यज्ञवाटं पुनर्गत्वा नत्वा विप्रप्रियास्तदा १२ कृताञ्जलिपुटा ऊचुर्गोपाः कृष्णप्रणोदिताः १३ गोपा ऊचुः गोपालबालैः सबलः समागतो गाश्चारयन् श्रीव्रजराजनन्दनः क्षुत्संयुतो-ऽस्मै सगणाय चाङ्गनाः प्रयच्छताशन्नमनङ्गमोहिने १३ श्रीनारद उवाच कृष्णं समागतं श्रुत्वा कृष्णदर्शनलालसाः चक्रुर्विधान्नं पात्रेषु नीत्वा सर्वा द्विजाङ्गनाः १४ त्यक्त्वा सद्यो लोकलज्जां कृष्णपार्श्वे समाययुः अशोकानां वने रम्ये कृष्णातीरे मनोहरे १५ यथा श्रुतं तथा दृष्टं श्रीहरे रूपमद्भुतम् आप्यानन्दं गताः सर्वास्तुरीयं योगिनो यथा १६ श्रीभगवानुवाच धन्या यूयं दर्शनार्थमागता हे द्विजाङ्गनाः प्रतियात गृहान् शीघ्रं निःशंका भूमि

९ नंदाद्याविस्मिताःसर्वेज्ञात्वाकृष्णंपरेश्वरम् अंबिकावनतःशीघ्रमाययुर्व्रजमण्डलम् १० इदंमयातेकथितं
श्रीकृष्णचरितंशुभम् सर्वपापहरंपुण्यंकिंभूयःश्रोतुमिच्छसि ११ बहुलाश्वउवाच अहोश्रीकृष्णचन्द्रस्य-
चरितंपरमाद्भुतम् श्रुत्वामनोमेतच्छ्रोतुंसंप्राप्तंपुनरिच्छति १२ अग्रेचकारकांलीलांलीलयाव्रजमण्डले हरि
र्व्रजेशः परमोवद देवर्षिसत्तम १३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमाधुर्यखण्डेनारदबहुलाश्वसंवादेसुदर्श
नोपाख्यानंनामत्रयोविंशोऽध्यायः २३ श्रीनारदउवाच एकदाशैलदेशेषुसबलोभगवान्हरिः कृत्वाविला
पनंक्रीडांचोरपालकलक्षणाम् १ तत्रव्योमासुरोदैत्योबालान्मेषायितान्बहून् नीत्वानीत्वाद्रिदर्य्यांचविनिक्षि
प्यपुनःपुनः २ शिलयापिदधेद्वारंमयपुत्रोमहाबलः सत्यचोरंचतंज्ञात्वाभगवान्मधुसूदनः ३ गृहीत्वापात
यामासभुजाभ्यांभूमिमण्डले ४ तदामृत्युंगतोदैत्यस्तज्ज्योतिर्निर्गतंस्फुरत् दशदिक्षुभ्रमद्राजन्श्रीकृष्णे
लीनतांगतम् ५ तदाजयजयारावोदिविभूमौबभूवह पुष्पाणिववृषुर्देवाःपरमानन्दसंवृताः ५ बहुलाश्व
उवाच कोऽयंपूर्वंकुशलकृत्व्योमोनामाथतद्वद येनकृष्णेघनश्यामेलीनोभूद्दामिनीयथा ६ नारदउवाच
आसीत्काश्यांभीमरथोराजादानपरायणः यज्ञकृन्मानदोधन्वीविष्णुभक्तिपरायणः ७ राज्येपुत्रंसन्निवेश्यज
गाममलयाचलम् तपस्तेपेसमारेभेवर्षाणांलक्षमेवहि ८ तस्याश्रमेपुलस्त्योसौशिष्यवृन्दैःसमागतः तं
दृष्ट्वानोत्थितोमानीराजर्षिर्ननतोऽभवत् ९ शापंददौपुलस्त्योपिदैत्योभवमहाखल ततस्तच्चरणोपांतेपतितं
शरणागतम् १० उवाचमुनिशार्दूलःपुलस्त्योदीनवत्सलः द्वापरान्तेमाथुरेचपुण्येश्रीव्रजमण्डले ११ यदुवंश
पतेःसाक्षाच्छ्रीकृष्णस्यभुजौजसा ईप्सितायोगिभिर्मुक्तिर्भविष्यतिनसंशयः १२ श्रीनारदउवाच

टिमार्तंडसकाशंशेषसंस्थितम् चामरांदोलदिव्याभंब्रह्माद्यैःपरिसेवितम् १३ तदैवतान्गोपगणान्पार्षदस्तेग
दाधरः अंकंकृत्वानतिंधृत्वादूरेस्थाप्यप्रयलतः १४ चकितानिवतान्वीक्ष्यप्रोचुस्तेपार्षदागिरा रेरेतूष्णीं-
प्रभवतमावक्रत्ववनेचराः १५ भाषणंमाप्रकुरुतनदृष्टाकिंसभाहरेः वेदावदंतिचात्रैवसाक्षाद्देवेस्थितेप्र-
भौ १६ इतिशिक्षांगतागोपाहर्षितामौनमास्थिताः मनस्यूचुरयंकृष्णउच्चसिंहासनेस्थितः १७ अस्मान्
दूरादधःकृत्वास्माभिर्वक्तिनकर्हिचित् तस्माद्व्रजाद्दूरंनास्तिकोपिलोकोनसौख्यदः १८ यत्रानेनस्वभ्रात्रा-
पिवार्त्तास्याद्धिपरस्परम् इतिप्रवदतस्तान्वैनीत्वाश्रीभगवान्हरिः व्रजमागतवान्राजन्परिपूर्णतमःप्रभुः -
१९ इतिश्रीम० मा० खं० नारदब० सं० नन्दादिवैकुण्ठदर्शननामद्वाविंशोऽध्यायः २२ श्रीनारदउवाच
एकदानृपगोपालाःशकटैरत्नपूरितैः वृषभानूपनंदाद्याआजग्मुश्चांबिकावनम् १ भद्रकालींपशुपतिंपूजयित्वा
विधानतः ददुर्दानंद्विजातिभ्यःसुषुपुस्तत्रसरित्तटे २ तत्रैकोनिर्गतोरात्रौसर्पोनन्दंपदेग्रहीत् कृष्णकृष्णेति
चुक्रोशनन्दोतिभयविह्वलः ३ तदोल्मुकैर्गोपबालास्तुतुदूराजगरंनृप पदंसोपिनतत्याजसर्पोथस्वमणिंय-
था ४ ततोऽस्वपदास्पर्शभगवान्लोकपावनः त्यक्त्वातदैवसर्पत्वंभूत्वाविद्याधरःकृती ५ नत्वाकृष्णंपरि
क्रम्यकृतांजलिपुटोवदत् सुदर्शनउवाच अहंसुदर्शनोनामविद्याधरवरःप्रभो अष्टावक्रंमुनिंदृष्ट्वाहासितो
स्मिमहाबलः ६ मह्यंशापंददौसोपित्वंसर्पोभवदुर्मते तच्छापाद्द्यमुक्तोहंत्वत्कृपयातवमाधव ७ त्वत्पादपद्म
मकरन्दरजःकणानांस्पर्शेनदिव्यपदवींसहसागतोस्मि तस्मैनमोभगवतेभुवनेश्वराययोभूरिभारहरणायभु
वोवतारः ८ श्रीनारदउवाच इतिनत्वाहरिंकृष्णंराजन्विद्याधरस्तुसः जगामवैष्णवंलोकंसर्वोपद्रववर्जितम्

सोयंभीमरथोराजामयदैत्यसुतोऽभवत् श्रीकृष्णभुजवेगेनमुक्तिंप्रापविदेहराट् १३ एकदागोपघोषेषु
दैत्योऽरिष्टोमहाबलः आगतोनादयन्खंगांतटाञ्छृंगैर्विदारयन् १४ गोप्योगोपागोगणाश्चवीक्ष्यतंदुद्रुवुर्भ
यात् भगवान्दैत्यहादेवोमाभैष्टेत्यभयंददौ १५ गृहीत्वातंतुशृंगेषुनोदयामाससमाधवः सोपितेनोदयामा
सश्रीकृष्णंयोजनद्वयम् १६ पुच्छेगृहीत्वातंकृष्णोभ्रामयित्वाभुजौजसा भूपृष्ठेपोथयामासकमण्डलुमि-
वार्भकः १७ अरिष्टःपुनरुत्थायक्रोधसंरक्तलोचनः शृंगैश्चरोहितंशैलंसमुत्पाट्यमहाबलः १८ गर्जयन्घ
नवद्वीरःकृष्णोपरिसमाक्षिपत् कृष्णःशैलंसगृहीत्वातस्योपरिसमाक्षिपत् १९ शैलस्यापिप्रहारेणकिं-
चिद्व्याकुलमानसः भूमौनताडशृंगाग्रान्निर्गतंतैर्जलंभुवः २० श्रीकृष्णस्तंचशृंगेषुगृहीत्वाभ्रामयन्मुहुः-
भूपृष्ठेपोथयामासवातःपद्ममिवोद्धृतम् २१ तदेववृषरूपंत्यक्त्वाविप्रवपुर्द्धरः नत्वाश्रीकृष्णपादाब्जंप्रा
हगद्गदयागिरा २२ द्विजउवाच बृहस्पतेश्चशिष्योहंवरतंतुर्द्विजोत्तमः बृहस्पतिसमीपेहंपठितुंगतवानहम्
२३ पादौकृत्वास्थितोभूवंपश्यतस्तस्यसन्मुखे तदारुषाहसमुनिर्वृषवत्त्वंस्थितःपुरः २४ गुरुहेलनकृत्त
स्मात्त्वंवृषोभवदुर्मते तेनशापाद्वृषोऽभूवंवंगदेशेषुमाधवः २५ असुराणांप्रसंगेनासुरत्वंगतवानहम् त्वत्प्र
सादाद्विमुक्तोहंशापतोऽस्करभावतः २६ श्रीकृष्णायनमस्तुभ्यंवासुदेवायतेनमः प्रणतक्लेशनाशायगोविन्दाय
नमोनमः २७ श्रीनारदउवाच इत्युक्त्वाश्रीहरिंनत्वासाक्षाच्छिष्योबृहस्पतेः द्योतयन्भुवनंराजन्विमानेनदिवं-
ययौ २८ इदंमयातेकथितंखपट्टमाधुर्य्यमद्भुतम् सर्वपापहरंपुण्यंकृष्णप्राप्तिकरंपरम् २९ कामदंपठतांशश्वत्किं
भूयःश्रोतुमिच्छसि ३० इतिश्रीमद्गर्गाचा० श्रीमा० खं० नारदब० व्योमासुरारिष्टासुरवधोनामचतुर्विंशोऽध्यायः २४

श्रीगणेशायनमः वसुदेवसुतंदेवंकंसचाणूरमर्दनम् देवकीपरमानन्दंकृष्णंवन्देजगद्गुरुम् १ बहुला-
श्वउवाच मथुरायांकिंचरित्रंकृतवान्भगवान्मुने कथंजघानकंसाख्यमेतन्मेब्रूहितत्त्ववित् २ नारदउवाच
अथैकदाहंमथुरांपुरींपरांविलोकितुंचागतवान्नृपेश्वर कर्तुंपरंदैत्यवधोद्यमंहरेःपरस्यसाक्षान्मनसाप्र-
णोदितः ३ सिंहासनेचप्रवृत्तेपुरंदरात्सितातपत्रेचलचारुचामरे स्थितंनृपंकंसमसुरगद्गुःसहप्रोवाचमेवं
शृणुतत्प्रपूजितः ४ यशोदायाःसुताजातायात्वद्धस्ताद्दिवंगता देवक्यांकृष्णउत्पन्नोरोहिण्यांनन्दनोब-
लः ५ स्वमित्रेनन्दराजेचन्यस्तोपुत्रोभवद्भयात् तवारीरामकृष्णौद्वौवसुदेवेनदैत्यराट् ६ पूतनाद्याह्यरि-
ष्टांतादैत्यायेत्वद्धटोत्कटाः याभ्यांहतावनोद्देशेतेमृत्यूतौस्मृतौकिल ७ एवमुक्तोभोजपतिःक्रोधाच्चलि
तविग्रहः जग्राहनिशितंखड्गंशौरिंहंतुंसभातले ८ मयानिवारितःसोपिविस्तृतैर्निगडैर्दृढैः बध्वातंभा
र्ययासार्द्धंकारागाररुरोधह ९ इत्युक्त्वातंमयिगतेकेशिनंदैत्यपुंगवम् रामकृष्णवधार्थायप्रेषयामास
दैत्यराट् १० चाणूरादीन्समाहूयमहामात्यंद्विपस्यच कार्यभारकरान्लोकान्प्राहेदंभोजराड्बली ११
कंसउवाच हेकूटहेतोशलकहेचाणूरमहाबल रामकृष्णौचमेमृत्यूदर्शितौनारदेनतु १२ भवद्भिरिह
संप्राप्तौहन्यतांमल्ललीलया मल्लभूमिंचसंयुक्तांकुरुताशुशुभावहाम् १३ द्विपंकुवलयापीडंरंगद्वारिम
दोत्कटम् प्रस्थाप्यतेनहंतव्यौमहामात्यममाऽहितौ १४ चतुर्दश्यांतुकर्तव्योधनुर्यागःप्रशान्तये अमा
वास्यादिनेलोकामल्लयुद्धंभवेदिह १५ नारदउवाच इत्युक्त्वास्वजनान्कंसोऽक्रूरमाहूयसत्वरम् रह-
सिप्राहराजेन्द्रमंत्रंमंत्रिजनप्रियम् १६ कंसउवाच भोभोदानपतेमंत्रिन्शृणुमेपरमंवचः गच्छनंदव्र-

र्घनाः २ तंवीक्ष्यदुःसहजवंगोपगोपीगणाभृशम् भयातुरामैथिलेन्द्रश्रीकृष्णंशरणंययुः ३ माभैष्टेत्य-
भयंदत्वाभगवान्वृजिनार्दनः कटौपीतांबरबध्वाहंतुंदैत्यंप्रचक्रमे ४ हरिंपश्चिमपादाभ्यांसंतताडमहारु-
रः चालयन्पृथिवींराजन्नादयन्व्योममंडलम् ५ गृहीत्वापादयोर्दैत्यंभ्रामयित्वाभुजेनखे चिक्षेपयोजनं-
कृष्णोवातःपद्ममिवोद्धृतम् ६ पुनरागतवान्सोपिक्रोधपूरितविग्रहः पुच्छेनश्रीहरिंदेवंसंतताडव्रजांगणे-
७ पुच्छेगृहीत्वातंकृष्णोभ्रामयित्वाभुजौजसा योजनानांशतंराजन्चिक्षेपगगनेबलात् ८ आकाशात्पति
तःसोपिकिंचिद्व्याकुलमानसः समुत्थायपुनर्दैत्योजगर्जघनवद्बली ९ सटाविधुन्वन्रोमाणिबालंखेचालयन्मु
हुः महींनिर्जुनयन्पादैरुत्पपातहरेःपुरः १० तताडमुष्टिनातंवैभगवान्मधुसूदनः तस्यमुष्टिप्रहारेणमूर्छितो
घटिकाद्वयम् ११ मस्तकेनगलोद्देशेसमुद्धृत्यहरिंहयः भूमंडलादुत्पपातगगनेलक्षयोजनम् १२ तयोर्युद्ध
मभूद्घोरंगगनेप्रहरद्वयम् पादैर्दद्भिःसटाभिश्चपुच्छतीक्ष्णखुरैर्नृप १३ गृहीत्वातंहरिर्दोर्भ्यांभ्रामयित्वातिवि-
तस्ततः आकाशात्पातयामासकमंडलुमिवार्भकः १४ भुजंप्रवेशयामासतन्मुखेभगवान्हरिः तस्योदरंग
तोबाहुर्ववृधेरोगवद्भृशम् १५ तदातुलेंडकृतवान्रुद्धवायुर्महासुरः खंडीभूतोदरःसद्योममारहयरूपधृक्
१६ देहाद्विनिर्गतःसद्योमुकुटीकुंडलान्वितः दिव्यरूपधरःकृष्णंप्रांजलिःप्रणनामह १७ कुमुदउवाच
शक्रस्यानुचरोहंवैकुमुदोनाममाधव तेजस्वीरूपवान्वीरोजिष्णुछत्रमिन्द्धन् १८ वृत्रासुरवधेपूर्वंब्रह्म-
हत्याप्रशान्तये यज्ञंचकारनाकेशोवाजिमेधंक्रतूत्तमम् १९ अश्वमेधहयंशभ्रंश्यामकर्णमनोजवम् तमा
रुरुक्षुर्दुष्टोहंचोरयित्वातलंगतः २० ततोमरुद्गणैर्नीतंपाशबद्धंमहाखलम् शशापमांबलारातिस्त्वरक्षो

जंभ्रासः कुरुकार्यंमहामते १७ आसातेतत्रमेशत्रू वस्फदेवस्फतोकिल दर्शितोनारदेनापिदेवदेवर्षिणाभृ
शम् १८ सोपायनैर्गोपगणैर्नन्दराजादिभिःसह मथुरादर्शनमिषाद्रथेनानयमाचिरम् १९ द्विपेनवामहा
मल्लैर्घातयिष्यामितौशिशू तत्पश्चान्नंदराजंचवस्फदेवसहायकम् २० वृषभानुवरंपश्चात्नवनन्दोपनन्दका
न् पश्चाच्छौरिंहनिष्यामिदेवकंतत्सहायकम् २१ उग्रसेनंचपितरंबद्धंराज्यसमुत्सकम्. तत्पश्चाद्यादवा
न्सर्वान्हनिष्यामिनसंशयः २२ एतेदेवगणाःसर्वेजातामंत्रिन्महीतले शकुनिर्मेमहान्मित्रंबलीचन्द्रावतीप
तिः २३ भूतसंतापनोह्यष्टोवृकःशंकरएवच कालनाभोमहानाभोहरिश्मश्रुस्तथैवच २४ एतेमित्रा
णिमेसंतिमदर्थंप्राणदाबलात् श्वशुरोपिजरासंधोह्यविदोमेसखास्मृतः २५ बाणासुरश्चनरकोमय्ये
वकृतसौहृदः एतेसर्वामहींजित्वाबध्वादेवान्सवासवान् २६ क्षिप्त्वामेरुगुहादुर्गेकुबेरद्रव्यनायकम्.
त्रैलोक्यराज्यंतुसदाकरिष्यामिनसंशयः २७ कवीनांत्वंकविरेवगिरांगीष्पतिवद्भुवि एतत्कार्यंचकर्तव्यं
त्वयादानपतेत्वरम् २८ अक्रूरउवाच त्वयाकृतोयदुपतेमनोरथमहार्णवः दैवेच्छयाऽयंभवतिगोष्प
दतद्विनार्णवम् २९ कंसउवाच विसृज्यदैवंकुरुतेबलिष्ठोदैवंसमाश्रित्यहिनिर्बलश्च कालात्मनोर्नित्य-
मयोःप्रभावान्निराकुलस्तिष्ठतुकर्मयोगी ३० नारदउवाच एवमुक्त्वामंत्रिवरंसमुत्थायसभातलात् किं
चित्प्रकुपितःकंसःशनैरंतःपुरंययौ ३१ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखण्डेनारदबहुलाश्वसं
वादेकंसमंत्रंनामप्रथमोऽध्यायः १ श्रीनारदउवाच अथकेशीमहादैत्योहयरूपीमदोत्कटः राज
न्वृन्दावनंरम्यंजगर्जघनवद्बली १ यस्यपादप्रत्ताडेननिपेतुःशाखिनोद्दढाः पुच्छघातेनगगनेखंडंखंडंययु

सतूर्णंस्वरथादुत्तोधोत्तयोर्नतोभक्तियुतःपपात १२ तदाननंबाष्पकलाकुलेक्षणंरोमांचितंवीक्ष्यहरिःपरेश्वरः
दोर्भ्यांसमुत्थायघृणातुरोश्रुमुमोचभक्तंपरिरभ्यमाधवः १३ एवंमिलित्वासबलश्चतंहरिःसद्यःसमानीयत्न
रासनंददौ निवेद्यगांचातिथयेसुभोजनंरसावृतंप्रेमयुतोत्युपाहरत् १४ तमाहनन्दःपरिरभ्यदोर्भ्यांमहोक-
थंजीवसिकंसराज्ये गतत्रपोयोनिजघानबालान्स्वसुःकथंसोन्यजनेषुमोही १५ गृहंगतेनन्दवरेहरिस्तंपप्र
च्छसर्वंकुशलंस्वपित्रोः तथायदूनांकिलबान्धवानांकंसस्यसर्वांविपरीतबुद्धिम् १६ अक्रूरउवाच पर-
श्वोहनिहेदेवहंतुंशौरिंसमुद्यतः खड्गपाणिर्भोजराजोनारदेननिवारितः १७ दुःखिताबान्धवाःसर्वेयादवाभ
यविह्वलाः सकुटुंबाःकंसभयाद्गमन्देशांतरंगताः १८ अद्यैवयादवान्हंतुंदेवान्जेतुंसमुद्यतः अन्यत्किम
पिकोकर्तुमिच्छतेदैत्यराड्बली १९ तस्माद्भवभ्यांगंतव्यंकुशलंकर्तुमव्ययम् भवंतौहिविनाकार्यंकिंचिन्न
स्यात्सतांप्रभू २० नारदउवाच अथतस्यवचःश्रुत्वासबलोभगवान्हरिः नन्दराजमतेनाहगोपान्का
र्यकरानिदम् २१ श्रीभगवानुवाच नन्दराजोपिसबलोवृद्धैर्गोपगणैरहम् नन्दानवोपनन्दाश्चतथाषड्वृ-
षभानवः २२ मथुरांतुगमिष्यंतिसर्वेप्रातःसमुत्थिताः सर्वंतुगोरसंतस्माद्दधिदुग्धघृतादिकम् २३ गृही
त्वैकत्रकर्तव्यंसोपायनमतःपरम् रथांश्वशकटैःसार्द्धंसमर्थान्कुरुताशुवै २४ नारदउवाच इतिश्रुत्वा-
कार्यकरागोपाःसर्वेगृहेगृहे शृएवंतीनांगोपिकानामूचुःसर्वंयथोदितम् २५ तच्छ्रुत्वोद्विग्नहृदयागोप्यावि
रहविह्वलाः परस्परंवाक्यमूचुःसर्वास्ताहिगृहेगृहे २६ प्रस्थानस्यचवार्तेयंश्रीकृष्णस्यमहात्मनः वृषभा-
नुवरस्यापिगृहेप्राप्तानृपेश्वर २७ गमिष्यतोभर्तुरतीवदुःखिताश्रुत्वाथवार्तांसदसित्यकस्मात् संप्रापमूर्च्छां

89

भवदुर्मते २२ हयाकृतिस्तेसंभूयाद्भूमौमन्वंतरद्वयम् तच्छापादद्यमुक्तोहंसद्यस्त्वत्स्पर्शनात्प्रभो २२ किंक रंकुरुमादेशत्वदंघ्रौलग्नमानसम् नमस्तुभ्यंभगवतेसर्वलोकैकसाक्षिणे २३ श्रीनारदउवाच प्रदक्षिणीकृत्यहरिंपरेश्वरंविमानमारुह्यमहोज्ज्वलंपरम् वैकुण्ठलोकंकुमुदोययौत्वरंविराजयन्मैथिलमंडलंदिशाम् २५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखण्डेनारदबहुलाश्वसंवादेकेशिवधोनामद्वितीयोऽध्यायः २ ७ श्रीनारदउवाच अक्रूरोरथमारुह्यकर्तुंकार्यंनृपस्यवै प्रहर्षितोमैथिलेन्द्रप्रययौनन्दगोकुलम् १ परांभक्तिंसुपगतःश्रीकृष्णेपुरुषोत्तमे एवंविचारयन्बुद्ध्यापथिगच्छन्महामतिः २ अक्रूरउवाच किंमारतेवा सुकृतंकृतंमयानिष्कारणंदानमलंकृतंनूनमम् तीर्थाटनंवाद्विजसेवनंशुभंयेनाद्यद्रक्ष्यामिहरिंपरेश्वरम् ३ तपःसुतप्तंकिमलंपुराकृतंसत्सेवनंभक्तियुतंमयाकृतम् येनैवमेदर्शनमद्यदुर्लभंश्रीकृष्णदेवस्यपुरोभविष्यति ४ तेषांभवोवैसफलंमहीतलेयन्नेत्रगामीभगवान्स्वरेश्वरः कृत्वाथतद्दर्शनमद्यदुर्लभंसद्यःकृतार्थोभवितास्मिसर्वतः ५ नारदउवाच इत्थंसंचिन्तयन्कृष्णंपश्यञ्छकुनमुत्तमम् संध्यायांगोकुलंप्राप्तोरथस्थोगांदिनीसुतः ६ कृष्णपादाब्जचिन्हानियवांकुशयुतानिच तद्रागयुक्परागानिरजांसिसददर्शको ७ तद्दर्शनोत्सुक्यप्रभक्तिभावानन्दसमाकुलः रथात्समुत्पत्यतेषुलुठंश्चाश्रुमुमोचसः ८ येषांश्रीकृष्णदेवस्य भक्तिःस्यान्हृदिमैथिल तेषामाब्रह्मणःसर्वंतृणवज्जगतःसुखम् ९ रथारूढस्ततोऽक्रूरःक्षणान्नन्दपुरंगतः घोषेषुसबलंकृष्णमागच्छंतंददर्शह १० देवौपुराणौपुरुषौपरेशौपद्मेक्षणौश्यामलगौरवर्णौ यथेंद्रनीलध्वजवज्रशैलौसमाश्रितौतौपथिरामकृष्णौ ११ बालार्कमौलीवसनंतडिद्द्युद्दर्पाशरन्मेघरुचंदधानौ दृष्ट्वा

तिंप्राहवियोगविह्वला दावाग्निनादावलतेवमूर्छितास्फकंपरोमांचितभावसंवृता १० राधोवाच भुवोभरं हर्तुमलंपुरींव्रजत्कुतंपरमेशपथंश्रृणुत्वतः गतेत्वयिप्राणपतेचविग्रहंकदाचिदत्रैवनधारयाम्यहम् ११ यदाश्रमेत्वंशपथंनमन्यसेद्वितीयवारंवदयामिवाक्पथम् प्राणोधरेगंतुमतीवविह्वलःकर्पूरधूलेःकणवद्भमिष्यति १२ श्रीभगवानुवाच वचनंवैस्वनिगमंदूरीकर्तुंक्षमोस्म्यहम् भक्तानांवचनंराधेदूरीकर्तुंनचक्षमः १३ श्रीदामशापात्पूर्वस्माद्गोलोकेकलहान्मम शतवर्षंतेवियोगोभविष्यतिनसंशयः १४ माशोचंकुरुकल्याणिवरंमेस्मरराधिके मासंमासंवियोगंतेदर्शनंमेभविष्यति १५ राधोवाच मासंप्रतिवियोगंमेदातुंस्वंदर्शनंहरे चेन्नागमिष्यसितदाऽसूंदुःखात्संत्यजाम्यहम् १६ लोकाभिरामजनभूषणविश्वदीपकंदर्पमोहनजगद्वृजिनार्तिहारिन् आनन्दकन्दयदुनन्दननन्दसूनोअद्यागमस्यसपथंकुरुमेपुरस्त्वम् १७ श्रीभगवानुवाच रंभोरुमासंप्रतितेवियोगंचेन्नागमिष्येसपथंगवांमे निःसंशयंनिःकपटंवचस्त्वमवेहिराधेकथितंमयासत् १८ योमित्रतांनिःकपटंकरोतिनिःकारणोधन्यतमःसएव विधायमैत्रींकपटंविदध्यात्तंलंपटंहेतुपटंनटंधिक् १९ कर्मेन्द्रियाणीहयथारसार्द्रीस्तथासकामामुनयःसुखंयत् मनाक्नजानंतिहिनैरपेक्ष्यंगूढंपरंनिर्गुणलक्षणंतत् २० जानंतिसंतःसमदर्शिनोयेदांतामहांतःकिलनैरपेक्षाः तेनैरपेक्ष्यंपरमंसुखंमेज्ञानेंद्रियादीनियथारसादीन् २१ सर्वेहिभावंमनसःपरस्परंनत्वेकतोभामिनिजायतेततः प्रेमैवकर्तव्यमतोमयिस्वतःप्रेम्णासमानंभुविनास्तिकिंचित् २२ यथाहिभांडीरवटेमनोरथोबभूवराधेहितथाभविष्यति अहैतुकंप्रेमचसद्भिराश्रितंतच्चापिसंतःकिलनिर्गुणंविदुः २३ येराधिकायांत्वयिकेशवेमयिभेदंनकुर्वंतिहिदुग्धशौक्ल्यवत् तएवमेब्रह्मपदंप्रयांतितदहैतुक-

वृषभानुनन्दिनीरंभेवभूमौपतितामरुन्धता २८ काश्चित्परिम्लानमुखश्रियोभवन्प्रकंकणीभूतकरांगुली-
यकाः सद्यःश्लथद्भूषणकेशबंधनाश्चित्रार्पितारंभइवावतस्थिरे २९ श्रीकृष्णगोविन्दहरेमुरारेकाश्चिद्वदन्त्यः
स्वगृहेऽतिविह्वलाः विसृज्यकर्माणिगृहस्यसर्वतोयोगीवचानन्दगतानृपेश्वर ३० काश्चित्समर्थास्तुपरस्परंवचः
समेत्यराजन्युगपत्सखीजनम् ऊचुःस्खलद्गद्गदकंठवाचःस्वतःस्रवद्बाष्पकलावहद्दृशः ३१ गोप्यऊचुः
अहोतिनिर्मोहिजनस्यचित्रंपुरंचरित्रंगदितुंनयोग्यम् मुखेनचान्यंत्हृदिभाव्यमन्यद्देवोनजानातिकुतोमनुष्यः ३२
रासेपियद्यद्गदितंतुतत्तद्विहायगंतुंसमवस्थितोयम् गतेपुरीप्राणपतावहोस्मिन्किंकिंनकष्टंवतनोभविष्यत्-
३३ इतिश्रीमद्गर्गाचार्यसंहितायांमथुराखण्डेनारदबहुलाश्वसंवादेऽक्रूरगमननामतृतीयोऽध्यायः ३ छ
श्रीनारदउवाच एवंवदंतीनांराजन्गोपीनांविरहंपरम् विज्ञायभगवान्देवःशीघ्रंतासांगृहान्ययौ १ यावंत्यो
योषितोराजंस्तावद्रूपधरोहरिः स्वयंसंबोधयामासवाग्भिःसर्वाःपृथक्पृथक् २ श्रीराधामन्दिरंगत्वाददर्श
राधांचमूर्च्छिताम् रहःस्थितांसखीसंघेननादन्मुरलीकलम् ३ श्रुत्वावंशीध्वनिंराधासहसोत्थायचातुरा ने-
त्रेउन्मील्यददर्शाश्रीगोविन्दंसमागतम् ४ पद्मिनीवगतानन्दपद्मिनीपद्मिनीपतिम् वीक्ष्योत्थायागतायस्मैसा
दरेणासनन्ददौ ५ अश्रुपूर्णमुखींदीनांराधांकमललोचनाम् शोचंतींभगवानाहमेघगंभीरयागिरा ६ श्री-
भगवानुवाच विमनास्त्वंकथंभद्रेमाशोचंकुरुराधिके अथवागंतुकामंमांश्रुत्वासिविरहातुरा ७ भुवोभा
रावताराय कंसादीनांवधायच ब्रह्मणाप्रार्थितःसाक्षाज्जातोहंवैत्वयासह ८ मथुरांहिगमिष्यामिहरिष्यामि
भुवोभरम् शीघ्रमत्रागमिष्यामिकरिष्यामिशंतव ९ नारदउवाच इत्युक्तवंतंजगदीश्वरंहरिंराधाप-

गान्दिनीसुतः ३ विस्मितस्तौरथेपश्यत्पुनर्वारिस्थितोनृप ददर्शतत्रसर्पेन्द्रंकुंडलीभूतमास्थितम् ४ तस्योत्सं
गेमहालोकंगोलोकंलोकवन्दितम् गोवर्द्धनाद्रियमुनावृन्दारण्यमनोहरम् ५ असंख्यकोटिमार्तंडज्योतिषांमंड
लंप्रभुम् परिपूर्णतमंसाक्षाच्छ्रीकृष्णंपुरुषोत्तमम् ६ कोटिमन्मथलावण्यंरासमण्डलमध्यगम् राधयासहितं
देवंतत्राक्रूरोददर्शह ७ ज्ञात्वाकृष्णंपरंब्रह्मनत्वानत्वापुनःपुनः कृतांजलिपुटोक्रूरस्तुतिंचक्रेतिधर्षितः ८ अ
क्रूरउवाच नमःश्रीकृष्णचन्द्रायपरिपूर्णतमायच असंख्यांडाधिपतयेगोलोकपतयेनमः ९ श्रीराधापतये
तुभ्यंव्रजाधीशायतेनमः नमःश्रीनन्दपुत्राययशोदानन्दनायच १० देवकीसुतगोविन्दवासुदेवजगत्पते यदूत्तम
जगन्नाथपाहिमांपुरुषोत्तम ११ वाणीसदातेगुणवर्णनेस्यात्कर्णौकथायांममदोश्चकर्मणि मनःसदात्वच्चरणा
रविन्दयोर्दृशौस्फुरद्धामविशेषदर्शने १२ नारदउवाच एवंसंस्तुवतस्तस्यपश्यतोविस्मितस्यच तत्रैवांतर्दधे-
कृष्णःसलोकोभगवान्प्रभुः १३ नत्वातंचतदाक्रूरःकृत्वानैमित्तिकंविधिम् ज्ञात्वाकृष्णम्परंब्रह्मविस्मितोरथमा-
ययौ १४ दिनात्ययेरामकृष्णावनयद्गान्दिनीसुतः रथेनवायुवेगेनास्निग्धगंभीरनादिना १५ पुरस्योपवनेतत्र-
वीक्ष्यनन्दंयदूत्तमः अक्रूरंप्राहविहसन्मेघगंभीरयागिरा १६ श्रीभगवानुवाच मथुरायांहिगंतव्यंभवता
स्वरथेनवै गोपालैःसहितःपश्चादागमिष्यामिमानद १७ अक्रूरउवाच देवदेवजगन्नाथगोविन्दपुरुषोत्तम-
सहाग्रजःसगोपालोगच्छमेमन्दिरंप्रभो १८ पादारविंदरजसापवित्रीकुरुमद्गृहम् त्वांविनानगमिष्यामिमन्दि
रंस्वंजगत्पते १९ श्रीभगवानुवाच गृहंतवागमिष्यामिहत्वावैयादवाहितम् सबलोबान्धवैःसार्द्धंकरिष्या
मितवप्रियम् २० नारदउवाच अथतत्रस्थितेकृष्णेसोक्रूरोमथुरांगतः निवेद्यचेदंकंसायततःस्वभवनंययौ

स्फूर्जितभक्तिलक्षणाः २४ येराधिकायांत्वयिकेशवेमयिपश्यंतिभेदंकुधियोनराभुवि तेकालसूत्रंप्रपतंतिदुःखितारंभोरुयावत्किलचन्द्रभास्करौ २५ नारदउवाच एवमाश्वास्यतांराधांसर्वगोपीगणंतथा आययौनंदभवनंभगवान्नयकोविदः २६ अथसूर्योदयेजातेनन्दाद्याःशकटैर्बलिम् नीतारथान्समारुह्यसर्वेश्रीमथुरांययुः २७ आरुह्यरामकृष्णाभ्यांस्वंरथंगांदिनीसुतः प्रयाणमकरोद्राजन्मथुरांद्रष्टुमुद्यतः २८ कोटिशःकोटिशोगोप्योमार्गेमार्गेसमास्थिताः पश्यंत्यस्तन्निर्गमनंक्रोधाद्यामोहविह्वलाः २९ क्रूरक्रूरेतिचाक्रूरंवदंत्यःपरुषंवचः रुरुधुःसर्वतोयानंयथार्कंसरथंघनाः ३० अक्रूरस्यरथंराजन्निजघ्नुर्यष्टिभिर्भृशम् अश्वांस्तथासारथिंचभगवद्विरहातुराः ३१ अश्वास्तत्रसमुत्पेतुस्ताडितास्तइतस्ततः गोपीहस्तुलिघातेनसारथिःपतितोरथात् ३२ विहायलज्जांलोकस्यसमाकृष्यरथाद्बलात् कंकणैस्तेडुरक्रूरंपश्यतोःकृष्णरामयोः ३३ गोपीयूथबलंदृष्ट्वासबलोभगवान्हरिः गोपीःसंबोधयामासरक्षित्वागांदिनीसुतम् ३४ संध्यायामागमिष्यामिमाशोचंकुरुतांगनाः पश्यतश्चास्यमन्दहास्यंमाकुर्यास्तद्व्रजौकसः ३५ इत्येवमुक्त्वासरथःसमागतोक्रूरेणकृष्णोबलदेवसंयुतः तुरंगमैर्वेगमयैर्मनोहरैर्ययौपुरीयावदवृन्दमंडिताम् ३६ यावद्रथःकेतुरुताश्वरेणुरालक्ष्यतेतावदतीवमोहात् स्थितात्वभूवन्पथिचित्रवत्ताःस्मृत्वाहरेर्वाक्यमुतागताशाः ३७ इतिश्रीमद्गर्गाचार्यसंहितायांमथुराखंडेनारदबहुलाश्वसंवादेश्रीमथुरार्थप्रयाणनामचतुर्थोऽध्यायः ४ श्रीनारदउवाच हरिरक्रूररामाभ्यांमथुरोपवनंगतः यमुनानिकटंस्थित्वावारिपीत्वारथंययौ १ अक्रूरस्तावनुज्ञाप्यस्नातुंश्रीयमुनांगतः नित्यनैमित्तिकंकर्त्तुंविवेशाविमलेजले २ जलेचागाधगंभीरेमहावर्तसमाकुले ददर्शरामकृष्णौतौवदतो-

महादुष्टः आहेदंपथिमाधवम् ३७ रजकउवाच ईदृशान्येववस्त्राणिपितृभिर्वःपितामहैः धारितानिकिमु
हृत्तास्तानकौपीनधारकाः ३८ यांताशुवन्यानगरात्सर्वेवैजीवितेच्छया कारागारेकारयामियुष्मान्वस्त्रा
हरानहम् ३९ नारदउवाच एवंप्रवदतस्तस्यरजकस्ययदूत्तमः जहारमस्तकंसद्यःकराग्रेणैवलीलया
४० तज्ज्योतिःश्रीघनश्यामेलीनंजातंविदेहराट् सद्यस्तदनुगाःसर्वेवासःकोशान्विसृज्यवै ४१ दुद्रु
वुःसर्वतोराजन्शरत्कालेयथाघनाः गृहीत्वात्मप्रियेवस्त्रेस्थितयोरामकृष्णयोः जगृहुर्गोपबालास्तेरा
जमार्गजनाअपि ४२ तन्वारणाविदोबालावासांसिरुचिराणिच व्यस्तंव्यस्तंपरिदधुःश्रीकृष्णस्यप्रप
श्यतः ४३ वीक्ष्यतौबालकःकश्चिच्छ्रीकृष्णबलदेवयोः विचित्रवर्णैर्वासोभिर्दिव्यंवेषंचकारह ४४
तथान्येषांशिशूनांचयथायोग्यंविधायसः राजन्परमयाभक्त्यापुनःकृष्णंददर्शह ४५ प्रसन्नोभगवांस्त
स्मैप्रादात्सारूप्यमात्मनः बलंश्रियंतथैश्वर्य्यंबलदेवोददौपुनः ४६ इतिश्रीमद्गर्गाचार्य्यसंहिता-
यांश्रीमथुराखंडेश्रीनारदबहुलाश्वसंवादेश्रीमथुरायांश्रीकृष्णप्रवेशोनामपंचमोऽध्यायः ५ नारदउवाच
अथगोपालकैःसार्द्धंश्रीकृष्णोनन्दनन्दनः गृहंजगामसबलःसुदाम्नोदाममालिनः १ दृष्ट्वातौसस-
मुत्थायनमस्कृत्यकृतांजलिः पुष्पसिंहासनेस्थाप्यप्राहगद्गदयागिरा २ सुदामोवाच धन्यंकु-
लंमेभवनंचजन्मत्वय्यागतेदेवकुलानिसप्त मातुःपितुःसूसतथाप्रियायावैकुंठलोकंगतवंतिमन्ये ३ भू
भारमाहर्तुमलंयदोःकुलेजातौयुवांपूर्णतमौपरेश्वरौ नमोयुवाभ्यांममदीनदीनंगृहंगताभ्यांजगदीश्वरौ
परौ ४ नारदउवाच इत्युक्त्वापुष्परचनालंकारंमधुपध्वनीन् निवेद्यमकरंदांश्चमालाकारोननामह ५

२१ अथापराण्हेसबलंगोविन्दंबालकैःपुरीम् द्रष्टुमभ्युदितंवीक्ष्यनदोवाक्यमथाब्रवीत् २२ आर्जवेनपु
रींवीक्ष्यागंतव्यंभवताकिल नगोकुलंविद्धिचैनांकंसराज्यंमहाभयं २३ तथास्त्वित्युक्त्वाभगवान्वृन्दैर्नन्दप्र-
णोदितैः गोपालैर्बालकैःसार्द्धंसबलोगतवान्पुरीम् २४ प्रासादैर्गगनस्पर्शैर्हैमरत्नरवविड्डुहैः शोभितां
दुर्गसंयुक्तांदेवधानीमिवस्थिताम् २५ कालिन्दीरत्नसोपानैश्चलदूर्मिकुतूहलैः अलकामिवशोभाढ्यां-
दिव्यनारीनरैर्युताम् २६ प्रेक्षन्श्रीमथुरांकृष्णोधनिनांमन्दिराणिच पश्यनगोपालकैःसार्द्धंराजमार्गंवि-
वेशह २७ श्रुत्वागतंतंवसुदेवनंदनंबहुश्रुतावैमथुरापुरीगताः त्यक्त्वाथकर्माणिविसृज्यताःशिशून्द्रष्टुं
व्यधावन्नुदधिंयथापगाः २८ काश्चित्तुहर्म्यात्किलजालदेशात्कुड्यात्तुकाश्चित्स्फटतागवाक्षात् विनि
र्गताद्द्वारकपाटदेशात्तत्त्वरात्तंददृशुःपुरध्र्यः २९ एकंहलत्कुतलमाननस्वंकिमग्रगानांतुमनांसिहर्तुम् -
पश्चात्कृतंमौलितलेदधानंकिंपृष्ठगानांहरणंद्वितीयम् ३० पीतांबरार्द्धंवलिनंस्फुरत्कटावन्द्वंतदंसेजलदय
थातडित् पद्मंकरेस्वात्हृदिवैजयंतींस्रजंदधानंवसुदेवनन्दनम् ३१ विलोक्यसर्वामुमुहुःपुरस्त्रियोविलो
लपाठीननवीनकुंडलम् बालार्कहेमांगदबाहुमंडलंराजन्यसंरक्षांडपतिंपरात्परम् ३२ पुरन्ध्र्यऊचुः
अहोवृन्दावनंरम्यंयत्रसन्निहितोह्ययम् धन्यागोपगणाःसर्वेपश्यंत्येनंमनोहरम् ३३ धन्यागोपरम-
ण्यस्तायाभिःकिंसुकृतंकृतम् पिबंतियारासरंगेमुहुश्चास्याधरामृतम् ३४ नारदउवाच राजमा
र्गेरंगकारंरजकंयांतमुन्मुदम् गोपालाद्युमतेनैवप्राहतंमधुसूदनः ३५ देहिनोमित्रवासांसिरुचिराणिम
हामते दातुस्तेहिपरंश्रेयोभविष्यतिनसंशयः ३६ प्रज्वलन्कृष्णवाक्येनघृतेनाग्निर्यथाभृशम् कंसभृत्यो

तरीयांतंसमाकर्ष्यगिरार्द्रया राजमार्गेव्रजन्कृष्णोवैश्यानाढ्यान्ददर्शह २१ पुष्पतांबूलगन्धाद्यैःफलैर्दु
ग्धफलैर्हरिम् सम्पूज्यस्वासनेस्थाप्यनेमुरप्यधियोविशः २२ वैश्याऊचुः भवेन्नेदन्नतेराज्यंतावकान्स्म
रतात्सदा वयंतवप्रजादेवराज्येप्राप्तेनकःस्मरेत् २३ नारदउवाच पप्रच्छसुस्मितोवैश्यान्कोदंडस्थान
मच्युतः नतेतमूचुःसुधियःकोदंडभंगशंकया २४ तद्रूपगुणमाधुर्य्यमोहितायेचमाथुराः कौमारपश्चे
हिधनुरित्यूचुस्तद्दिदृक्षवः २५ तैर्दिष्टेनयथाकृष्णःप्रविष्टोधनुषःस्थलम् मैत्रींकुर्वन्वयस्यैश्चमाथुरैःपुरबा
लकैः २६ यथैंद्रंहेमचित्राढ्यंकोदंडंसप्ततालकम् पुरुषैःपंचसाहस्रैर्नेतुंयोग्यंबृहद्गुरम् २७ अष्टधातुम
यंक्लिष्टंलक्षभारसमंपरम् चतुर्दश्यांपौरजनैरर्चितंयज्ञमण्डले २८ भार्गवेणपुरादत्तंयदुराजायमाधवः द
दर्शकुण्डलीभूतंसाक्षाच्छेषमिवस्थितम् २९ वार्य्यमाणोनृभिःकृष्णःप्रसह्यधनुराददे पश्यतांतत्रपौराणां
सज्यंकृत्वाथलीलया ३० आकृष्यकर्णपर्यंतंदोर्दण्डाभ्यांहरिर्धनुः बभंजमध्यतोराजन्निक्षुदंडंगजोय
था ३१ भज्यमानस्यधनुषष्टंकारोभूत्तडित्स्वनः ननादतेनब्रह्मांडंसप्तलोकैर्बिलैःसह ३२ विचेलुर्दिग्ग
जास्ताराराजद्भूखण्डमंडलम् तदैवबाधिरीभूतापृथिव्यांजनमंडली ३३ कंसस्यहृदयंशब्दोविददारघटीद्व
यम् तद्रक्षिणःप्रकुपिताउत्थिताश्चाततायिनः ३४ गृहीतुकामाःश्रीकृष्णंप्रत्यूचुर्बध्यतामिति अथता
नागतान्वीक्ष्यसशस्त्रान्बलकेशवौ ३५ कोदंडशकलेनीत्वाजघ्नतुर्दुर्मदान्भृशम् शकलातिप्रहारेणकेचि
द्वीरास्तुमूर्छिताः ३६ भिन्नपादाभिन्ननखाःकेचिच्छिन्नांसबाहवः वीराःपंचसहस्राणिनिपेतुर्भूमिमंडले
३७ विचेलुर्माथुराःसर्वेदुद्रुवुस्तद्दिदृक्षवः पुर्य्यांकोलाहलेजातेनृणांजातंमहद्भयम् ३८ भोजराजसभा-

धृत्वातत्पुष्पनिचयंसबलोभगवान्हरिः दत्वागोपेभ्यआरात्तंप्राहप्रहसिताननः ६ गरीयसीमत्पदाब्जेभ
क्तिर्भूयात्सदातव मद्भक्तानांतुसंगःस्यान्मत्स्वरूपमिहैवहि ७ बलदेवोददौतस्मैश्रियंचान्वयवर्द्धिनीम्-
उत्थायतौततोराजन्अन्यांवीथींप्रजग्मतुः ८ यांतींस्त्रियंपद्मनेत्रांपाटीरालेपभाजनम् बिभ्रतींयुवतीं
कुब्जांपथिपप्रच्छमाधवः ९ श्रीभगवानुवाच कात्वंकस्यप्रियासुभ्रुकस्यार्थेचन्दनंत्विदम् देह्यावयो
र्येनतवचिरंश्रेयोभविष्यति १० सैरन्ध्र्युवाच दास्यस्मिकन्दर्पवरकुब्जानाममहामते मद्धस्तोत्थ्यैलिपा-
टीरंजातंभोजपतेःप्रियम् ११ अद्यापिकंसदास्यस्मिसांप्रतंत्वद्वचाग्रतः हस्तिशुण्डादण्डसमेभुजदण्डेस्ति
मेमनः १२ युवांविनाकोन्यतमोऽनुलेपंकर्तुमर्हति युवयोस्तुसमंरूपंत्रैलोक्येनहिविद्यते १३ नारदउवा-
च उभाभ्यांसाददौसान्द्रंहर्षितात्यनुलेपनम् अथतावंगरागेणरामकृष्णौविरेजतुः १४ जगृहुश्चन्दनं-
दिव्यंकिंचित्किंचिद्व्रजार्भकाः त्रिवक्रामथतांकृष्णोऋज्वींकर्तुंमनोदधे १५ आक्रम्यपद्भ्यांप्रपदेंगुलिद्वयंप्रो
त्तानहस्तेनविभुःपरेश्वरः प्रगृह्यनृणांचिबुकेप्रपश्यतांवक्रांतनुंतामुदनीनमद्धरिः १६ नदेवमायापिसमा
नविग्रहारचितरंभांक्षिपतीवरूपिणी भूत्वागृहीत्वाहहरिंतुनवाससिशुभ्रचिस्मिताजातमनोजविह्वला १७
सैरन्ध्र्युवाच गच्छाशुहेसुन्दरवर्यमद्गृहंत्यक्तुंभवंतंकिलनोत्सहेहम् प्रसीदसर्वज्ञरसज्ञमानदत्वयाभृशं
प्रोन्माथितंमनोमम १८ नारदउवाच नदैवगोपाजहसुःपरस्परमहोकिमेतत्करतालनिःस्वनैः प्रहस्य
रामस्यहरिःप्रपश्यतस्तयाच्यमानोत्थवदत्परंवचः १९ श्रीभगवानुवाच अहोनिधन्यामथुरापुरीयंव-
संतियस्यैवजनास्तुसौम्याः येज्ञातपंथान्स्वगृहंनयंतिद्रष्टापुरींधामतवागमिष्ये २० नारदउवाच एवमुक्तो

करन्दार्चितेशुभे शक्रसिंहासनंतत्रसोपबर्हणमंडलम् ७ आतपत्रेणदिव्येनचन्द्रमंडलचारुणा हंसाभै
र्व्यजनैर्युक्तैश्चामरैर्वज्रमुष्टिभिः ८ दशहस्तोच्छ्रितंशश्वद्विश्वकर्माविनिर्मितम् तदारुह्यबभौकंसोऽद्रि
शृंगंमृगराडिव ९ गायकाःप्रजगुस्तत्रननृतुर्वारयोषितः नेदुर्मृदंगपटहतालभेर्य्यानकादयः १० राजा
नोमंडलेशाश्चपौराजानपदान्नृप ददृशुर्मल्लयुद्धंतेमंचेमंचेसमास्थिताः ११ चाणूरोमुष्टिकःकूटःशलस्तो
शलएवच व्यायाममुद्गरैर्युक्तायुयुधुस्तेपरस्परम् १२ नन्दराजादयोगोपाःकंसाहूतानतानना: दत्वा-
बलिंपरंतस्माएकस्मिन्मंचमाश्रिताः १३ बाणासुरजरासंधनरकाणांपुरांनृप अन्येषांशंबरादीनांस
काशाद्भूभुजांतथा १४ बलयश्चाययूराजन्यदुराजायतत्रवै अथतौरामकृष्णौद्वौमायाबालकविग्र-
हौ १५ मल्ललीलादर्शनार्थंययतूरंगमंडलम् गोमूत्रचयसिन्दूरकस्तूरीपत्रभृन्मुखम् १६ स्रवन्मदंम-
हामत्तंरत्नकुंडलमण्डितम् १७ गजंकुवलयापीडंरंगद्वारमुपस्थितम् वीक्ष्यकृष्णोमहामात्यंप्राहगंभीर-
यागिरा १८ आकर्षयागनागेन्द्रंमार्गंकुरुममेच्छया नचेत्त्वांपातयिष्यामिसनागंभूमिमंडले १९ महा
मात्यस्तदाक्रुद्धोनोदयामासतंगजम् चीत्कारमुत्करंदिक्षुकुर्वन्तंनन्दसूनवे २० गृहीत्वातंहरिंसद्यःशुंडाद
डेननागराट् उज्जहारततस्तस्मान्निर्गतोभारभृद्धरिः २१ तत्पादेषुविलीनोभूत्प्रभ्रमन्संल्लिनिस्ततः वृन्दाव
ननिकुंजेषुवृक्षेषुचयथाहरिः २२ करेजग्राहतन्नागःशुंडादंडेनचांघ्रिषु निष्पीड्यशुंडांहस्ताभ्यांहरिःपश्चा
द्विनिर्गतः २३ तिर्यक्भूतश्चतंनागोगृहीतुमुपचक्रमे मुष्टिनातंघातयित्वापुरोदुद्रावमाधवः २४ तम-
न्वधावन्नागेन्द्रोमथुरांसर्वदिहराट् कोलाहलेतदाजातेहरिस्तस्मादितोययौ २५ पुच्छेगृहीत्वातन्नागंवलदे

छत्रमकस्मान्निपपातह गोपालैः सबलः कृष्णोधावन्वापस्थलान्नृप आययौनन्दनिकटंसंध्याकालेऽति भीतिवत् ३९ निरीक्ष्यगोविन्दसुरूपमद्भुतंविमोहितावैमथुरापुरांगनाः विस्रस्तवासःकबराःस्मराधयः परस्परंप्राहुरिदंसखीजनम् ४० पुरध्र्यऊचुः कंदर्पकोटिद्युतिमाहरन्त्वरंस्वैरंचरन्वैमथुरापुरेहरिः निरी क्ष्यतेकाभिरतीवसाक्षादगेषुसर्वेष्वपिनःसमादिशात् ४१ कुशलाऊचुः क्रूरास्त्रियःकिंनहिसंतिपत्तने- निरीक्ष्यतेयाभिरनंगमोहनः अंगेषुसर्वेष्वपिसर्वसुन्दरोनास्माभिरानन्दमयोनिरीक्ष्यते ४२ कस्यैक देशेमधुरत्वमीक्ष्यतेतत्रास्तिनेत्रंप्रपतन्पतंगवत् यस्त्वेवसर्वांगमनोहरःसखिसएवनेत्रेणकथंसमीक्ष्य ते ४३ अंगेत्वंगेसुन्दरेनन्दसूनोःप्रासप्रासंयत्रयत्रापिनेत्रम् तस्मात्तस्मान्नामवल्लुब्धसौख्यंलावण्या ब्धौमग्नवल्लग्नचिन्तम् ४४ दृष्ट्वादिनेयंव्रजराजनन्दनंस्वप्नेपितद्दृष्टदृशःपुरस्त्रियः गोप्यःकथंतंमधुरंन सस्मरुर्याभिःकृतंमैथिलरासमण्डलम् ४५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखंडेनारदब- हुलाश्वसंवादेमथुरादर्शनंनामषष्ठोऽध्यायः ६ नारदउवाच रजकस्यशिरश्छेदंकंसोवैरक्षिणां वधम् धनुर्भंगंततःश्रुत्वापरंत्रासमुपागमत् १ तत्क्षणाद्दुर्निमित्तानिवामांगस्फुरणानिच प्रपश्य न्नगभंगानिननिद्रांप्राप्यदैत्यराट् २ स्वप्नेप्रेतैःसमायुक्तस्तैलाभ्यक्तोदिगंबरः जपास्त्रङ्महिषारूढो दक्षिणाशांजगामसः ३ प्रातःकालेसमुत्थायकार्य्यभारकराञ्जनात् आहूयकारयामासमल्लक्री डामहोत्सवम् ४ विशालाजिरसंयुक्तेहेमस्तंभसमन्विते सभामंडपदेशाग्र्येरंगभूमिर्बभूवह ५- वितानैर्हेमसंकाशैर्मुक्तादामविलंबिभिः सोपानैर्हेममंचैश्चरंगभूमिर्बभौनृप ६ राजमंचेरत्नमयेम-

ष्णावुवाचह ४२ चाणूरउवाच हेरामहेकृष्णयुवांमहाबलौराज्ञःपुरोवैकुरुतंमृधंबलात् प्रहर्षितेराजनि
चेद्यदूत्तमेकिंकिंनभद्रंभवतीहवश्चनः ४३ श्रीभगवानुवाच पुरैवभद्रंनृपतेःप्रसादतोबालावयंतुल्यब-
लैश्चबालकैः भूयान्मृधोनोबलवान्यथोचितमधर्मयुद्धंकिलमाभवेदिह ४४ चाणूरउवाच भवान्नबालो
नवाकिशोरोबलश्चसाक्षाद्बलिनांबलीयान् सहस्रमत्तेभबलंदधानोद्विपोभवद्यानिहतःसलीलम् ४५
श्रीनारदउवाच एवंतस्यवचःश्रुत्वाभगवान्वृजिनार्दनः चाणूरेणापियुयुधेमुष्टिकेनबलोबली ४६ आ
कर्षणंनोदनंचभुजाभ्यांभुजदंडयोः चक्रतुःपश्यतान्नृणांगजाविवजिगीषया ४७ हस्ताभ्यांवपुरुत्थाय
चाणूरस्यहरिःस्वयम् अतोलयद्देहभारंपुण्यभारंयथाविधिः ४८ चाणूरस्तंहरिंदेवंकरेणैकेनलीलया उज्ज
हारमहावीरोभूखंडनागराडिव ४९ ग्रीवायांकिलचाणूरंभुजवेगेनमाधवः कृत्वांचोन्नृत्यसहसापातया
मासभूतले ५० हस्तैश्चजानुभिःपादैर्भुजोरोंगुलिमुष्टिभिः जघ्नतुःकृष्णचाणूरौतथैवबलमुष्टिकौ ५१-
श्रमवारिपतेद्दृष्ट्वाश्रीसुरवेरामकृष्णयोः सानुकंपास्तदाप्राहुर्गवाक्षस्थानृपस्त्रियः ५२ स्त्रियऊचुः -
अहोअधर्मःसुमहत्सभायांजातःपुरोराजनिवर्तमाने क्ववज्रतुल्यांगदृतौहिमल्लौक्वपुष्पतुल्यौबतरामकृष्णौ
५३ अहोअभाग्यंहिपुरौकसांनोयुद्धेतयोर्दर्शनमद्यजातम् अहोतिधन्यंबतभूरिभाग्यंवनौकसांरासरसेन-
जातम् ५४ अहोस्थितेराजनिदुष्टचित्तेनकोपिवक्तुंक्षमएवसरव्यः तस्माद्धिनःपुण्यबलेनचेन्नौत्वरंमृधेवैजय
तामरीन्स्वान् ५५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखंडेनारदबहुलाश्वसंवादेसप्तमोऽध्यायः ७
श्रीनारदउवाच आर्द्रचित्तंनंदराजवनितानांमनोरथम् स्मृत्वाशत्रून्हन्तुकामश्चक्रेयुद्धंबलाद्धरिः १ गृ-

वोमहाबलः चकर्षभुजदंडाभ्यांफणिनंगरुडोयथा २६ प्रहसन्भगवान्कृष्णोगृहीत्वातंकरेबलात् च
कर्षभुजदंडाभ्यांकूपरज्जुंयथानरः २७ द्वयोराकर्षणान्नागोविह्वलोभून्नृपेश्वर महामात्यास्तदासंरुरु
रुहुस्तंगजंबलात् २८ नीतागजास्तथाचान्यैःकृष्णंहंतुंशतत्रयम् अंकुशास्फालनात्क्रुद्धमत्तेभंपुनरागतम्
२९ श्रीकृष्णोभगवान्साक्षाद्बलदेवस्यपश्यतः ३० शुंडादंडेसंगृहीत्वाभ्रामयित्वाचितस्ततः पातया
मासभूपृष्ठेकमंडलुमिवार्भकः ३१ दूरेप्रपतितास्तस्यमहामात्याइतस्ततः सतांप्रपश्यतांनागःसद्योवैनिधनं
गतः ३२ तज्ज्योतिःश्रीघनश्यामेलीनंजातंविदेहराट् दंतावुत्पाट्यतस्यापिरामकृष्णौमहाबलौ निजघ्न
तुर्महामात्यान्मृगान्केसरिणौयथा ३३ द्विपेहतेपिथेचान्यमहामत्याइतस्ततः विदुद्रुवुर्यथामेघावर्षा
कालेगतेसति ३४ एवंहत्वाद्विपंगोपैःशेषैस्तैःप्रेक्षणोत्सुकैः जयारावैरामकृष्णोश्चववीरमदांकितौ ३५
परिश्रमारुणमुखौरंगंविविशतुस्वरम् दंतपाणीमहावेगौयथाशामनिलानलौ ३६ मल्लाश्चमल्लंचनरान्
रेंद्रंस्त्रियःस्मरंगोपगणाव्रजेशम् पितासुतंदण्डधरंत्वसंतोमृत्युंचकंसोत्वबुधाविराजम् ३७ हतंपरंयो
गिवराश्चभोगादेवंतदारंगगतंबलेन पृथक्पृथक्भावनयात्वपश्यन्सर्वेजनास्तंपरिपूर्णदेवम् ३८ हरिंद्वि
पंवीक्ष्यचतौमहाबलौकंसोमनस्वीभयमापचेतसि मंचस्थिताहर्षितमानसाश्चयोचंद्रचकोराइवतेसुरवंययुः
३९ कर्णैनकर्णंविनिधायनागरामहोत्सुकास्तेत्ववदन्परस्परम् एतौहिसाक्षात्परमेश्वरौपरौबभूवतुर्वैवसु
देवनन्दनौ ४० अहोतिरम्यंव्रजमण्डलंपरंयत्रैषसाक्षाद्विचचारमाधवः कृत्वाहियद्दर्शनमद्यदुर्लभंवयंकृता
र्थास्तुभवेमसर्वतः ४१ नारदउवाच वदत्सुपौरलोकेषुनदत्सूर्येषुमैथिल चाणूरस्तावुपव्रज्यरामकृ-

बध्नीतनन्दंसहसातिदुर्मतिम् १९ अथोग्रसेनस्यपितुःकुबुद्धेःशौरेशिरश्चाशुहिछिंधिछिंधि कोयन्नतत्रापित
थात्रवृष्णिजातान्क्रूरांशान्किलसूदयध्वम् २० नारदउवाच एवंविकत्थमानस्यकंसस्ययदुनंदनः सहसो
त्पत्यतंमंचमारुहत्क्रोधपूरितः २१ मृत्युंसमागतंवीक्ष्यमंचादुत्थायसत्वरम् मदोन्नतोभत्स्यरन्तंजगृहेखड्
चर्मणी २२ अग्रहीत्सहसाकंसंदोर्भ्यांचर्मासिसंयुतम् यथातुंडाविभागाभ्यांसविषंफणिनंविराट् २३ पं
नृत्खड्गश्चलच्चर्माभुजबंधाद्दलाहूली विनिर्ययौताक्ष्यंतुंडात्सुंडरीकोयथाफणी २४ मंचातौबलितौवेगान्मर्दयं
तौपरस्परम् शैलशृंगेयथासिंहौशुशुभातेयथातथम् २५ उत्पतंतंबलात्कंसंशतहस्तंमहाम्बरे अग्रहीच्चोत्पत
न्कृष्णःश्येनंश्येनोयथांबरे २६ गृहीत्वाभुजदंडाभ्यांप्रचंडंदैत्यपुंगवम् त्रैलोक्यबलधृक्देवोभ्रामयित्वाति
तस्ततः २७ आकाशात्पातयामासमंचोपरिरुषान्वितः भग्नदंडोभवन्मंचस्तडित्साद्ययथाद्रुमः २८ पतितो
पिसवज्रांगःकिंचिद्व्याकुलमानसः सहसोत्थाययुयुधेश्रीकृष्णेनमहात्मना २९ नीत्वातंभुजदंडाभ्यांमंचेक्षि
प्त्वापुनःप्रभुः आरुत्यहृदयंतस्यमौलिंजग्राहमाधवः ३० सद्यःप्रगृह्यकेशेषुरंगोपरिहरिःस्वयम् मंचात्तंपा
तयामासशैलाद्दंडशिलामिव ३१ तस्योपरिष्टाच्छ्रीकृष्णःसर्वाधारःसनातनः निपपातस्वयंवेगादनंतोनन्त-
विक्रमः ३२ इत्थंद्वयोर्निपातेननिम्नंभूरवंडमंडलम् स्थालीवसहसाराजञ्ज्वकम्पेघटिकाद्वयम् ३३ संपरेतंभो
जराजंभूमितंविचकर्षह यथामृगेन्द्रोनागेन्द्रंसर्वेषांपश्यतांनृप ३४ हाहाकारस्तदैवासीद्दावतांभूभुजांनृप -
वैरभावेनदेवेशंभजन्कंसोमहाबलः ३५ जगामतस्यसारूप्यंभृंगिणःकीटकोयथा कंसंप्रपतितंदृष्ट्वाभ्रातरोष्टौ
महाबलाः सुनामसृष्टिन्यग्रोधास्तुष्टिमन्राष्ट्रपालकाः ३६ सुहुनाकंकशंकुभ्यांक्रोधप्रस्फुरिताधराः खड्ग



96

हीत्वाभुजदंडाभ्यांचाणूरंगगनेबलात् चिक्षेपसहसाकृष्णोवातःपद्ममिवोद्धृतम् २ आकाशात्पतितः-
सोपितारकेवत्यधोमुखः उत्थायमुष्टिनाकृष्णंताडयामासवेगतः ३ तस्यमुष्टिप्रहारेणनचचालपरात्परः स
द्योगृहीत्वाचाणूरंपातयामासभूतले ४ भिन्नदंतस्तुचाणूरः क्रोधयुक्तोमदोत्कटः मुष्टिद्वयेनश्रीकृष्णंतताड
हृदिमैथिल ५ गृहीत्वाकरयोस्तंवैकराभ्यांभगवान्स्वयम् कंसस्याग्रेभ्रामयित्वासर्वेषांपश्यतांनृप ६
पातयामासभूपृष्ठेकमंडलुमिवार्भकः श्रीकृष्णस्यप्रहारेणचाणूरोभिन्नमस्तकः ७ उद्वमन्नरुधिरंराजन्
सद्योवैनिधनंगतः तथैवमुष्टिकंमल्लंमुष्टिभिर्युधिदुर्गमम् ८ नीत्वांध्रेभ्रामयित्वारवेबलदेवोमहाबलः पा
तयामासभूपृष्ठेफणिनंगरुडोयथा मुष्टिकोनिधनंप्रापप्रोद्वमन्रुधिरंमुखात् ९ कूटंसमागतंवीक्ष्यबलदे
वोमहाबलः मुष्टिनापातयामासवज्रेणेन्द्रोयथागिरिम् १० प्राप्तशलंनंदसूनुर्लत्तपतंतताडह तीक्ष्ण-
यातुण्डयाराजन्कद्रुजंगरुडोयथा ११ गृहीत्वातोशलंकृष्णोमध्यतःसंविदार्य्यच प्राक्षिपत्कंसमंचाग्रेवि
टपंसिन्धुरोयथा १२ एतेनिपातितारंगेसद्योवैनिधनंगताः तेषांज्योतींषिवैकुण्ठेविविशुःपश्यतांसताम् १३
एवंश्रीरामकृष्णाभ्यांमल्लेषुनिहतेषुच शेषाःप्रदुद्रुवुर्मल्लाभयार्ताजीवनेच्छया १४ श्रीदामादीन्वयस्यांश्च
गोपानाकृष्यमाधवः तैःसार्द्धंयुद्धमारेभेसर्वेषांपश्यतांसताम् १५ किरीटकुंडलधरौरामकृष्णौसहार्भकैः
विहरंतौवीक्ष्यरंगेविसिस्मिसुःपुरवासिनः १६ कंसंविनासर्वमुखाज्जयशब्दोविनिर्गतः साधुसाध्वितिवादो
भून्नेदुर्दुंदुभयस्ततः १७ स्वस्याऽजयंवीक्ष्यकंसोमहाक्रोधसमाकुलः वर्जयित्वातूर्यघोषंप्राहप्रस्फुरिताध
रः १८ कंसउवाच दुर्बुद्धियुक्तौवसुदेवनंदनौप्रसह्यनिःसारतयाशुभेपुरात् हरंतुसर्वंव्रजवासिनांधनं

थिल्यतांनृप तौवीक्ष्यगरुडंप्राप्तोनागपाशगुणायथा २ स्वप्रभावविदौवीक्ष्यपितरौसबलोहरिः सद्यस्तत्ता
नस्वांमायांजगन्मोहकरींबलात् ३ रामकृष्णौसुतौज्ञात्वाशौरिर्मोहसमाकुलः देवक्यासहचोत्थायसिषिजे
चाश्रुपूरितः ४ तावाश्वास्यहरिःसद्योवृष्टिभिःपरिवारितः मातामहंतूग्रसेनंचकारमथुराधिपम् ५ आहू
यंयादवान्कंसभयाद्देशांतरंगतान् प्रेम्णानिवासयामाससकुटुंबान्यदोःपुरि ६ नन्दराजंगोपगणैःस्वगृहा
न्गंतुमुद्यतम् नत्वातंसबलंप्राहमोहयन्निवमायया ७ अत्रैववासंकुरुतातपुर्य्यांगंतुंयदीच्छामनसो-
त्थितास्यात् पश्चादहंवैसबलोयदूनवाविधायपार्श्वेतवचागमिष्ये ८ नारदउवाच एवंश्रीरामकृष्णा
भ्यांनन्दराजःप्रपूजितः आलिंग्यशौरिंगोपालैर्ययौप्रेमातुरोव्रजम् ९ दत्त्वाश्रीकृष्णजन्मर्क्षेधेनूनानियुतंपुरा
ब्राह्मणेभ्योददौशौरिर्वस्त्रमालास्वलंकृतम् १० शौरिर्गर्गंसमाहूयश्रीकृष्णबलदेवयोः यज्ञोपवीतंविधि
वत्कारयामासधर्मवित् ११ रामकृष्णौसर्वविद्याध्ययनंकर्तुमुद्यतौ गुरोःसांदीपनेःपार्श्वंजग्मतुर्जनवत्सरौ
१२ कृत्वापरांगुरोःसेवांलघुकालेनमाधवौ सर्वविद्याजगृहतुःसर्वविद्याविदांवरौ १३ गुरवेदक्षिणांदातु-
मुद्यतौतौकृतांजली मृतपुत्रंदक्षिणायांताभ्यांववेगुरुर्द्विजः १४ रथमारुह्यतौदांतौशातकुंभपरिच्छद-
प्रभासेचाब्धिनिकटंजग्मतुर्भीमविक्रमौ १५ सद्यःप्रकंपितःसिन्धूरत्नोपायनमुत्तमम् नीत्वातच्चरणोपां
तेनिपपातकृतांजलिः १६ तमाहभगवान्शीघ्रंपुत्रंदेहिगुरोर्मम प्रचंडोर्मिघटाटोपैस्त्वयातद्ग्रहणंकृतम् १७
समुद्रउवाच भगवन्देवदेवेशनमयाबालकोहृतः धृतःपंचजनेनासौशंखरूपास्फुरेणवै १८ वसन्सदामदुद
रेबलिष्ठोदैत्यपुंगवः जेतुंयोग्यस्त्वयादेवदेवानांभयकारकः १९ नारदउवाच तेनोक्तोभगवान्कृष्णोवा





97

चर्मधरायोद्धुंकृष्णोपरिसमाययुः ३७ वीक्ष्यतान्मुद्गरंनीत्वारोहिणीनंदनोबलः आराज्ञकारहुंकारंयथासिं
होमृगानरति ३८ हुंकारेणैवशस्त्राणितेषांहस्तेभ्यआभयात् पेतुराम्रफलानीवदंडघातैश्चमैथिल ३९ नि
शस्त्रास्तेमहावीरामुष्टिभिःसर्वतोबलम् तेदुःशैलंयथानागःशुंडादंडैरितस्ततः ४० सृष्टिंतथासुनामानंमु
द्गरेणबलोहनत् न्यग्रोधंभुजवेगेनकंकंवामकरेणवै शंकस्फहतुष्टिमंतंवामपादेनमाधवः राष्ट्रपालंदक्षि
णेनपादेनाभिजघानह ४२ अष्टौनिपेतुःसहसावृक्षावातहताइव तेषांज्योतिर्भगवतिलीनंजातंविदेह
राट् ४३ देवदुंदुभयोनेदुर्जयध्वनिरभून्तदा सद्योवैववृषुर्देवाःपुष्पैर्नन्दनसंभवैः ४४ विद्याधर्यश्चग-
न्धर्व्योननृतुर्हर्षविह्वलाः विद्याधराश्चगन्धर्वाःकिन्नरास्तद्यशोजगुः ४५ ब्रह्माद्यामुनयःसिद्धाविमानैर्द्यु
मागताः तुष्टुवूरामकृष्णौतौवाग्भिःश्रुतिपरायणाः ४६ ताडयंत्यउरोहस्तैरस्तिप्रासादयास्त्रियः वि-
निर्गतास्तारुरुदुर्ज्ञातिवैधव्यदुःखिताः ४७ स्त्रियऊचुः हानाथहेमनृपतेक्वगतोसिमहाबलः त्रैलो
क्यविजयीसाक्षाद्देवानामपिदुर्जयः ४८ ज्ञातमात्राःस्वसुःपुत्रानिर्घृणेनत्वयाहताः अनिर्दिशानिर्दिशा
श्चाऽपरेपिनिहिताबलात् ४९ तेनपापेनघोरेणदशामेतादृशींगतः ५० नारदउवाच एवमश्रुमुखी
दीनान्आश्वास्यनृपयोषितः विधाययमुनातीरेचिताःक्षीरखण्डसंयुताः ५१ हतानांकारयित्वासौकि
यांवैपारलौकिकीम् सर्वान्संबोधयामासभगवान्लोकभावनः ५२ इतिश्रीमद्गर्गाचार्यसंहिता
यांमथुराखंडेनारदबहुलाश्वसंवादेकंसवधोनामाष्टमोऽध्यायः ८ श्रीनारदउवाच अथदेवौरा
मकृष्णौदेवकीवसुदेवयोः समीपंजग्मतुःसाक्षाद्वृष्णिभिःपरिवारितौ १ स्वतस्तयोर्बन्धनानियमुःशौ-

परिरभ्यमुदान्वितः उपचारैःषोडशभिः पूजयित्वाथनोनृप ३८ कृतांजलिःपुरःस्थित्वाजातपूर्णमनोरथः उ-
वाहानन्दजनितापराबाष्पकलांनृप ३९ अक्रूरउवाच युवाभ्यांरामकृष्णाभ्यांताभ्यांनित्यंनमोनमः याभ्यां
मार्गेयदुत्क्रमेपूर्णंतच्चकृतंप्रभुः ४० लोकाभिरामौजनभूषणोत्तमौचांतर्बहिःसर्वजगत्प्रदीपकौ गोविप्रसाधुश्रु
तिधर्मदेवतारक्षार्थमद्यैवयदोःकुलेगतौ ४१ कंसादिदैत्येन्द्रविनाशहेतवेगोलोकलोकात्परिपूर्णतेजसौ समाग-
मौभारतभूमिमंडलेयुवांपरेशौसततंनतास्म्यहम् ४२ श्रीभगवानुवाच त्वमार्य्यबन्धोधृतिमानहंतवपुरःशि
शुः संतोनःस्वात्मनःश्लाघ्यंकुर्वंतिहिमहामते ४३ पांडवानांहिकुशलंद्रष्टुंगच्छगजाह्वयम् शीघ्रमागच्छता
त्वंदृष्ट्वासर्वान्दानपतेभवान् ४४ नारदउवाच एवमुक्त्वातदाक्रूरंभगवान्भक्तवत्सलः सबलःशौरिभवनमा
ययौसर्वकार्यकृत् ४५ कौरवेन्द्रपुरंगत्वाक्रूरोदृष्ट्वाथपांडवान् पुनरागत्यकृष्णायवार्तांसर्वामवर्णयत् ४६-
अक्रूरउवाच विनायुवांकोपिनपांडवानांसहायकृत्कौरवदुःखकोमृतम् मृतंचपांडौभवतोःपदाब्जेविलग्नचित्ता
हिपृथात्मजाये ४७ नारदउवाच इतिश्रुत्वाक्रूरमुखात्श्रीकृष्णोभगवान्हरिः अर्द्धराज्यंपांडवेभ्योकौर-
वाणांबलाद्ददौ ४८ अथोक्तंवचनंश्रुत्वातदोद्धवसमन्वितः महामंगलसंयुक्तंकुब्जायाभवनंययौ ४९ दृ-
ष्ट्वारान्द्धीहरिंप्रासंकुब्जारूपवतीत्वरम् भक्त्यासमर्हयामासपाद्याद्यैःप्राणवल्लभम् ५० हेमरत्नखचितकुड्ये
कुब्जायाभवनोत्तमे बभौहरीरूपवत्यावैकुण्ठेरमयायथा ५१ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयम्-
यस्याःपतिरभूद्राजन्न होतस्यास्तपोमहत् ५२ तत्रस्थित्वाहरिर्देवोदिनान्यष्टौविदेहराट् आययौशौरिभवनं
लीलामानुषविग्रहः ५३ इतिश्रीकृष्णचरितंमथुरायांविदेहराट् सर्वपापहरंपुण्यमायुर्वर्द्धनमुत्तमम् ५४-

सौबध्वाकृतौदृढम् निपपातमहावेगात्समुद्रेभीमनादिनि २० श्रीकृष्णस्यनिपातेनत्रिलोकीभारधारिणः च
कंपेब्धिर्भृशंवज्रकूटेनेवविदेहराट् २१ ततःपंचजनोदैत्योयोद्धुंश्रीकृष्णसन्मुखे आगतःसहसावीरः शूलंचिक्षे
पमाधवे २२ हस्तेगृहीत्वातच्छूलंतेनैवाभिजघानतम् तद्घातेनप्रपतितोमूर्च्छितोवारिमंडले २३ सहसो
त्थायदेवेशंकिंचिद्व्याकुलमानसः मूर्द्धनिताडयत्पक्षीन्द्रंस्वफणेनफणीयथा २४ परिपूर्णतमःसाक्षाच्छ्रीकृ
ष्णोभगवान्हरिः क्रुद्धोमूर्द्ध्निवेगेनमुष्टिनातंतताडह २५ कृष्णमुष्टिप्रहारेणसद्योवैनिधनंगतः तज्ज्यो
तिःश्रीघनश्यामेलीनंजातंविदेहराट् २६ एवंहत्वापंचजनंशंखंनीत्वातदंगजम् महार्णवान्निर्गतोसौसह
सारथमागमत् २७ वायुवेगेनयानेनरामकृष्णौमनोहरौ जग्मतुःशमनस्यापिदीर्घांसंयमनींपुरीम् २८
पांचजन्यध्वनिंलोकैःप्रचंडामेघघोषवत् पूरयामासयंश्रुत्वाचकंपेससभोयमः २९ चतुराशीतिलक्षेषुन
रकेषुनिपातिता येयेश्रुत्वाध्वनिंतेतेजग्मुर्मोक्षंतुपापिनः ३० यमःसद्योबलिंनीत्वाश्रीकृष्णबलदेवयोः प
पातचरणोपांतेधर्षितःसन्कृतांजलिः ३१ यमउवाच हेहरेहेकृपासिंधोरामरामहाबल असंख्यब्रह्मा
डपतीपरिपूर्णतमौयुवां ३२ देवौपुराणौपुरुषौमहांतौसर्वेश्वरौसर्वजगज्जनेशौ अद्यैवसर्वौपरिवर्तमानौगि
रानिजाज्ञांवदतंपरेशौ ३३ श्रीभगवानुवाच गुरुपुत्रंलोकपालश्चानयस्वमहामते राज्यंकुरुयथान्याय
मदुक्तंमानयंकृचित् ३४ नारदउवाच तदैवतेनोपानीतंगुरुपुत्रंहरिःस्वयम् गृहीत्वावंतिकामेत्यददौश्रीगु
रवेशिशुम् ३५ गुर्वाशिषासंयुतौतौनत्वातंहिकृतांजली रथमारुह्यमथुरामागतौयदुपूजितौ ३६ एक
दासबलःकृष्णःसर्वकारणकारणः पांडवान्संस्मरन्भक्तानक्रूरभवनंययौ ३७ अक्रूरःसहसोत्थाय

१६ बहुलाश्वउवाच स्रुदाम्नामालिनाब्रह्मन्किंकृतंसुकृतंवद यद्गृहंजग्मतुःसाक्षाद्रामकृष्णौमनोहरौ-
१७ नारदउवाच राजराजवनंरम्यंनाम्नाचैत्ररथंशुभम् तस्यवैपुष्पबटुकोहेममालीतिनामभाक् १८ वि
ष्णुभक्तरतःशान्तोदानीसत्संगकृन्महान् श्रीकृष्णदेवप्राप्त्यर्थंदेवपूजांचकारह १९ समाःपंचसहस्राणिप
द्मानांचशतत्रयम् नित्यंनीत्वाधूर्जटयेपुरोधृत्वाननामह २० एकदातिप्रसन्नोभूत्त्र्यंबकःकरुणानिधिः
मालाकारमहाबुद्धेवरंब्रूहीत्युवाचह २१ हेममालीतदादेवंनमस्कृत्यकृतांजलिः प्रदक्षिणीकृत्यपुरःस्थि
त्वाप्राहनतानतः २२ हेममाल्युवाच परिपूर्णतमंकृष्णंकचिन्मोगृहमागतम् पश्यामिहृग्भ्यांतंसाक्षा
त्वद्वरेणभवेदिदम् २३ श्रीमहादेवउवाच द्वापरांतेभारतेचमथुरायांमहामते मनोरथस्तेसफलोभवि-
ष्यतिनसंशयः २४ नारदउवाच महेश्वरवरेणासौहेममालीमहामनाः मालाकारोद्वापरांतेसुदामासंब
भूवह २५ तस्मादस्यगृहंसाक्षाज्जग्मतूरामकेशवौ शिववाक्यमृतंकर्तुंकिंभूयःश्रोतुमिच्छसि २६ इति
श्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखंडेनारदबहुलाश्वसंवादेरजकवायकसुदामोपाख्याननामदशमोऽध्यायः१०
श्रीबहुलाश्वउवाच सैरंध्र्याःकिंकृतंपूर्वंतपःपरमदुर्घटम् येनप्रसन्नःश्रीकृष्णोदेवैरपिसुदुर्लभः १ नारदउवाच -
पंचवट्यांस्थितंरामकोटिकन्दर्पसन्निभम् वीक्ष्यशूर्पणखानामराक्षसीमोहिताभृशम् २ निर्मोहंराघ
वंदृष्ट्वाऽथैकपत्नीव्रतस्थितम् क्रोधात्सीतांभक्षयितुंधावतीरावणस्वसा ३ खड्गेनशितधारेणलक्ष्मणोरा
घवानुजः जहारतस्याःकर्णौचनासांसद्योरुषान्वितः ४ छिन्ननासागतालंकांरावणायनिवेद्यतत् भू
यःपुष्करतीर्थंसाजगामविमनाभृशम् ५ तपश्चक्रेशूर्पणखावर्षाणामयुतंजलम् ध्यायंतीत्र्यंबकंदेवं-

९९

चतुःपदार्थदंनृणांश्रीकृष्णवशाकारकम् मयातेकथितंपृष्टंकिंभूयःश्रोतुमिच्छसि ५५ इतिश्रीमद्गर्गाचार्यसं
हितायांश्रीमथुराखंडेनारदबहुलाश्वसंवादेयदुसौख्यंनामनवमोऽध्यायः ९ बहुलाश्वउवाच श्रीकृष्ण-
चरितम्पुण्यंमयातवमुखाच्छ्रुतम् पुनःश्रोतुंमनश्चाद्यतृषितोवाजलंगतः १ कंसस्यजन्मकर्माणित्वयोक्तानि
श्रुतानिमे केश्यादिदैत्यैर्देववरैःपूर्वजन्मकृतंशुभम् २ कोयंतुरजकःपूर्वमवधीद्यंहरिःकथम् अहोयस्यमह-
ज्ज्योतिःकृष्णेलीनंबभूवह ३ नारदउवाच त्रेतायुगेत्वयोध्यायांराममराज्येविदेहराट् चाराणांशृण्वतांकश्चि-
द्रजकोत्यवदत्स्त्रियाम् ४ नाहंबिभर्मित्वांदुष्टांसुशान्तांपरवेश्मगाम् स्त्रीलोभीबिभृयात्सीतांरामोनाहंभजेत्पुनः
५ इतिलोकाद्बहुमुखाद्वाक्यंश्रुत्वाथराघवः सीतांतत्याजसहसावनेलोकापवादतः ६ तस्मैदंडंदातुमिच्छांन
चक्रेराघवोत्तमम् मथुरायांद्वापरांतेरजकःसबभूवह ७ कुवाक्यदोषशान्त्यर्थंतंजघानहरिःस्वयम् तदपिप्रददौ-
मोक्षंतस्मैश्रीकरुणानिधिः ८ दयालोःकृष्णचन्द्रस्यचरित्रंपरमाद्भुतम् एतत्तेकथितंराजन्किंभूयःश्रोतुमि
च्छसि ९ बहुलाश्वउवाच पुरावैवायकःकोयंनितरांमुनिसत्तम यस्मैददौचसारूप्यंश्रीकृष्णोभगवान्
हरिः १० श्रीनारदउवाच मिथिलानगरेपूर्वंवायकोहरिभक्तकृत् श्रीरामोद्वाहसमयेसीरध्वजनृपाज्ञया
११ रामलक्ष्मणवेशार्थंवासांसिरचयन्वधूः लघुसूत्रैःपरिचयन्कुशलोवस्त्रकर्मसु १२ कोटिकन्दर्पलाव-
ण्यौसुन्दरौरामलक्ष्मणौ तौवीक्ष्यवायकोराजन्मोहितोभून्महामनाः १३ अहंस्वहस्तैर्वस्त्राणितयोरंगे
षुसर्वतः परिधानंकारयामिचक्रेचेत्थंमनोरथम् १४ मनसापिवरंरामोददौतस्मादशेषवित् द्वापरांतेभा
रतेचभविष्यतिमनोरथः १५ श्रीरामस्यवरात्सोयंमथुरायांबभूवह तयोर्वेषंकारयित्वातत्सारूप्यंजगामह-

माशोचंकुरुदैत्येन्द्रमथुरायांहरेःपुरि श्रीकृष्णहस्तात्तेमुक्तिर्भविष्यतिनसंशयः २३ नारदउवाच सोयं
मन्दगतिर्दैत्योगजोभूद्विंध्यपर्वते नाम्नाकुवलयापीडोनागायुतसमोबले २४ गृहीतोमागधेन्द्रेणबलाल्लक्ष
गजैर्वने सोयंदत्तस्तुकंसायपारबर्हेविदेहराट् २५ भृतवाक्यात्तस्यधामश्रीकृष्णेलीनतांगतम् इदंमयाते
कथितंकिंभूयःश्रोतुमिच्छसि २६ इतिश्रीमद्गर्गाचार्यसंहितायांमथुराखण्डेनारदबहुलाश्वसंवादेकुब्जा
कुवलयापीडवर्णननामैकादशोऽध्यायः ११ बहुलाश्वउवाच चाणूराद्याश्चयेमल्लास्तेकेपूर्वमिहागताः
अहोश्रीकृष्णचन्द्रेणयेषांयुद्धंबभूवह १ नारदउवाच राजन्पुरामरावत्यामुतथ्योस्तिमहामुनिः तस्या
भवन्पंचपुत्राःकामदेवसमप्रभाः २ हित्वाविद्यांचाध्ययनंजपतेनसहैवते गत्वाबलेमल्लयुद्धंसदाशिक्षन्
मदोद्धतः ३ ब्रह्मकर्मपरिभ्रष्टान्वेदाध्ययनवर्जितान् रुषाप्राहसुतान्मत्तानुतथ्योमुनिसत्तमः ४ उतथ्य
उवाच शमोदमतपःशौचंक्षांतिरार्द्रवमेवच ज्ञानंविज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम् ५ शौर्यंतेजो
धृतिर्दाक्ष्यंयुद्धेचाप्यपलायनम् दानमीश्वरभावश्चक्षात्रंकर्मस्वभावजम् ६ कृषिगोरक्ष्यवाणिज्यंवैश्य
कर्मस्वभावजम् परिचर्यात्मकंकर्मशूद्रस्यापिस्वभावजम् ७ ब्रह्मकर्मपरित्यक्ताभवन्तोब्राह्मणाःसुता
मल्लयुद्धंक्षात्रयुद्धंकथंकुरुथदुर्जनाः ८ तस्माद्भवन्तोभूयासुर्मल्लावैभारताजिरे असुराणांप्रसंगेनदुर्ज
नाभवताशठाहि ९ नारदउवाच उतथ्यस्यसुतास्तेवैजातामल्लामहीतले श्रीकृष्णांगस्पर्शमात्रात्परंमो
क्षंययुर्नृप १० चाणूरोमुष्टिकःकूटःशलस्तोशलएवच एषांचरित्रंकथितंकिंभूयःश्रोतुमिच्छसि ११
बहुलाश्वउवाच कंसानुजाभ्रातरोष्टौकंकन्यग्रोधकादयः तेकेपूर्वंवदमुनेयेपिमोक्षंपरंगताः १२ नारदउ०



100

श्रीरामवरमिच्छती ६ ततः प्रसन्नोभगवान्देवदेवउमापतिः एत्यतत्पुष्करतीर्थेवरंब्रूहीत्युवाचह ७ -
शूर्पणखोवाच श्रीरामोमेवरोभूयाद्वरंदेहिसतांप्रियः त्वंदेवदेवपरमःसर्वासामाशिषांप्रभुः ८ शिव
उवाच अद्येवसफलोनस्याद्वरस्तेशृणुराक्षसि द्वापरांतेमाथुरेचभविष्यतिनसंशयः ९ नारदउवाच
सैवशूर्पणखानामराक्षसीकामरूपिणी अभूत्सामथुरायांतुकुब्जानाममहामते १० महादेववरेणा-
पिश्रीकृष्णस्यप्रियाभवत् इदंमयातेकथितंकिंभूयःश्रोतुमिच्छसि ११ बहुलाश्वउवाच कोयंकुवल-
यापीडःपूर्वजन्मनिनारद कथंगजत्वमापन्नःश्रीकृष्णेलीनतांगतः १२ नारदउवाच बलिपुत्रोमहाका
योनाम्नामन्दगतिर्बली सर्वशस्त्रभृतांश्रेष्ठोलक्षनागसमोबली १३ एकदानिर्गतःसोपिरंगयात्रांज
नेषुच मत्तेभवज्जनान्वेगाद्भुजयोःपरिमर्दयन् १४ तद्बाहुवेगात्पतितःपथित्रन्द्रस्त्रितोमुनिः क्रुद्धःश-
शापतंमत्तंबलिष्ठंबलिनन्दनम् १५ त्रितउवाच गजवत्त्वंमदोन्मत्तोभूजनान्परिमर्द्दयन् विचरन्रंगया
त्रायांत्वंगजोभवदुर्मते १६ नारदउवाच एवंशप्तस्तदादैत्योनाम्नामन्दगतिर्बली पतन्कंचुकवद्देह-
भ्रष्टतेजाबभूवह १७ मुनेःप्रभाववित्सद्योदैत्योभूत्वाकृतांजलिः नत्वाप्रदक्षिणीकृत्यत्रितंमुनिमु
वाचह १८ मन्दगतिरुवाच हेमुनेहेकृपासिन्धोत्वंयोगीन्द्रोद्विजोत्तमः गजत्वान्मेकदामुक्तिर्भविष्य
तिवदाशुमाम् १९ त्वादृशानांसतांमाभूद्धेलनंमेक्कचिन्मुने त्वादृशामुनयोब्रह्मन्समर्थावरशापयोः
२० नारदउवाच एवंप्रसादितस्तेनत्रितोनाममहामुनिः गतक्रोधोब्रवीद्दैत्यंकृपालुर्ब्राह्मणोत्तमः २१
त्रितउवाच वचनंमेमृषानस्यात्त्वद्भक्त्याहर्षितोस्म्यहम् तेदास्यामिवरंदिव्यंदेवानामपिदुर्लभम् २२-

सपयित्वास्वज्ञातीन्वदैतन्मुनिसत्तम १ नारदउवाच परिपूर्णतमःसाक्षाद्भगवान्भक्तवत्सलः सस्मारगो
कुलंदीनंगोपीगोपालसंकुलम् २ एकदाहूयरहसिसखायंसख्यमुद्धवम् उवाचभगवान्देवःप्रेमगद्गदयागिरा ३
श्रीभगवानुवाच गच्छशीघ्रंव्रजंहेसखेसुन्दरंश्रीलताकुंजपुंजादिभिर्मंडितम् शैलकृष्णाप्रभाचारुवृन्दावनं
गोपगोपीगणैर्गोकुलंसंकुलम् ४ एकपत्रंतुनन्दायवैदीयतांवाद्वितीयंयशोदाकरेणैवभोः धात्रृतीयंत्विदं
राधिकायैसखेतत्रगत्वाहितन्मन्दिरंसुन्दरम् ५ वाचतुर्थंसखिभ्यःशिशुभ्यःशुभंकौशलंदीयतांपत्रमेवंपृथक्
गोपिकानांशतेभ्यश्चयूथेभ्यउन्मोहितानांचदेयानिपत्राणिच ६ मेपितानन्दराजोगृणीमन्मनामेचमातायशो
दास्मरत्याशुमाम् वाक्यवृन्दैश्चभैर्नीतिविन्त्वंतयोर्मेपराम्प्रीतिमाराहयोरावह ७ मत्प्रियाराधिकामद्वियोगातु-
रामन्यतेमांविनाखंजगन्मोहतः मद्वियोगाधिमस्यामदुक्तैःपदैर्मोचयत्वंभवान्दक्षिणोवाक्पथे ८ गोपबालाः
सुदामादयोमत्प्रियामासखायंविनातेपिमोहातुराः देहितेषांसुखंमित्रवञ्चश्रीव्रजेस्वल्पकालेनतत्रागमिष्याम्य-
हम् ९ गोपिकामद्वियोगाधिवेगातुरामन्मनस्काश्चमत्प्राप्तदेहासवः यामदर्थेचसंत्यक्तलोकाबलान्ताःक-
थनात्रमंत्रिनुबिभर्मिस्वतः १० ताश्चसूनृत्यक्तुमुद्योद्यताउद्धवत्वाभिरद्यापिकृच्छ्रैर्धृतास्त्वासवः मद्वियोगा-
धिमासामदुक्तैःपदैर्मोचयत्वंभवान्दक्षिणोवाक्पथे ११ येनपूर्वंव्रजादागतोहंसतंरथंसाश्वसूतंरणत्घंटिक
म् मेचसारूप्यमद्यैवपीतांबरंवैजयंतीसहस्रच्छदंपंकजम् १२ कुंडलेदिव्यरत्नप्रभामंडितेकोटिबालार्कदी-
प्तिमणिंकौस्तुभम् मेमहानादिनींचारुवंशींशिखाभांपुष्पयुक्तांचयष्टिंजगन्मोहिनीम् १३ चन्दनंसुन्दरंदिव्यगंधा
वृतंबर्हमल्लादिवेषंक्वणन्नूपुरम् मौलिमेवंगृहाणागदेउद्धवगच्छगच्छाशुचाद्यैवमद्वाक्पथः १४ नारदउवाच

अलकायांपुरायज्ञोदेवयक्षइतिस्मृतः ज्ञानीज्ञानपरोमान्यःशिवभक्तोमहाद्युतिः १३ तस्यचाष्टौसु
ताज्जातादेवकूटोमहागिरिः गंडोदंडःप्रचंडश्चखंडाखंडःपृथुस्तथा १४ एकदाशिवपूजायांदेवयक्षेणनो-
दिताः सहस्रपुंडरीकाणिचाहर्तुमरुणोदये १५ पुष्पाणिमानसान्नीत्वाशब्दितानिमधुव्रतैः आघ्रायग
धिलोभेनददुस्तेजनकायवै १६ उच्छिष्टीकृतदोषेणशिवपूजातिरस्कृतात् आसुरींयोनिमापन्नामूढास्ते-
जन्मभिस्त्रिभिः १७ हस्ताभ्यांशंकराभ्यांचबलदेवस्यमैथिल परंमोक्षंगतास्तेवैदोषान्मुक्ताविदेहराट् १८
कंसानुजानांव्याख्यानंपूर्वजन्मभवंनृप इदंमयातेकथितंकिंभूयःश्रोतुमिच्छसि १९ बहुलाश्वउवाच कोयं
पुरापंचजनोदैत्यःशंखवपुर्द्धरः तस्यशंखोबभौब्रह्मन्श्रीकृष्णकरपंकजे २० नारदउवाच पुरैवैतान्युपा
गानिचक्रादीनिविदेहराट् त्रैलोक्यनाथस्यहरेर्बभूवुस्तेजसाहता २१ तेषांशंखःपांचजन्यःप्राप्तोराजन्महत्प
दम् पपौतन्मुखलग्नोसौश्रीकृष्णस्याधरामृतम् २२ अकरोद्गर्वैकदामानंमनसिप्राहशंखराट् गृहीतोहं
हिहरिणाराजहंससमद्युभिः २३ श्रीकृष्णोदक्षिणावर्तंदध्मौमांविजयेसति यद्दुर्लभंचाब्धिपुत्र्याःश्री
कृष्णस्याधरामृतम् २४ तत्तस्मात्सर्वमुख्योस्मिपिबाम्यहमहर्निशम् इतिमानयुतंशंखंपांचजन्यंविदेहरा
ट् २५ शशापलक्ष्मीस्तत्क्रोधात्त्वंदैत्योभवदुर्मते सोयंपंचजनोनामदैत्योभूत्सरितांपतौ २६ वैरभावेनदेवे-
शंपुनःप्राप्तोदरेश्वरः ज्योतिर्लीनंतुदेवेशेवपुर्यस्यकरेबभौ २७ अहोभाग्यंविदितंतस्यकिंभूयःश्रोतुमि
च्छसि २८ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखंडेश्रीनारदबहुलाश्वसंवादेचाणूरादिकंसभ्रातृपंच
जनपूर्वाख्यानंनामद्वादशोऽध्यायः १२ बहुलाश्वउवाच अग्रेचकारकिंकार्यंमथुरायांयदूत्तमः निवा

लंच सर्वाधियः कृष्णमृते व्रजोनः शून्यं प्रजातं हि जगत्समस्तम् ३२ क्षणो युगत्वं च घटी महामते प्रयाति मन्वन्तरतां
व्रजौकसाम् यामश्च कल्पं च दिनं विना हरिं वियोगदुःखैर्द्विपरार्धतां गतम् ३३ अहर्निशं तं न हि विस्मरामहे दुष्टाघ
टीसाप्रययौ ययाह्रियः मनोहरत्नुद्धवनोवनौकसां वयस्यभावेन सदाकृतागसाम् ३४ इतिश्रीमद्गर्गाचार्यसंहि
तायां श्रीमथुराखंडे नारदबहुलाश्वसंवादे उद्धवागमनं नाम त्रयोदशोऽध्यायः १३ श्रीनारदउवाच एवंप्रे
मपरान्गोपान्श्रीकृष्णविरहातुरान् उवाच प्रेमसंयुक्त उद्धवो गतविस्मयः १ उद्धवउवाच अहं श्रीकृष्णदा
सोऽस्मि तत्प्रियस्तद्रहस्करः भवतां कुशलं द्रष्टुं प्रेषितो हरिणा त्वरम् २ पुरीं गत्वाथ हरये निवेद्य विरहं तु वः तं
प्रसन्नं करिष्यामि तद्घ्रोनेत्रवारिभिः ३ नीत्वाहरिं हि भवतां समीपं हे व्रजौकसः आगमिष्याम्यहं शीघ्रं शप
थो न मृषा मम ४ यूयं प्रसन्ना भवत मा शोकं कुरुताथ वै अस्मिन्व्रजेपि गोपाला द्रक्ष्यथ श्रीपतिं हरिम् ५ -
नारदउवाच एवमाश्वस्य गोपालान् रथस्थो यदुनन्दनः श्रीदामाद्यैश्च गोपालैः सहितो हर्षपूरितः ६ विवेश
नन्दनगरं सूर्ये सिन्धुगते सति आगतं त्वुद्धवं श्रुत्वा नन्दराजो महामतिः परिरभ्य मुदा शीघ्रं पूजयामास हर्षितः ७
कशिपुस्थं स्थितं शान्तमुद्धवं कृतभोजनम् कशिपुस्थो नन्दराजः प्राह गद्गदया गिरा ८ नन्दउवाच कच्चित्सखा मे
पुरि शूरसेन आस्ते स्वपुत्रैः कुशली महामते कंसे मृते यादवपुंगवानां जातं सखे सौख्यमतः परं भुवि ९ कच्चि-
त्कदाचित्सबलो हि माधवः स्मरत्यसौ वा जननीं यशोमतीम् गोपालगोवर्द्धनगोगणान्व्रजं वृन्दावनं वा पुलिनं तरंगि
णीम् १० हा देव कस्मिन्समये स्वनन्दनं बिंबाधरं सुन्दरमंबुजेक्षणम् द्रक्ष्याम्यहं मन्दिरचत्वराजिरेऽर्भकैर्लुठन्तं
सबलं मुहुर्मुहुः ११ कुंजो निकुंजो यमुना महानदी गोवर्द्धनोरण्यमिदं वनानि गृहैर्लतावृक्षगवां गणैः सह विना



102

इत्युक्तउद्धवः शीघ्रंनमस्कृत्यकृतांजलिः कृष्णंप्रदक्षिणीकृत्यरथारूढोव्रजंययौ १५ कोटिशःकोटिशोगावो यत्रयत्रमनोहराः श्वेतपर्वतसंकाशादिव्यभूषणभूषिताः १६ पयस्विन्यस्तरुण्यश्चशीलरूपागुणैर्युताः स वत्सापीतपुच्छाश्चव्रजंत्योभव्यमूर्तिकाः १७ घंटामंजीरझंकाराःकिंकिणीजालमंडिताः हेमतुल्याहेमशृंग्यो हारमालाःस्फुरत्प्रभाः १८ पाटलाहरितास्ताम्राःपीताःश्यामविचित्रिताः धूम्राःकोकिलवर्णाश्चयत्रगावस्त्व नेकधा १९ समुद्भवदुग्धदाश्चतरुणीकरचिह्निताः कुरंगवद्विलंघड्गिगोचित्रैर्मंडिताःशुभाः २० इतस्ततः श्चलंतश्चगोगणेषुमहावृषाः दीर्घकन्धरशृंगादद्यायत्रधर्मधुरंधराः २१ गोपालावेत्रहस्ताश्चश्यामावंशीधराः पराः कृष्णलीलाःप्रगायंतोरागैर्मदनमोहनैः २२ दूरान्नमागतंवीक्ष्यज्ञात्वाकृष्णंव्रजार्भकाः ऊचुःपरस्परंतेवै कृष्णदर्शनलालसाः २३ गोपाऊचुः नंदसूनुःकिलायातिसखायोयंनसंशयः मेघश्यामःपीतवासाःस्र ग्वीकुण्डलमंडितः २४ कौस्तुभीमंडलीबिभ्रत्सहस्रदलपंकजम् तदेवमुकुटंबिभ्रत्कोटिमार्तंडसन्निभम् २५ तएवाश्वारथःसोयंकिंकिणीजालमंडितः बलोनास्तिरथेचास्मिन्नेकाकीनंदनन्दनः २६ नारदउवाच एवंवदंतोगोपालाःश्रीदामाद्याविदेहराट् कृष्णाकृतिंकृष्णसखमाययुःसर्वतोरथम् २७ कृष्णोनास्तीति वदतःकोयंसाक्षात्तदाकृतिः तान्नमस्कृत्योपगविःपरिरभ्याब्रवद्सुतिं २८ उद्धवउवाच गृहाणपत्रंश्रीदा मन्कृष्णदत्तंनसंशयः शोचंमाकुरुगोपालैःकुशल्यास्तेहरिःस्वयम् २९ यादवानांमहत्कार्यंकृत्वाथसबलः प्रभुः ह्रस्वकालेनचात्रापिभगवानागमिष्यति ३० नारदउवाच पठित्वातद्धस्तपत्रंश्रीदामाद्याव्रजार्भ- काः भृशमश्रूणिमुंचंतःप्राहुर्गद्गदयागिरा ३१ गोपाऊचुः पांथेतिनिर्मोहिनिनन्दसूनोतनुर्विभूतिश्चधनंब-

खिन्नतांगतः २८ अहोदाम्नामयाबद्धोनिर्मोहिन्यैकदाशिशुः भांडेभग्नीकृतेदध्नःशोचामिचरितंचतत् २९ त
त्प्रांगणंसर्वसभाचमन्दिरंशरश्चवीथीव्रजहर्म्यपृष्टयः शून्यंसमस्तंममजीवनंधिक्कविनामुकुन्दंविषवन्निदंजगत् ३०
नारदउवाच यशोदानंदयोर्वीक्ष्यपरमंप्रेमलक्षणम् उद्धवोनितरांराजन्विस्मितोभूद्गतस्मयः ३१ उद्धवउवाच
रोममात्रंममतनोजिह्वाचज्जायतेत्वहो युवयोस्तदपिश्लाघांकर्तुंनालंमहाप्रभू ३२ परिपूर्णतमेसाक्षाच्छ्रीकृष्णो
पुरुषोत्तमे ईदृशीचकृताभक्तिर्युवाभ्यांप्रेमलक्षणा ३३ तीर्थाटनतपोदानसांख्ययोगैश्चदुर्लभा शाश्वतीयुव
योःप्राप्तायाभक्तिःप्रेमलक्षणा ३४ माशोचंकुरुहेनन्दहेयशोदेव्रजेश्वरि पत्रद्वयंगृहाणाशुकृष्णाद्दत्तंनसंशयः
३५ सहाग्रजोनन्दसूनुःकुशल्यास्तेयदोःपुरि यादवानांमहत्कार्यंकृत्वाथसबलःशुभः ३६ ह्रस्वकालेनचात्रा
पिभगवानागमिष्यति परिपूर्णतमंविद्धिश्रीकृष्णंनंदनन्दनम् ३७ कंसादीनांवधार्थायभक्तानांरक्षणायच ३७
ब्रह्मणाप्रार्थितःकृष्णोवततारगृहेतव जातेमात्रोद्भुतांलीलांचकारसबलोहरिः ३८ पूतनाप्राणहरणंशकट
स्यनिपातनम् तृणावर्तनिपातश्चयमलार्जुनभंजनम् ३९ स्वमुखेचयशोदायैविश्वरूपस्यदर्शनम् वृन्दावनेचभ
गवान्गोवत्सांश्चारयन्प्रभुः ४० वधंचकारगोपानांपश्यतांबकवत्सयोः अघासुरस्यचवधोधेनुकस्यविमर्दनम्
४१ मर्दनंकालियस्यापिवह्निपानंचकारह प्रलंबस्यवधंपश्चाद्बलदेवश्चकारह ४२ गोवर्द्धनंसमुत्पाट्यहस्तेनैकेन
लीलया युष्माकंपश्यतांबिभ्रत्पुष्करंगजराडिव ४३ चूडामणिंशंखचूडाज्जहारजगतांपतिः अरिष्टस्यवधंकृ-
त्वाकेशिनंनिजघानह ४४ व्योमासुरंमहादैत्यंमुष्टिनातंममर्दह तथावैमथुरायांतुचक्रेचित्रंमहामते ४५ विक
त्थमानंरजकंकरेणाभिजघानतम् प्रचंडकंसकोदंडमध्यतस्तद्बभंजह इक्षुदंडयथानागःसर्वेषांपश्यतांनृणाम् ४६

मुकुंदंविषवन्निदंजगत् १२ धिग्जीवनंमेशयनंचभोजनंकृष्णंविनापद्मदलायतेक्षणम् चन्द्रंविनाभूमितलेचकोर वज्जीवामितस्यागमनाशयाभृशम् १३ हर्तुंभुवोभारमतीवदैवतैःसंप्रार्थितंपूर्णतमंमहामते जातंसतांरक्ष-णतत्परंस्वयंमन्येहिकृष्णंसबलंपरात्परम् १४ नारदउवाच संस्मृत्यसंस्मृत्यहरिंपरेशंबभूवतूष्णींनवनन्दराजः शिरोनिधायाश्रुपबर्हणेस्नेहोत्कंठरोमांचितविह्वलांगः १५ श्रीनन्दनेत्रांबुजवारिसंततीराजन्तदाकृष्णसरव स्यपश्यतः शय्यांसवस्त्रामुपबर्हणांतांकृत्वार्द्रतांप्रांगणमाचचाल १६ श्रुत्वोद्धवंश्रीमथुरापुरागतंकपाटमे त्याशंक्ययशोमतीसती शृण्वंत्यलंस्वस्यसुतस्यवर्णनंस्नेहस्रवत्स्तननेत्रपंकजा १७ विहायलज्जांघृणया सुतस्यसापप्रच्छसर्वंकुशलंतदोद्धवम् आप्रोंच्छ्यवस्त्रेणदृगश्रुसंततिंस्थितेचनन्देहरिभावविह्वले १८ श्री यशोदोवाच कच्चित्स्मरतिमांकृष्णोनन्दराजमथापिवा भ्रातरंनंदराजस्यसनन्दंदर्शनोत्सुकम् १९ नदान्नवो पनन्दांश्चवृषभानून्व्रजेषुषट् येषामारोहमास्थायबालकेलिर्वनेवने २० कंदुकक्रीडयारेमेसानन्दंनन्दनन्दनः तान्गोपान्स्नेहसंयुक्तान्कदाचित्स्मरतिस्वतः २१ एकोयंमेसुतःप्राप्तोनसुतावहवश्चमे सापिमांजननींदीनां यथोत्पत्त्यादिगलरम् २२ अहोकष्टंस्नेहवतांदुर्निवारंमहामते किंकरोमिविनापुत्रंकथंजीवामिमानद २३ मा तर्मह्यंदेहिदधिमातर्दुग्धंगवांनवम् एवंवदन्समधुरंहठंचक्रेसदागृहे २४ मध्यान्हेसकथंकृष्णोभोजनंकर्तुम-र्हति ममात्मजोयंश्रीकृष्णोजीवनंव्रजवासिनाम् व्रजेधनंकुलेदीपोमोहनोबाललीलया २५ लालनैःपालनैस्त स्यदिनंमेक्षणवद्गतम् नहिनंकल्पवज्जातंविनाहोनंदनन्दनम् २६ वत्सान्चारयितुंकृष्णोग्रामसीम्निनदीतटे नकारितोर्भकैःसार्द्धंसचाहोमथुरांगतः २७ हेमोहनेति[illegible]लीलाललितम् चकारनन्दराजोयंतंविना

सार्थकृत्कंससखोतिनिर्घृणः सोयंपुनः किंव्रजमंडलंगतः भर्तुर्मृतस्यापिहिपारलौकिकीमस्माभिरद्यैवकरि-
ष्यतिक्रियाम् ११ नारदउवाच एवंवदंत्योव्रजगोपवध्वः संताड्यसूतंचमुखेंगुलिभ्याम् पप्रच्छुराराद्कृतबु
द्धिमार्त्तस्वरंवदैतत्किलकस्ययानम् १२ घनप्रभंपद्मदलायतेक्षणंकृष्णाकृतिकोटिमनोज्ञमोहनम् पीता-
बरंषट्पदसंघसंकुलांमालांदधानंनववैजयंतीम् १३ स्फुरत्सहस्रच्छदपद्मपाणिंवंशीधरंवेत्रकरंमनोहरम्-
बालार्ककोटिद्युतिमौलिमंडनंमहामणिंकुंडलमंडिताननम् १४ गत्याकृतिश्रीतनुहाससुस्वरैः श्रीकृष्णसा
रूप्यधरंतदुद्धवम् विलोक्यसर्वानृपविस्मितास्ततोविज्ञायगोविन्दसखंयद्युःपुरः १५ ज्ञात्वाथसन्देहह
रंहरेःप्रभोःसुवाक्यनीत्यापरमादरेणतम् गुप्तंहिप्रष्टुंकुशलंसतांपतेर्नीत्वोद्धवंताःकदलीवनंगताः १६-
यत्रैवराधावृषभानुनंदनीकृष्णात्तटेचारुनिकुंजमन्दिरे समास्थितातद्विरहातुराभृशंरवंमन्यतेसातुजगद्ध
रिंविना १७ रंभादलैश्चन्दनपंकसंचयंस्फुरत्स्फुरच्छीतलमेघमन्दिरम् कृष्णाचलच्चारुतरंगसीकरंस्वतःसु
धारश्मिगलत्सुधाचयम् १८ एतादृशंयत्कदलीवनंचतद्राधावियोगानलवर्चसाभृशम् बभूवसर्वंसततंहि
भस्मसात्कृष्णागमाशात्मतनुंहिरक्षति १९ श्रुत्वोद्धवंकृष्णसखंसमागतंचकारराधास्वसखीभिरादरम्
जलासनाद्यैर्मधुपर्कमंगलैः श्रीकृष्णकृष्णेतिमुहुर्वदत्यलम् २० राधांहिगोविंदवियोगखिन्नांकुह्वांयथाचन्द्रक-
लांतदोद्धवः नतांकृशांगींकृतहस्तसम्पुटः प्रदक्षिणीकृत्यजगादहर्षितः २१ उद्धवउवाच सदास्तिकृष्णः
परिपूर्णदेवोराधेसदात्वंपरिपूर्णदेवी श्रीकृष्णचन्द्रः कृतनित्यलीलोलीलावतीत्वंकृतनित्यलीला २२ कृ-
ष्णोस्तिभूमात्वमसींदिरासदाब्रह्मास्तिकृष्णस्त्वमसिस्वरासदा कृष्णःशिवस्त्वंचशिवाशिवार्थाविष्णुःप्रभु

द्विपंकुवलयापीडंनागायुतसमंबले शुंडादण्डेसंगृहीत्वापातयामासभूतले ४७ चाणूरंमुष्टिकंकूटंशलंतोशल-
मेवच पातयामासभूपृष्ठमल्लयुद्धेनमाधव ४८ कंसंमदोत्कटंदैत्यंनागलक्षसमंबले मंचाद्गृहीत्वातंकृष्णोभ्रा-
मयित्वाभुजौजसा ४९ पातयामासभूपृष्ठेकमंडलुमिवार्भकः इभोपरियथासिंहस्तस्योपरिपपातह ५० कं
सानुजांश्चकंकादीन्बलदेवोमहाबलः ममर्दमुद्गरेणाशुमृगान्वैमृगराडिव ५१ गुरवेदक्षिणांदातुसमुत्पत्यम
हार्णवे शंखरूपंपंचजनंनिजघानहरिःस्वयम् ५२ अद्भुतानिचरित्राणिचैतानिश्रीहरिंविना कःकरोतिमहानं
दतस्मैश्रीहरयेनमः ५३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखंडेनारदबहुलाश्वसंवादेनन्दराजोद्धवमेलनं
नामचतुर्दशोऽध्यायः १४ नारदउवाच एवंहिनंदोद्धवयोर्हरेःकथयतोःकथाम् व्यतीतात्क्षणवद्राजन्क्षण
दाहर्षवर्द्धिनी १ ब्राह्मेमुहूर्तेउत्थायगोप्यःसर्वागृहेगृहे देहल्यांगणमालिप्यदीपांस्तत्रनिरूप्यच २ प्रक्षाल्यह-
स्तपादौचमथ्यांनेत्रंनिधायच ममंथुःसर्वतोयुक्ताःपिच्छिलानिदधीनिताः ३ नेत्राकर्षणचलद्धारभुजकंकणाकं-
कणाः वेणीभ्योविगलत्पुष्पास्फुरत्कुंडलमंडिताः ४ चन्द्रमुख्यःकंजनेत्राश्चित्रवर्णैर्मनोहराः मंगलानिच
रित्राणिश्रीकृष्णबलदेवयोः ५ गायंत्यःप्रेमसंयुक्तायत्रयत्रगृहेगृहे घोषंघोषेशुभागावौरंभमाणाइतस्त
तः ६ सर्वत्रगोपिकागीतंदधिशब्देनमिश्रितम् वीथ्यांवीथ्यांततःशृण्वन्विस्मितश्चोद्धवोऽब्रवीत् ७ अहोवैनं
दनगरेभक्तिर्नृत्यतियत्रच एवंवदन्बहिर्ग्रामाद्ययौस्नातुंनदीजले ८ गोप्यऊचुः कस्यायमद्यात्ररथःसमा
गतोक्रूरोथवाक्रूरउतागतःपुनः येनैवनीतोमथुरांमहापुरींश्रीनन्दसूनुर्नवकंजलोचनः ९ कस्मिन्कुकालेज-
नीससर्जयंदातुंसतांस्नेहवतांप्रतापनम् कद्रूर्यथानागचयंविषावृतंहंतुंवृथालोकजनानितस्ततः १० कं

तानुरूपिणी जगन्मयोब्रह्ममयोहरिःस्वयमजगन्मयीब्रह्ममयीत्वमेवहि ३७ अद्यैवसोयंव्रजराजनंदनोज्ञा तासिराधेवृषभानुनन्दिनी याभ्यांकृतासत्त्वमयीप्रशांतयेलीलाचरित्रैर्ललितादिलीलया ३८ कृष्णःस्वयंब्रह्मपरंपुराणोलीलात्वदिच्छाप्रकृतिस्त्वमेव परस्परंसंधितविग्रहाभ्यांनमोयुवाभ्यांहरिराधिकाभ्याम् ३९ गृहाणपत्रंनिजनाथदत्तंशोचंपरंमाकुरुराधिकेत्वम् ह्रस्वेनकालेनविधायकार्यंतत्रागमिष्यामितदुक्तवाक्यम् ४० गृण्हीध्वमद्यैवशतानिकृष्णादत्तानिपत्राणिसुमंगलानि प्रत्यर्पितंयूथशतंचगोप्यः कृष्णप्रियाणांव्रजसुन्दरीणाम् ४१ इतिश्रीमद्गर्गाचार्यसंहितायांमथुराखंडेनारदबहुलाश्वसंवादेश्रीराधादर्शनंनामपंचदशोऽध्यायः १५ श्रीनारदउवाच राधापत्रंसंगृहीत्वाशिरोनेत्रंतथाऽवहत् निधायवाचयित्वातत्स्मृत्वातत्पादपंकजम् १ अतिप्रेमातुराराजन्मोचयित्वाश्रुसंततिम् मूर्च्छामापपरांराधायादवस्यप्रपश्यतः २ कुंकुमागरुपाटीरद्रवैःपुष्परसैश्चसा आर्चिताचामरांदोलैःपुनश्चैतन्यतांगता ३ वियोगसिन्धुसंमग्नाराधांकमललोचनाम् वीक्ष्योद्धवस्तथागोप्योमुमुचुश्चाश्रुसंततिम् ४ तासामश्रुप्रवाहेणराजन्वृन्दावनेवने सद्यःकल्हारसंयुक्तोजातोलीलासरोवरः ५ दृष्ट्वापीत्वाचसस्नात्वाश्रुत्वाचेमांकथांनरः कर्मबन्धविनिर्मुक्तःश्रीकृष्णंप्राप्नुयान्नृप ६ अथोद्धवमुखाच्छ्रुत्वाश्रीकृष्णागमनंमुनः पप्रच्छुःकुशलंसर्वंश्रीकृष्णस्यमहात्मनः ७ राधोवाच आनन्ददंश्रीव्रजराजनन्दनंद्रक्ष्यामिकस्मिन्समयेघनप्रभम् घनंमयूरीवसमुत्सुकाभृशंचन्द्रंचकोरीवतदीक्षणोत्सुका ८ कस्मिन्कुकालेविरहोबभूवमेयेनैवकोकस्यसमःक्षणःक्षणः निशीथिनीयंद्विपरार्द्धहेलनंकरोतिगोविन्दपदद्वयंविना ९ कच्चित्कदाचिद्व्रजमा

स्त्वंकिलवैष्णवीपरा २३ कौमारसर्गीहरिरादिदेवतात्वमेवहिज्ञानमयीस्मृतिः शुभा लयांभसाक्रीडनतत्प
रोहरिर्यज्ञोवराहोवसुधात्वमेवहि २४ देवर्षिवर्योमनसाहरिःस्वयंत्वंतत्रसाक्षान्निजहस्तवल्लकी नारायणोध
र्मसुतोनरेणहिशांतिस्त्वदात्वंजनशांतिकारिणी २५ कृष्णस्तुसाक्षात्कपिलोमहाप्रभूःसिद्धिस्त्वमेवासिचसि-
द्धिसेविता दत्तस्तुकृष्णोस्तिमहामुनीश्वरोराधेसदाज्ञानमयीत्वमेवहि २६ यज्ञोहरिस्त्वंकिलदक्षिणाहरिरुरुक्र
मस्त्वंहिसदाजयंत्यतः पृथुर्यदासर्वनृपेश्वरोहरिरर्चिस्तदात्वंनृपपट्टकामिनी २७ शंखासुरंहंतुमभूद्धरिर्यदामत्स्या
वतारस्त्वमसिश्रुतिस्तदा कूर्मोहरिर्मन्दिरसिन्धुमंथनेनेत्रीकृतात्वंशुभदाहिवासुकी २८ धन्वंतरिश्चार्तिहरोह-
रिःपरस्त्वमोषधीदिव्यसुधामयीशुभे श्रीकृष्णचन्द्रस्तुबभूवमोहिनीत्वंमोहिनीतत्रजगद्विमोहिनी २९ हरिर्नृ-
सिंहस्तुनृसिंहलीलयालीलातदात्वंनिजभक्तवत्सला बभूवकृष्णस्तुयदाहिवामनःकीर्तिस्तदात्वंनिजलोककीर्ति
ता ३० हरिर्यदाभार्गवरूपधृक्पुमान्धाराकुठारस्यतदात्वमेवहि श्रीकृष्णचन्द्रोरघुवंशचन्द्रमायदातदात्वंजन
कस्यनंदिनी ३१ श्रीशार्ङ्गधन्वामुनिबादरायणोवेदांतकृत्त्वंकिलदेवलक्ष्मणा संकर्षणोमाधववृष्णिएवत्वंरेवती
ब्रह्मभवासमास्थिता ३२ बुद्धोयदाकीर्णपमोहकारकोबुद्धिस्तदात्वंजनमोहकारिणी कल्कीयदाधर्मपतिर्भवि
ष्यतिहरिस्तदात्वंतुकृतिर्भविष्यति ३३ श्रीकृष्णचन्द्रोस्तिहिचन्द्रमंडलेराधेसदाचन्द्रमुखीतिचन्द्रिका श्रीकृष्ण
सूर्योदिविसूर्यमंडलेसूर्य्यप्रभात्वंपरिधिप्रतिष्ठिता ३४ इंद्रःसदास्तेकिलयादवेन्द्रस्तत्रैवराधेतुशचीशचीश्वरी -
हिरण्यरेताहिहरिःपरेश्वरोहेतिःसदात्वंहिहिरण्मयीपरा ३५ श्रीराजराजोहिविराजतेहरिर्विराजसेत्वंतुनिधीनिधी
श्वरी क्षीराब्धिरूपीतुहरिस्त्वमेवहितरंगितक्षोमसितातरंगिणी ३६ विश्वद्रपुःसर्वपतिर्यदायदातदातदात्वंविदि

षुसक्तंकिलबन्धनायरक्तंमनःपुंसिचमुक्तयेस्यात् मनोह्वयोःकारणमाहुराराज्जिताथतत्कोविचरेदसंगः २५
यदास्वयंब्रह्मपरात्परंमामध्यात्मयोगेनविशारदेन जानातिसर्वत्रगतंविवेकीतदाविजत्यान्मनसःकषायम् २६
यावद्गुणोमध्यगतस्तदुत्थितःस्वकर्मरूपंनहिहृक्प्रपश्यति २७ स्थूलाच्चदूरेस्मिनतत्त्वतोगनास्तस्माद्वियो
गंकुरुतान्नसाधनम् यत्सांख्यभावैःकिलगम्यतेपदंतद्योगभावैरपिगम्यतेस्वतः २८ इतिश्रीमद्गर्गाचा
र्यसंहितायांश्रीमथुराखंडेनारदबहुलाश्वसंवादेराधागोप्याश्वसनंनामषोडशोऽध्यायः १६ श्रीनारदउवाच
श्रुत्वाश्रीकृष्णसंदेशंप्रसन्नागोपवल्लभाः अश्रुमुख्योबाष्पकंठ्यऊचुरोपगविंनृप १ गोलोकवासिन्यऊचुः
विदेशंगतवान्कृष्णस्त्यक्त्वापूर्वंप्रियाञ्जनान् तदुपर्यऽखिलयोगमहोनिर्मोहताबलम् २ द्वारपालिकाऊचुः
चकोरेग्लौःपंकजेकोभ्रमरेपंकजंयथा चातकेचघनःप्रीतिंनकरोतिकदाचन ३ श्रृंगारप्रकाराऊचुः चंद्र
मिन्नचकोरोऽतिसख्योवन्हिंकरंसदा विधात्रायद्धिलिखितंतन्न्यूनंनभवेदिह ४ शय्योपकारकाऊचुः
व्याधोहिहत्वाहिमृगान्स्मरतित्वरमातुरः कटाक्षैःस्वप्रियान्हत्वानिर्मोहीनस्मरेदहो ५ पार्षदाख्याऊचुः
जातंविरहजंदुःखंनान्योवेत्तिकदाचन यथाकंटकविद्धांगविद्धान्याविद्धकंटकः ६ वृन्दावनपालकाऊचुः
अनिमित्तप्रेमसौख्यमनिमित्तोहिवेत्तितत् सनिमित्तोनजानातिरसंकर्मेन्द्रियंयथा ७ गोवर्द्धनवासिन्यऊचुः
पुरंध्रीप्रेमकृद्योवैसैरंध्रीनायकोभवत् शैलौकोभिस्तुकिंतस्यबहुनाकथितेनकिम् ८ कुंजविधायकाऊचुः
ह्यामाधवीकुंजपुंजेगुंजन्मत्तमधुव्रते स्वहृत्कलक्षीकृतोयोवैतस्येयंश्रूयतेकथा ९ निकुंजवासिन्यऊचुः वृंदाव
नेमत्तमलिंदपुंजेकलिन्दजातीरकदंबपुंजे शनैश्चलंतंसबलंसगोपंसगोधनंनन्दसुतंभजामः १० यमुनायूथाऊचुः



106

गमिष्यतिकरोतिकिंतत्रहरिर्वदाशक्रमे अद्यैवयत्नेनधृताःकिलासवःप्रसत्यनिर्य्यातिमृषागिरातुराः १० ह
ष्वाक्षणत्वाममत्हच्चशीनलंजातंप्रसन्नास्मिसमागतेत्वयि यथाप्रसन्नाजनकात्मजापुरालंकापुरंवायुसुतेस-
मागते ११ आशांविधायनिजमोहधनंविसृज्यविस्मृत्यवाक्यगदितंमधुरांगतोयः तस्यापियत्रलिखितंश
मृतंनमन्येतंचानयस्वकिलमंत्रविदांवरिष्ठ १२ उद्धवउवाच गत्वापुरींतवपरंविरहंनिवेद्याऽथार्घ्यविधायनि
जनेत्रजलेनराधे नीत्वाहरिंतवपुरःपुनरागतोस्मिमाशोचमध्यकुरुमेशपथस्त्वदंघ्रेः १३ नारदउवाच
अथप्रसन्नाश्रीराधाचन्द्रकांत्योमणीशुभौ रासरंगेचन्द्रदत्तोउद्धवायददौनृप १४ सहस्रदलपद्मेहूदत्तेवं
द्रमसापुरा उद्धवायददौराधाप्रसन्नाभक्तवत्सला १५ छत्रंसिंहासनंदिव्यंचामरेद्वेमनोहरे श्रीकृष्णा-
मनसोद्भूतेददौतस्मैहरिप्रिया १६ ऐश्वर्यज्ञानसम्पन्नंसर्वदेशिकदेशकम् कृष्णासंयोगकर्तृत्वसदातवभ
विष्यति १७ भक्तिंनिर्गुणभावाढ्यांप्रेमलक्षणसंयुताम् ज्ञानंविज्ञानसहितंवैराग्यंसाददौपुनः १८ शंख
चूडाच्चहरिणानीतंचूडामणिंशुभम् चन्द्राननाददौतस्मैउद्धवायविदेहराट् १९ तथागोपीगणाःसर्वेभूषणा
नांचयशुभम् ददुःप्रसन्नाहेराजन्नुद्धवायमहात्मने २० नारदउवाच श्रुत्वावचश्चोपगवेःशक्राभार्यैसुखं
गतायांकिलराधिकायाम् ऊचुस्तमाराद्व्रजगोपवध्वःसदःस्थितंकृष्णसखंपृथक्ताः २१ गोप्यऊचुः -
यत्रयत्रलिखितंवदाशुनःकिंतुतच्चहरिणोक्तमद्भुतम् त्वंपरावरविदांहरेःसखामंत्रवित्तमतदाकृतिर्महान् २२
उद्धवउवाच यथास्मरथदेवेशंतथायुष्मान्स्मरत्यसौ अनुवेलंगोपवध्वःपश्यतोमेनसंशयः २३ एकदा-
मांसमाहूयस्मृत्वायुष्मान्रहस्करः कथयामाससंदेशंनिजस्थंनन्दनन्दनः २४ श्रीभगवानुवाच गुणे

तारवृन्दैरावेशपूर्णसहितश्चपरस्ययस्य सर्गादयःकिलभवंतितमेवकृष्णंपूर्णात्परंतुपरिपूर्णतमंनताःस्मः २३-
यज्ञसीताउवाच श्रीमन्निकुंजलतिकाकुसुमाकरोयंश्रीराधिकाहृदयकंठविभूषणोयम् श्रीराममंडलपतिर्व्रज
मंडलेशोब्रह्माण्डमंडलमहीपरिपालकोयम् २४ रमावैकुंठवासिन्यऊचुः योगोपिकासकलयूथमलंचकार
वृन्दावनंचनिजपादरजाभिरद्रिम् यःसर्वलोकविभवायबभूवभूमौतभूरिलीलमुरग्रेन्द्रभुजंभजामः २५ श्वेतद्वी
पसखीजनाऊचुः यथाशिलींध्रंशिशुरस्त्रमोगजःस्वपुष्करेणैवचपुष्करंगिरिम् धृत्वाबभौश्रीव्रजराजनन्दनःकृपा
करोसोनहिविस्मृतःक्वचित् २६ ऊर्ध्ववैकुंठवासिन्यऊचुः श्यामवर्णमयेनेत्रेजगच्छ्यामंविपश्यतः नद्वैतंदृश्यते
यासांताभिःकिंयोगसेवनम् २७ अजितपदाश्रिताऊचुः स्नेहपाशोहृढोच्छिन्नोनच्छिन्नोहरिणाविना छित्वा
तंमथुरांप्रागान्नागपाशंयथाखगः २८ लोकाचलवासिन्यऊचुः कृष्णलग्नंनेत्रयुग्मंधावद्दशदिशांतरम् अहो-
नलग्नंकुत्रापिपद्मलग्नोयथात्यलिः २९ श्रीसख्यऊचुः कार्पण्येनयशोहंतिक्रुधागुणगणोदयम् धनानिव्यस-
नैर्लोकःकपटेननमित्रताम् ३० मैथिलाऊचुः धनंदत्वातनुंरक्षेत्तनुंदत्वात्रपांव्यधात् धनंतनुंत्रपांदद्यान्मित्रका
र्यार्थमेवहि ३१ कौशलाऊचुः नकोपिजानातिवियोगजांदशांजीवंविनावक्तुमलंनसोपिहि भूयादुरोबाणवि-
भिन्नमारान्माभूत्कदापिप्रियविप्रयोजनम् ३२ अयोध्यापुरवासिन्यऊचुः कृत्वानिराशांविनिधायचाशांजगाम
चाशांमथुरापुरस्य योगंचतस्योपरिचालिखन्नोनिर्मोहिनांचित्रमहोविचित्रम् ३३ पुलिंदिकाऊचुः एनंवरंकर्तुम-
तीवविह्वलंसमागतांशूर्पनखांपुरावने यःकारयामासविरूपिणींबलात्सौमित्रिणातेनतुवःकृपाकृता‌म् ३४-
सुतलवासिन्यऊचुः भक्तंबलिंसत्यपरंचभूरिदंनीत्वाबलिंयःकुपितोबबन्धह अहोकथंतस्यकरोतिसेवनंमायाव

कदातथास्मत्समयोभविष्यतियथापुरंश्रीसमयःप्रदृश्यते शोचंपरंमाकुरुतव्रजांगनाःसदानकस्यापिज
यःपराजयः ११ विधातुर्नदयाकिंचिद्युनक्तिवियुनक्तियः भूतानिसकलान्येवक्रीडनानियथार्भकः १२ कु
ब्जापुराद्यर्जुसमानविग्रहादासीत्विदानींतुकुलीनतांगता कुरूपिणीरूपवतीबभावहोचतुर्दिनैर्दुंदुभिनादका-
रिणी १३ विरजायूथाऊचुः सदानकस्यापिभुजाप्रियासेसदावसंतोनसदायुवास्यात् इन्द्रोनराज्यंकुरु
तेसदेयंचतुर्दिनेमानमलंकरोतु १४ ललितायूथउवाच रामाभिषेकंविनिवार्य्यमंथराचकारविघ्नंकिल
कोसलापुरे कुब्जेवसेयंमथुरापुरेगताकुब्जेवकिंकिंनकरोतिगोपिकाः १५ विशारदायूथउवाच गोचा
रणायानुचरैर्व्रजंतंप्रबोधयंतंस्वपुरंविरावैः मत्तेभयानंहिविडंबयंतंश्रीनन्दसूनुंनहिविस्मरामः १६ मायायूथा
ऊचुः संकोचवीथीषुपटेप्रगृह्यप्रसह्यदोर्भ्यांहृदयेनिधाय अन्योन्यमाकर्षणहर्षभीतिगृहान्हरिस्तंहिकं
दानयामः १७ अष्टसख्यऊचुः वीक्ष्यनन्दसुतमंगसुन्दरंनेत्रमद्यनजगद्विपश्यति नन्दराजतनयेपुरीस्थि
तेकिंभविष्यतिवदाशुनस्त्वरम् १८ षोडशसख्यऊचुः वेणुनादमधुरध्वनिंवनेसंनिशाम्यकुरुकंपवर्द्धनम्
श्रोत्रयुग्ममिहनःशृणोतिनोविश्वगीतमुतवायशःपरम् १९ द्वात्रिंशत्सख्यऊचुः प्रीत्यास्वमित्रंहिरिपुंनये-
नलुब्धंधनैश्चद्विजमादरेण गुरुंप्रणामैरसिकंरसेननिर्मोहिनंकेनवशीकरोति २० श्रुतिरूपाऊचुः यज्जा-
गरादिषुभवेषुपरंत्वहेतुहेतुस्विदस्यविचरंतिगुणाश्रयेण नैतद्विशंतिमहदिन्द्रियदेवसंघास्तस्मैनमोग्निमिवविव-
स्तृतविस्फुलिंगाः २१ ऋषिरूपाऊचुः नैवेशितुंप्रभुरयंबलिनांबलीयन्मायानशब्दउतनोविषयीकरोति न
ब्रह्मपूर्णममृतंपरमंप्रशांतंशब्दपरात्परतरंशरणंगताःस्मः २२ देवांगनाऊचुः अंशांशकांशककलाद्यव-

अवधिःपादविक्षेपंवामनस्यकरोतिहि १२ पीतत्वंत्वग्गतापादौशैथिल्यंप्रगतोचनः मनोविभ्रमतासुग्रंमाधवंमा-
धवंविना १३ सपत्नीहारचिन्हाढ्यमागतंतमुषःक्षणे ह्यदैवकस्मिन्समयेद्रक्ष्यामोनन्दनन्दनम् १४ नारदउवाच
इतिकृष्णंचिंतयंत्योगोपिकाःप्रेमविह्वलाः उत्कंठितास्ताःरुरुदुर्मूर्छिताधरणींगताः १५ पृथक्पृथक्समाश्वा
स्यवचोभिर्नयनैर्गुणैः संबोध्यगोपिकाःसर्वाःप्राहराधांतदोद्धवः १६ उद्धवउवाच परिपूर्णतमेकृष्णेवृषभानु-
वरात्मजे गंतुमाज्ञांदेहिमत्थंनमस्तुभ्यंव्रजेश्वरि १७ प्रतिपत्रंदेहिशुभेश्रीकृष्णायमहात्मने तेनतंचप्रणम्याशु
समानेष्येतवांतिकम् १८ श्रीनारदउवाच अथराधालेखनींचनीत्वापत्रंमषेःस्वरम् समाचारंचिंतयंतीतावद
श्रूणिमुमुचुः १९ यद्यत्पत्रंसमानीतंराधयालेखनीयुतम् तत्तदार्द्रीकृतंजातंनयनांबुजवारिभिः २० अश्रुप्रवा
हंमुंचंतींकृष्णदर्शनलालसाम् उद्धवोविस्मयींप्राहराधांकमललोचनाम् २१ उद्धवउवाच कथंलिखसिराधेत्वं
कथंदुःखंकरोषिहि सर्वंतस्मैवदिष्यामिव्यथांत्वल्लेखनंविना २२ श्रीनारदउवाच इतिश्रुत्वावचस्तस्यराधया
गतबाधया सर्वाभिर्गोपिकाभिश्चपूजितोभूत्तदोद्धवः २३ नत्वाप्रदक्षिणीकृत्यराधांरासेश्वरींपराम् गोपीगणम
नुज्ञाप्यनत्वानत्वापुनःपुनः २४ रथमारुत्यदिव्याभंरत्नभूषणभूषितः गतमत्यतिमानोसौसंध्यायांनन्दमाययौ
२५ मार्तंडउदयंप्राप्तेनत्वागोपींयशोमतीम् नन्दराजमनुज्ञाप्यनवनन्दांस्तदोद्धवः २६ वृषभानूपनन्दांश्चसमनु-
ज्ञाप्यलोकतः तथाकृष्णसखान्सर्वान्रथमारुह्यनिर्गतः २७ दूरंतमनुगाःसर्वेगोपागोपीगणास्तथा संनिवृ
त्याथतान्स्नेहादुद्धवोमथुरांययौ २८ एकांतेचाक्षयवटेकृष्णातीरेमनोहरे नत्वाकृष्णंपरिक्रम्यप्रेमगद्गदयागिरा
२९ प्राहस्वनेत्रपद्मउद्धवोबुद्धिसत्तमः ३० उद्धवउवाच किंदेवकथनीयंमेभवतोऽशेषसाक्षिणः विधत्स्व-

दोर्वामनरूपधारिणः ३५ जालंधर्य्यऊचुः पुरानिकष्टंप्रगतेसुरोत्तमेकायाधवेभक्तवरेततोत्ययम् भूत्वानृसिं
हः कृतवान्सहायमहोपरानिष्ठुरतामदृश्यते ३६ भूमिगोप्यऊचुः अहोतिनिर्मोहिजनस्यचित्रंपरंचरित्रंगदितुंन
योग्यम् मुखेन्यचान्यद्धृदिभाव्यमन्यद्दैवोनजानातिकुतोमनुष्यः ३७ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुरा-
खंडेनारदबहुलाश्वसंवादेश्रीकृष्णस्मरणेगोपीवाक्यंनामसप्तदशोऽध्यायः १७ वर्हिष्मतीभवाऊचुः अहो-
लयाब्धौकृपयाहरिर्यामुद्धृत्यवाराहतनुर्महात्मा तामन्वधावन्धृतमंजनीशारोभूत्वादयालुःपृथुरादिराजः १ लता
गोप्यऊचुः स्वयंसुधांवानविभज्यपूर्वंधन्वंतरिर्विश्वभिषङ्महात्मा तद्वद्वैरेषुसुरास्करेषुभूत्वाथयोषित्प्रददौकलिप्रि-
यः २ नागेन्द्रकन्याऊचुः अथेच्छतीमेनमहोवरंहरिःसमागतांशूर्पणखांमहावने चकारसौमित्रिसखःकुरूपिणी
महोकृतंतस्यतयाकिमप्रियम् ३ समुद्रकन्याऊचुः नित्यंगृहंशान्तयांतिदात्रीदुःखंसुखंजनान् स्वीयाकथंस्फू-
शीलाचचंचलास्मिन्कथंस्थिता ४ अप्सरसऊचुः अस्यश्रीत्याकर्णनासेगतेवैरावणस्वसुः त्यजंतुवार्तांते
नापिभवतीनांकृपाकृता ५ दिव्याऊचुः सर्वेश्वरोबलिंनीत्वाबलिंबध्वादयापरः अधोक्षिपन्मुक्तिनाथश्चि
त्रंतत्कथयाभवत् ६ अदिव्याऊचुः शतरूपायुतंशांतंतपस्यंतंमनुंपुरा दैत्यैर्बाधांगतंपश्चाद्ररक्षासौदयानि-
धिः ७ सत्ववृत्तयऊचुः पूर्वंकष्टगतंभक्तंध्रुवंकायाधवंचवै पश्चाद्ररक्षकृपयानपूर्वंदीनवत्सलः ८ रजोवृत्तय
ऊचुः रुक्मांगदहरिश्चन्द्रांबरीषाणांसतांहरिः सत्यंपरीक्षांत्प्रददौपुनर्भागवतींश्रियम् ९ तमोवृत्तयऊचुः
वृन्दायेनच्छलंप्राप्ताच्छलिनाबलिनापुरा छलमध्यावलिन्याद्यकुब्जयाच्छलितोत्ययम् १० कृपाणीह्येकतोवक्
राघातयंतीजनान्बहून् किंमुकुब्जाभिवक्राचश्रीकृष्णेनत्रिभंगिना ११ पश्यंतीनांकृष्णमार्गेनेत्रेदुःखंगतेभृशं

वारीणिपरिरेभेपृथक्पृथक् अहोभक्तेश्चमाहात्म्यंवक्तुंकोस्तिमहीतले १४ तेसर्वेरुरुदुर्गोपाश्चुंचंतोश्रूणिमै-
थिल प्रवक्तुंनसमर्थाःश्रीकृष्णविक्षेपविह्वलाः १५ परिपूर्णतमःसाक्षाद्देवोमधुरयागिरा आश्वासयामास
नतान्प्रेमानन्दसमाकुलान् १६ उद्धवःप्रेषितोवक्तुंश्रीकृष्णेनार्भकैःसह आगतंकथयामासश्रीकृष्णंनन्दपत्त
ने १७ श्रुत्वागतंनन्दसूनुंश्रीकृष्णंगोपवल्लभम् आनेतुंनिर्गताःसर्वेपरिपूर्णमनोरथाः १८ भेरीमृदंगैःपटहैः
कलस्वनैरप्पूर्णकुंभैर्द्विजदेवघोषणैः गन्धाक्षतैर्मंगलराजमिश्रितैःश्रीनन्दराजोभिययौयशोदया १९ ततःपु
रस्कृत्यमनोन्नतगजंसिन्दूरशुंडाधृतहेमशंखलम् समाययौश्रीवृषभानुमुख्योभान्वाकृतिस्तत्रकलावतीयुतः २०
नन्दोपनंदावृषभानवश्चगोपाश्चवृद्धास्तरुणार्भकाश्च स्रग्वेणुगुंजापरिपिच्छयुक्ताविनिर्गताःपूर्णमनोरथास्ते २१
गायंतश्चारान्नृपनन्दनन्दनंनृत्यंतश्चावालितपीतवाससः वंशीधरोवेत्रविषाणपाणयःप्रहर्षितादर्शनलालसाभृ
शम् २२ सखीमुखेभ्योहरिमागतंपरंनिशम्यराधाशयनात्समुत्थिता ताभ्यःस्वभूषाःप्रददौप्रहर्षिताप्रीतास्व
गन्धिंनवपद्मिनीयथा २३ द्वात्रिंशदष्टौकिलषोडशद्वैर्यूथैर्युतामैथिलगोपिकानाम् आरुह्यराधांशिबिकांमनो-
ज्ञांसमाययौश्रीधरदर्शनार्थम् २४ तथाहिगोप्यःकिलकोटिशश्चत्यक्त्वाथसर्वंस्वगृहस्यकृत्यम् वित्यस्तवस्त्रा
भरणानृपेशंसमाययुःप्रेमचलन्मनोगाः २५ सर्वंब्रजंपादपगोमृगद्विजंप्रेमातुरंवीक्ष्यसमागतंकिमु श्रीनन्दराज
पितरंचमातरंननामकृष्णःकृतमस्तकांजलिः २६ श्रीनन्दराजस्तनयंचिरागतंप्रगृह्यदोर्भ्यांत्हृदयेनिधायतम्
संस्नापयामाससुनेत्रजैर्जलैर्यशोदयाप्राप्तमनोरथश्चिरात् २७ नंदोपनन्दान्वृषभानुवृद्धान्सर्वान्नमस्कृत्यच
तत्कृताशीः तथावयस्यैश्चपरस्परंवालघुचहस्तग्रहणैःस्थितोभूत् २८ ततःसमारुह्यरथंहरिःस्वयंनिधाय-

शंराधिकायागोपीनांदेहिदर्शनम् ३१ श्रीकृष्णंदेवदेवेशंसमानेष्येतिवांतिकम् इत्थंवाक्यंचमेभूतंरक्षरक्षकृपानि
धे ३२ प्रह्लादरुक्मांगदयोःप्रतिज्ञांबलेश्चरवट्टांगनृपस्यसाक्षात् यथांबरीषध्रुवयोस्तथामेकृत्तावभक्तेश्वरर
क्षरक्ष ३३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीमथुराखंडेनारदबहुलाश्वसंवादेगोपीवाक्येउद्धवागमननामाष्टाद
शोऽध्यायः १८ श्रीनारदउवाच इत्थंनिशम्यभक्तस्यवचनंभक्तवत्सलः स्मृत्वावाक्यंस्वकथितंगंतुंच
क्रेच्युतोमतिम् १ बलदेवंस्थापयित्वाकार्यभारेषुसर्वतः हेमाढ्यंकिंकिणीजालंचचलाश्वनियोजितम् २
रथमारुह्यदिव्याभंमुद्धवेनसमन्वितः भक्तानांदर्शनंदातुंप्रययौनन्दगोकुलम् ३ गोवर्द्धनंगोकुलंचपश्यन्वृ
न्दावनंवनम् प्राप्तोभूत्पुलिनेकृष्णःकृष्णातीरेमनोहरे ४ कोदिशःकोदिशोगावोदृष्ट्वाकृष्णंव्रजाधिपम् अ
धावंत्यःसर्वतस्तत्स्नेहस्नुतपयोधराः ५ उदास्यकर्णबालाश्चरंभमाणाःसवत्सकाः मुखकवलसंयुक्ताश्च
श्रुमुख्योगतव्यथाः ६ सरथंसारुणंशाश्वंशरदर्कंयथाघनाः रुरुधुस्तंरथंराजन्नुद्धवस्यप्रपश्यतः ७
श्रीगोपालोहरिस्तासांवदन्नामपृथक्पृथक् श्रीहस्तेनतदंगानिस्पर्शंहर्षजगामह ८ तत्समीपेगवांवृन्दं
गतंवीक्ष्यव्रजार्भकाः श्रीदामाद्याविस्मिताश्चदूरादूचुःपरस्परम् ९ गोपाऊचुः रथसकुंभध्वजवायुवेगं
सुकांस्यपत्रध्वनिप्रध्वनंतम् शताश्वयुक्तंशतसूर्यशोभंमृगावःकथंवारुरुधुःसखायः १० अन्योनचास्मि
न्हिगवांप्रहर्षणेरायातिकिंतुव्रजराजनन्दनः स्फुरंतिचांगानिहिदक्षिणानिनःश्रीनीलकंठःप्रतनोतितोरणम्
११ श्रीनारदउवाच इत्थंविचार्य्यमनसागोपाःसर्वेसमागताः ददृशुर्माधवंमित्रंगतंवस्तुयथाजनाः १२
अवप्लुत्यरथात्कृष्णःपरिपूर्णतमःस्वयम् उरोनिधायतान्सर्वान्दोर्भ्यांतत्प्रेमविह्वलः १३ मुंचन्नेत्राश्र

गोप्योगदितुंनक्षमाः क्वचित् शरच्चन्द्रचकोरीवमयूरीवघनंनवम् १५ श्रीवृन्दावनचंद्रंत्वांघनश्यामंसमुत्सहे तवस
रव्योद्भवेनात्रधन्येनत्वंप्रदर्शितः अन्यः कोपिव्रजेनास्तियस्यप्रेम्णात्वमागतः १६ नारदउवाच एवंवदंतींसततंरुदंतीं
परांश्रियावीक्ष्यघृणातुरांगः आश्वासयामासनयेनसद्यः प्रगृह्यदोर्भ्यांस्ववदंबुनेत्रः १७ श्रीभगवानुवाच मा-
शोचंकुरुराधेत्वंत्वत्प्रीत्याहंसमागतः आवयोर्भेदरहितंतेजश्चैकंद्विधाजनैः १८ यथाहिदुग्धधावल्यंतथावांसर्व
दाशुभे यत्राहंत्वंसदातत्रविश्लेषोनहिचावयोः १९ पूर्णब्रह्मपरंचाहंतदस्थाहंजगत्प्रसूः विश्लेषश्चावयोर्मध्येमृ
षाज्ञानेनपश्यसत् २० यथाकाशः स्थितोनित्यंवायुः सर्वत्रगोमहान् तथाजलंसूक्ष्मरूपंतेजोव्याप्तंयथैधसि २१ अं
तर्बहिर्यथापृथ्वीपृथग्भूतावरानने तथाविकाररहितोमलवत्रिगुणैरहम् २२ तथात्वंपश्यमद्भावंसदानन्दोभवेत्ततः
अहंममेतिभावेनद्वितीयोस्तिवरानने २३ यावद्वनेमध्यगतस्तदुत्थितः स्वंरूपमर्कंनहिदृक्प्रपश्यति तावत्परात्मा-
नमसोप्रधानजैर्गुणैस्तथातेषुगतेषुपश्यति २४ गुणेषुसक्तंकिलबन्धनायरक्तंमनः पुंसिचमुक्तयेस्यात् मनोद्वयोः-
कारणमाहुराराज्जित्वाथतत्कोविचरेदसंगः २५ सर्वंहिभावंमनसः परस्परंनह्येकतोभामिनिजायतेतः प्रेमैवकर्तव्य
मतोमयिस्वतः प्रेम्णासमानंभुविनास्तिकिंचित् २६ नारदउवाच इतिवाक्यंहरेः श्रुत्वाप्रसन्नाकीर्तिनंदिनी गोपिका-
भिः समंकृष्णंपूजयामासमाधवम् २७ अथराज्यांहरिः साक्षात्कार्तिक्यांरासमंडले गत्वाननादमुरलींगोपीभीरा
धयासह २८ यमुनानिकटेराजन्राधयाराधिकापतिः रामाभिः सुन्दरीभिश्चरासरंगेरराजह २९ यावतीर्गोपिका
रासेतावद्रूपधरोहरिः रेमेवृंदावनेदिव्येहरिर्वृन्दावनेश्वरः ३० क्वणन्नूपुरमंजीरोवनमालाविराजितः पीतांबरः पद्म
हारीप्रभातोर्ककिरीटधृक् ३१ विद्युल्लतास्फुरत्प्रोद्यद्धेमकुंडलमंडितः वेत्रभृद्वादयन्वंशींनटवेशोघनद्युतिः ३२-

नंदंचगर्जेयशोदया नंदोपनंदैःसहितोगवांगणैः श्रीनंदराजस्यपुरंविवेशसः २९ तदैवदेवाःकिलपुष्पवर्षाश्चाचारलाजंपुरगोपिकाश्च प्रचक्रिरेतत्रजयेतिमंगलंशब्दंचगोपागृहमागतेहरौ ३० धन्यःसखानेपरमुद्भवोयमनेनसाक्षात्किलदर्शितोत्र त्वंजीवनंगोपजनस्यगोपाऊचुर्गिरागद्गदयेदमार्त्ताः ३१ इदंमयातेकथितंनृपेशपुनर्व्रजेत्यागमनंहरेश्च किमिच्छसिश्रोतुमथोस्फुरासुरैःपरंचरित्रंशुभदंविचित्रम् ३२ इतिश्रीमद्ग० सं० मथुराख० नारदब० संवादेश्रीकृष्णागमनोत्सवंनामैकोनविंशोऽध्यायः १९ बहुलाश्वउवाच अग्रेचकारकिंसाक्षाद्भगवान्व्रजमंडले राधायैगोपिकाभिश्चकथंस्विद्दर्शनंददौ १ गोपीमनोरथंकृत्वामथुरामाजगामह एतन्मेब्रूहिविप्रेंद्रत्वंपरावरवित्तमः २ नारदउवाच संध्यायंराधयाहूतःश्रीकृष्णोभगवान्स्वयम् एकांतेशीतलंशश्वज्जगामकदलीवनम् ३ स्फारास्फुरन्मेघगृहंरंभाचंदनचर्चितम् कृष्णामरुत्सीकरंचस्फुधारश्मिगलत्स्फुधम् ४ एतादृशंवनंराधावियोगानलवर्चसा भस्मीभूतंहिसततंकृष्णाशातांहिरक्षति ५ तत्रैवसर्वगोपीनांशतयूथाःसमागताः तस्यैनिवेदनंचक्रुर्माधवागमनस्यहि ६ उत्थायसहसासाक्षाद्वृषभानुवरात्मजा आनेतुमाययौकृष्णंसखीभिःपरिवारिता ७ ददावासनपद्याद्यानुपचारान्मनोहरान् वदंतीसादरंवाक्यंकुशलंकुशलाधिका ८ युवकंदर्पकोटीनांमाधुर्य्यहारिणंहरिम् दृष्ट्वाराधाजहौदुःखंब्रह्मज्ञात्रिगुणंयथा ९ प्रसन्नातत्रशृंगारमकरोत्कीर्तिनंदिनी तयानोकारिशृंगारःपांथेकृष्णेगतेसति १० नचंदनंचताम्बूलंभोजनंचस्फुधासमम् नकृतंदिव्यशयनंहास्यंवानकृतंक्वचित् ११ परिपूर्णतमंकृष्णंपरिपूर्णतमप्रिया आनंदाश्रूणिमुंचंतीप्राहगद्गदयागिरा १२ राधोवाच कियद्दूरेयदुपरिनागतंकिंकरोषिहि किंवदेहंरहोदुःखंभवतोऽशेषसाक्षिणः १३ सौदासराजमहिषींदमयंतींचमैथिलीं नास्त्यत्रकांपुरस्कृत्यवदेहंविरहंरिपुम् १४ मत्समानाश्रया-

संधितविग्रहाभ्यांनमोस्तुवाम्यांहरिराधिकाभ्याम् ५२ नारदउवाच इत्युक्त्वाकृष्णपादाब्जेप्रक्षरद्बाष्पलोचनः प्रेमा
नंदसमायुक्तोजहौप्राणान्महामुनिः ५३ तदैवनिर्गतंज्योतिर्दृशसूर्यसमप्रभम् परिभ्रमद्दशदिशःश्रीकृष्णेलीनतांग
तं ५४ भक्तस्यभक्तिंश्रीकृष्णोवीक्ष्यवैप्रेमलक्षणाम् आनंदाश्रुकलांमुंचन्प्रेम्णातंचाजुहावह ५५ पुनःश्रीकृष्ण
पादाब्जात्कृष्णसारूप्यवान्मुनिः निर्गतःकोटिकंदर्पसन्निभोतिनताननः ५६ दोर्भ्यांप्रगृह्यहृदयेतंनिधायकृपाकरः
आश्वस्यकल्याणकरंकरंदिव्यंदधारह ५७ प्रदक्षिणीकृत्यहरिंचराधिकांप्रणम्यचारुत्यरथमनोहरम् गोलोकलोकं
प्रययावृभुर्मुनिर्विरंजयन्मैथिलमंडलंदिशाम् ५८ श्रीराधिकाविस्मयमागताभृशंदृष्ट्वापरांमुक्तिमृभोर्महामुनेः आनं
दवारीणिविमुंचतीविरंजगादकृष्णंवृषभानुनंदिनी ५९ इतिश्रीमद्ग० मथु० खं० नारदबहु० सं० रासोत्सवेऋभुमोक्षं
नामविंशोऽध्यायः २० राधोवाच धन्योयंमुनिशार्दूलस्त्वद्भक्तःप्रेमवान्महान् त्वत्सारूप्यंजगामासोत्वमप्यश्रुमुखो
यतः १ अस्यदेहक्रियांकर्तुंयोग्योसित्वंजनार्दन तपसाचास्यदेहोयंप्रस्फुरत्यमलाकृतिः २ नारदउवाच वदंत्यां
तत्रराधायांतद्देहोप्यभवत्सरित् वहंतीपापहंत्रीचदृश्यतेरोहितेगिरौ ३ तद्देहस्यापिसरितंवीक्ष्यराधातिविस्मिता नन्दरा
जात्मजंप्राहवृषभानुवरात्मजा ४ राधोवाच कथंजलत्वमापन्नोदेहोयंवैमहामुनेः एतन्मेसंशयंदेवछेत्तुमर्हस्यशेषतः
५ श्रीभगवानु० प्रेमलक्षणयाभक्त्यासंयुतोयंमुनीश्वरः तस्मादस्यतुदेहोयंरम्भोरुद्रवतांगतः ६ दृष्ट्वात्वयामांवरदं
हर्षितोभून्महामुनिः जलत्वंप्रापतद्देहोयथाहंद्रवतांपुरा ७ श्रीराधोवाच द्रवतांत्वंकथंप्राप्तोदेवदेवदयानिधे एत
च्चित्रंहिमेजातंसर्वंत्वंवदविस्तरात् ८ श्रीभगवानु० अत्रैवोदाहरंतीममितिहासंपुरातनम् यस्यश्रवणमात्रेणपा
पहानिःपरंभवेत् ९ यन्नाभिपंकजाज्जातःपुराब्रह्माप्रजापतिः असृज्यस्त्वत्कृतंशश्वत्तपसामद्धरोर्जितः १० उत्सं

स्फुरत्कौस्तुभरत्नाढ्यः प्रचलत्स्निग्धकुंडलः रराजराधयारासेयथारत्यारतीश्वरः ३३ शच्याशक्रोयथास्वर्गेघन
श्चंचलयायथा वृन्दायावृन्दकारण्येतथावृंदावनेश्वरः ३४ वृंदावनंचपुलिनंवनान्युपवनानिच पश्यन्गोपीगणैःसार्द्धं
गिरिंगोवर्द्धनंययौ ३५ गोपीनांशतयूथानांमानंवीदयब्रजेश्वरः भगवान्राधयासाकंतत्रैवांतरधीयत ३६ अथगो
वर्द्धनाद्दूरेस्कन्दरंयोजनत्रयम् श्रीखंडगंधसंयुक्तंसययौरोहितानलम् ३७ लताकुंजनिकुंजांश्चपश्यन्जल्मनतया-
सह विचचारगिरौरम्येकांचनीलनिकालये ३८ तत्रदेवसरोरम्यंबद्रिनाथेननिर्मितम् पाठीनकूर्मनक्रादिहंससारस
संकुलम् ३९ सहस्रदलपद्मैश्चमंडितंनडितस्ततः भ्रमरध्वनिसंयुक्तंपुंस्कोकिलरुतव्रतम् ४० विकचत्पद्मगंधा-
ढ्यतत्तीरेमंदमारुते रमयाराधयासार्द्धंमाधवोनिषसादह ४१ तत्तीरेअनपस्यंतंऋभुनाममहामुनिम् पदैकेन-
स्थितंशश्वच्छ्रीकृष्णध्यानतत्परम् ४२ षष्टिवर्षसहस्राणिषष्टिवर्षशतानिच निरन्नंनिर्जलंशांतंश्रीकृष्णस्तंददर्शह
४३ पप्रच्छवीक्ष्यतंराधाहसंतीप्राहमाधवः माहात्म्यंकुरुभक्तोयंपश्यभक्तिंमहामुनेः ४४ हेऋभोइतिकृष्णेनप्रो
क्तमुच्चैर्वचःशुभम् नश्रुततेनकिंचिद्वाचरमप्रापितेनवे ४५ हरिस्तदातद्धृदयाद्बभूवाशुतिरोहितः ध्यानाद्गतंहरिंवी-
क्ष्यमुनीद्रश्चातिविस्मितः ४६ नेत्रेउन्मील्यददृशेश्रीकृष्णंराधयागतम् घनंचंचलयेवाद्यंरंजयंतंदिशोदश ४७ उत्था
यसद्योहरिभक्तितत्परःप्रदक्षिणीकृत्यहरिंसराधिकम् प्रणम्यमूर्द्धानिपपातपादयोरुवाचकृष्णंबहुगद्गदाक्षरः
४८ श्रीऋभुरुवाच नमःकृष्णायकृष्णायैराधायैमाधवायच परिपूर्णतमायैचपरिपूर्णतमायच ४९ घनश्यामाय
देवायश्यामायैसततंनमः रासेश्वरायसततंरासेश्वर्य्यैनमोनमः ५० गोलोकातीवलीलायलीलावत्यैनमोनमः -
असंख्यांडाधिदेव्यैचासंख्यांडनिधयेनमः ५१ भूभारहारायभुवंगताभ्यांमच्छांतयेचात्रसमागताभ्याम् परस्परं

३० जातोहिरण्यगर्भस्यपुत्रोनारदनामभाक् प्रेमोन्मत्तोविकालेनगायन्ध्रुवपदानिच ३१ विचचारमहीमेतांस्वेच्छयास
महामुनिः विकालेतस्यगानैश्चविस्वरैस्तालवर्जितः ३२ विमानैश्चवयंसर्वेछिन्नांगभंगाबभूविम इतिश्रुत्वाथतद्वाक्यंनार
दोविस्मयोभवत् उवाचगतमानोसौरागान्परिहसन्निव ३३ मुनिरुवाच तस्यकेनप्रकारेणज्ञानंवैकालतालयोः भ
वेदिहस्वरैर्युक्तंवदताशुममैवहि ३४ रागाऊचुः वैकुंठस्यपतेःसाक्षात्प्रियामुख्यासरस्वती कुर्याच्छिक्षांयदातस्मै
तदास्यात्कालवित्मुनिः ३५ तेषांवाक्यंततःश्रुत्वानारदोदीनवत्सलः सरस्वत्याःप्रसन्नार्थंत्वरंशुभांगिरंययौ ३६ दि
व्यवर्षशतंशश्वत्तपस्तेपेसुदुष्करम् निरन्नंनिर्जलंवाणीध्यानयुक्तंव्रजेश्वरि ३७ शुभनामविसृज्याथपवित्रीकृतभू
परम् नारदोनामशैलोभूत्तपसानारदस्यच ३८ तपोंतेआगतांसाक्षाद्वाग्देवींश्रीसरस्वतीम् विष्णोःप्रियांदिव्यवर्णाम्
पश्यन्नारदोमुनिः ३९ सहसोत्थायतांनत्वापरिक्रम्यनताननः तद्रूपगुणमाधुर्यस्तुतिंचक्रेमुनीश्वरः ४० नारदउवाच
नवार्कबिंबद्युतिमुक्तलद्भलत्ताटंककेयूरकिरीटकंकणाम् स्फुरत्क्वणन्नूपुररावरंजितानमामिकोटींदुमुखींसरस्व-
तीम् ४१ वंदेसदाहंकलहंसउद्भतेचलत्पदेचंचलचंचुसंपुटे निर्धौतमुक्ताफलहारसंचयंसंसारयंतींसुभगांसरस्व
तीम् ४२ वराभयंपुस्तकवल्लकीयुतंपरंदधानांविमलेकरद्वये नमाम्यहंत्वांशुभदांसरस्वतींजगन्मयींब्रह्ममयींमनोह
राम् ४३ तरंगितक्षौमसितांबरेपरेदेहिस्वरज्ञानमतीवमंगले येनाद्वितीयोहिभवेयमक्षरेसर्वोपरिस्यांपररासमंड-
ले ४४ श्रीभगवानुवाच स्तोत्रंजाड्यापहंदिव्यंप्रातरुत्थाययःपठेत् नारदोक्तंसरस्वत्याःसविद्यावान्भवेदिह ४५ त
तःप्रसन्नावाग्देवीनारदायमहात्मने देवदत्तांददौवीणांस्वरब्रह्मविभूषिताम् ४६ रागैश्चरागिणीभिश्चतत्पुत्रैश्चतथैवच
देशकालादिभेदैश्चतालमानस्वरैःसह ४७ षट्पंचाशत्कोटिभेदैरंतभेदैरसंख्यकैः ग्रामैर्नृत्यैःसवादित्रैर्मूर्छनास

112

गान्नारदोयज्ञेब्रह्मणःसृजतःशुभः भक्त्युन्मत्तोमत्पदानिजगौपर्य्यैत्यन्महीम् ११ एकदानारदंप्राहदेवोब्रह्माप्र
जापतिः प्रजाःसृजमहाबुद्धेवृथाचंक्रमणंत्यज १२ नारदस्तद्वचःश्रुत्वाप्राहेदंज्ञाननत्परः नसृजामिपितःसृष्टिंशो
कमोहादिकारिणीम् १३ करिष्यामिहरेर्भक्तिंतत्कीर्तनसमन्विताम् त्वमपिसृष्टिरचनांत्यजदुःखातुरोभृशम् १४
क्रुद्धःशशापतंब्रह्माप्राहप्रस्फुरिताधरः सदागानपरःकल्पंगन्धर्वोभवदुर्मते १५ एवंतच्छापतोराधेगन्धर्वउपब-
र्हणः बभूवगन्धर्वपतिःकल्पमात्रंसुरालये १६ एकदाब्रह्मणोलोकेस्त्रीभिःपरिवृतोगतः सुन्दरीषुमनःकृत्वाज्ञ
गौतालविवर्जितम् १७ पुनर्ब्रह्मातंशशापत्वंशूद्रोभवदुर्मते अथासौब्रह्मशापेनदासीपुत्रोबभूवह १८ सत्संगे
नपुराराधेप्राप्तोभूद्ब्रह्मपुत्रताम् भक्त्युन्मत्तोमत्पदानिजगौपर्य्यटयन्महीम् १९ मुनीन्द्रोवैष्णवश्रेष्ठोमत्प्रियोज्ञान
भास्करः परंभागवतःसाक्षान्नारदोमेमनःसदा २० एकदानारदोलोकान्पश्यन्वैगानतत्परः इलावृतंनामखं
डंगतवान्सर्वतोगतिः २१ यत्रजंबूनदीश्यामाजंबूफलरसोद्भवा तथाजंबूनदंनामसुवर्णंभवतिप्रिये २२ तद्देशेवै
दनगरंरत्नप्रासादनिर्मितम् ददर्शनारदोयोगीदिव्यनारीमयैर्वृतम् २३ कांश्चिद्वैपादरहितान्विगुल्फान्जानुव-
र्जितान् विजंघान्जघनव्यंगान्कृशोरूञ्कुब्जमध्यकान् २४ श्लथद्वारुन्नतस्कंधान्नतानननविकंधरान् स्त्रीजना
न्पुरुषानासौअंगभगान्ददर्शह २५ अहोकिमेतच्चित्रंहिसर्वान्दृष्ट्वावदन्मुनिः सर्वेयूयपद्मसुखादिव्यदेहाशुभांव
राः २६ किंदेवाउपदेवावायूयंकिन्नरऋषिसत्तमाः वाद्यिसहिताःसर्वेरम्यगानपरायणाः २७ अंगभंगाःकथंयूयंव
दताशुममैवहि इत्युक्तास्तेननेसर्वेप्रत्यूचुर्दीनमानसाः २८ रागाऊचुः महादुःखंमुनेजातमस्माकंतनुसुखनः न-
स्यात्मेकथनीयंवैदूरीकर्त्तुंचयःक्षमः २९ रागाऊचुर्यत्ससुरेवस्मामःसर्वदामुने अंगभंगावयंजाताःकारणंशृणुमानद

फलच्छन्नेसरवीकोटिसमन्विते महापद्मस्थितंसाक्षात्त्वयामांतावपश्यतां १८ नत्वाप्रदक्षिणीकृत्यतत्रस्थित्वामदाज्ञया
स्तुत्वामांमद्गुणान्वक्तुंतेनासावुपचक्रमे १९ आतोद्यंविनदन्वीणांदेवदत्तांस्वरामृतं कलांजगामहृतीयंनारदःसहतुंबरुः २०
संतुष्टोहंशिरोधुन्वन्तंतंश्लाघ्यंचतत्स्वरं दत्वात्मानंप्रेमपरोजलत्वंगतवानहं २१ यज्जलंमद्वपुर्जातंतंहिब्रह्मद्रवंविदुः को
टिशःकोटिशोंडानांराशयःसंलुठंतिहि २२ इंद्रायनफलानीवान्नतेतस्मिञ्जलेशुभे पृथ्वीगर्भमिदंराधेब्रह्मांडमत्पदस्पृ
ष्टं २३ भित्वातत्त्वागतंसाक्षादस्मिन्मन्वंतरेशुभे तत्स्वर्धुनींविदुःपूर्वेश्रीगंगापापहारिणीं २४ दिविमंदाकिनीप्रोक्तागंगा
भागीरथीक्षितौ अधोभोगवतीप्रोक्तात्रिधात्रिपथगामिनी २५ यत्स्नातुंगच्छतःपुंसःप्रणतस्यपदेपदे राजसूया-
श्वमेनांफलमस्तिहिदुर्लभे २६ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति २७
दृष्ट्वाजन्मशतंपापंपीत्वाजन्मशतत्रयं स्नात्वाजन्मसहस्रेणहंतिगंगाकलौयुगे २८ सफलंजन्मवैतेषांयेपश्यंतिहिजा
न्हवीं वृथाजन्मगतंतेषांयेनपश्यंतिजान्हवीं २९ यथाहंद्रवतांप्राप्तोविरजात्वंद्रुयाद्यथा प्रापुर्द्रवत्वंरंभोरुविरजायाः
सुतायथा ३० यथाकृष्णानदीविष्णुर्वेणीदेवःशिवोयथा ब्रह्माककुद्मिनीगंगागंडकीचयथास्वराः ३१ तथाद्रवत्वंसंप्राप्त
ऋभुर्नामाच्युतंमुनिः प्रेमलक्षणयाभक्त्याचरूपोवर्त्तनानसंशयः ३२ यःशृणोतिकथामेतांपवित्रांपापहारिणीं उल्लंघ्यसर्वा
लोकांश्चमल्लोकंयातिमानवः ३३ नारदउ॰ एवमुक्त्वाप्रियाराधामृभोराश्रमतोहरिः राधयासहितोराजन्नाययौमालतीवनं
३४ गोपीनांविरहंज्ञात्वाभगवान्भक्तवत्सलः राधयाप्रययौकृष्णापुलिनंमंगलायनं ३५ तदागोपीगणाःसर्वेगतमानाग
तव्यथाः जगृहुस्तंघनश्यामंसौदामिन्योघनंयथा ३६ वृंदावनेहरिःसाक्षात्कृष्णातीरेमनोहरे जगौकलंगोपिकाभिर्वं
शीवादनतत्परः ३७ भगवत्कलरागेणमूर्छितागोपकन्यकाः नद्योवेगतरहिताअचरत्वंहिपक्षिणः ३८ मौनत्वंदेवताःसर्वा

हितैःशुभैः ४८ वैकुंठस्यपतेःसाक्षात्प्रियामुख्यासरस्वती स्वरगम्यैःपदैःसिद्धैःपाठयामासनारदं ४९ अद्वितीयंरा
गकरंकृत्वातंरासमंडले वैकुंठंप्रययौराधेवाग्देवीविष्णुवल्लभा ५० इतिश्रीमद्ग॰ मथुराखं॰ नारदबहुलाश्वसंवादेनार
दोपाख्यानंनामैकविंशोऽध्यायः २१ श्रीभगवानुवाच कस्मैदेयमिदंगुत्यंरागरूपंमनोहरं बुद्ध्याविचारयन्नित्यंगंध
र्वनगरंययौ १ तुंबरंनामगंधर्वंकृत्वाशिष्यंसनारदः कलंजगौमदुणाश्चवीणावाद्यपरायणः २ केषामग्रेगेयमिदंरा
गरूपंमनोहरं श्रोतुपात्रंविचिन्वतनारदःशक्रमाययौ ३ अनिवृत्तंचतंदृष्ट्वानारदोमुनिसत्तमः सख्यातुंबुरुणा
सार्द्धंसूर्यलोकंजगामह ४ रथेनतंप्रधावंतंसूर्यंवीक्ष्यमहामुनिः शिवपार्श्वंजगामाशुततोदेवर्षिसत्तम ५ भूते
शज्ञानतत्वज्ञंध्यानस्तिमितलोचनं वीक्ष्यतंनारदोराधेब्रह्मलोकंजगामह ६ सृजंतंसृष्टिरचनांव्यग्रंवीक्ष्यवि-
धिंमुनिः वैकुंठंप्रययौविष्णोःसर्वलोकनमस्कृत ७ भक्तार्थंकुत्रगच्छंतंभक्तेशंभक्तवत्सलं वीक्ष्यतुंबुरुणा-
सार्द्धंयोगींद्रःप्रययौततः ८ योगीश्वराणांहिसतांत्रैलोक्यामंतरबहिः गतिमाहुर्नाशुवंतिकर्मभिर्वृषभानुजे ९ को
टिशोत्वंडनिचयान्समुल्लंघ्यमुनीश्वरः गोलोकंपरमंधामप्रययौप्रकृतेःपरं १० समुत्तीर्याशुविरजांनदींकल्लोल-
शालिनीं ययौवृंदावनंरम्यंभ्रमरध्वनिसंकुलं ११ सदावसंतर्तुयुतंमरुदंजल्लतागृहं दृष्ट्वागोवर्द्धनंशैलंमन्निकुंजं
समाययौ १२ कोयुवांकुतआयातःकिंकार्यंवदतंचनः इत्थंसखीभिःसंदृष्टावूचतुर्मुनितुंबरु १३ गायकौकुशलौरा-
माआवांवीणाकलध्वनिं परिपूर्णतमंसाक्षाच्छ्रीकृष्णंराधिकापतिं १४ कलंपरंश्रावयितुमागतौवंदिनावरौ कथनी
यमिदंवाक्यंश्रीकृष्णायमहात्मने १५ श्रुत्वासख्यस्तथामत्वानिवेद्याथमदाज्ञया आगत्याज्ञांददुर्यातुवंदिभ्यांमृदु
यागिरा १६ मन्निकुंजांगणेभ्राजत्कोट्यर्कज्योतिराकुले [illegible]चारुचामरे १७ लोलन्मुक्ता

न्यत्रविलक्ष्यते १८ मासंभ्रत्स्यागमिष्यामियुष्मान्द्रष्टुंक्वचोमम मनसानहिदूरेस्मिमनःसर्वस्यकारणं १९ हेगोपायदुभिर्योद्धुमागता
हिजरासुतः यदूनांतुसहायार्थंयामिमाभूच्छुचस्त्वव: २० नारदउ॰ एवमाश्वास्यतांदेवः संनिर्वृत्यपुनःपुनः रथेद्वितीयेसंस्था
प्यनंदराजंयशोदया २१ श्रीदामादीन्सर्वान्नीत्वाभगवान्रथमास्थितः सोद्धवोमथुरांप्रागात्सर्वकारणकारणः २२ यावद्रथ
श्चाश्वशतस्सुवेगकेतुस्त्रिवर्णःप्रचलत्पताकः श्चालक्ष्यतेवीररजश्चतावत्स्थित्वाऽन्यआजग्मुरतःसकाशं २३ श्रीकृ
ष्णाचंद्रस्यपरंचरित्रंनृणांमहापापहरंविचित्रं शृणोतियोभक्तवरःपृथिव्यांगोलोकलोकंसचयातिसम्यक् २४ इतिश्रीमद्ग॰
सं॰म॰खं॰ना॰ब॰सं॰व्रजयात्रायांश्रीकृष्णागमनंनामत्रयोविंशोऽध्यायः २३ बहुलाश्वउ॰ गोपीनांचैवगोपानांदत्वासंदर्शनंप
रं मथुरायांकिंचकारश्रीकृष्णोरामएवच १ चरित्रंपरमंमिष्टंश्रीकृष्णबलदेवयोः सर्वपापहरंपुण्यंचतुर्वर्ग्यफलप्रदं २
नारदउ॰ अन्यंचरित्रंशृणुतांच्छ्रीकृष्णबलदेवयोः सर्वपापहरंपुण्यंचतुर्वर्ग्यफलप्रदं ३ कोलेनपीडितालोकाःकोशारविपु
रान्नृप मथुरामाययुःसर्वेसार्द्धंजोदीनमानसः ४ अश्वमाशुगमारुह्यरोहिणीनंदनोबलः स्वल्पैःपुरःसरैःसार्द्धंमृगया
र्थीविनिर्गतः ५ तंनत्वाभ्यर्च्यविधिवत्तदंघ्र्योःपतिताःपथि कृतांजलिपुटाऊचुर्हर्षगद्गदयागिरा ६ प्रजाऊचुः रामराममं
हाबाहोदेवदेवमहाबल कोलेनपीडिताःसर्वेआगताःशरणंवयं ७ दैत्यःकंससखःकोलोजित्वाकोशारविंनृपं कौशा
वेश्वपुरेराज्यंकरोतिसमहाबलः ८ कोशारविस्तद्भयाद्धिगंगातीरंगतोनृपः राज्यार्थंत्वत्पदांभोजंभजतेसुजितेंद्रियः ९
तत्सहायंकुरुविभोवयंयस्यप्रजाःशुभाः पुत्रवत्पालितास्तेनमहासौख्यसमन्विताः १० कोलेनाद्यैवदुष्टेनपीडिताःस
ततप्रभो त्रैलोक्यविजयीवीरोकंसोपिनिहतस्त्वया ११ कोलोजीवतिदेवेंद्रकंसोपिनमृतांस्मृतः रक्षार्थंसगुणोसित्वंभ
क्तानांप्रकृतेःपरः १२ नारदउ॰ इतिश्रुत्वावचस्तेषांश्रीरामोभक्तवत्सलः गंगायमुनयोर्मध्येकोशावींनगरींययौ १३यो

स्त्वंभर्त्त्वंदेवनायकाः सज्जलत्वंचत्तरवोनिद्रात्वंप्रगतंजगत् ३९ कृत्वारासंराधिकायागोपीनांचमनोरथं ब्राह्मेमुहूर्तेभगवान्नाय
यौनंदमंदिरं ४० राधिकागोपिकाभिश्चप्रासानंदमनोरथाः वृषभानुवरस्यापिसुंदरंमंदिरंययौ ४१ इतिश्रीग०सं० नारदबहु०
सं० नारदोपाख्यानोनामद्वाविंशोऽध्यायः २२ नारद उ० श्रीकृष्णोभगवान्साक्षाद्व्रजेकतिदिनानिच स्थित्वास्वदर्शनंदत्वा-
मथुरांगंतुमुद्यतः १ नंदान्नवोपनंदांश्चवृषभानून्व्रजेपुषट् वृषभानुवरंचैवनंदराजंव्रजेश्वरम् २ कलावतींयशोदांचगोपीगो
पान्गवांगणान् मिलित्वाश्वास्यज्ञानचदत्वानुज्ञाप्यमाधवः ३ रथमारुह्यदिव्याभंचंचलाश्वनियोजितं मथुरांगंतुकामो-
सौनिर्गतोनंदगोकुलात् ४ दूरंतमनुगाःसर्वेमोहिताव्रजवासिनः नसेहिरेकष्टतरंविरहंमाधवस्यहि ५ युगपद्दर्शनंविष्णोर्दुः
सहंभूमिमंडले तेषांनित्यंहिभवतितेषांतुकिंसुवर्णनं ६ वीक्षंतःश्रीधरमुखंनेत्रैरनिमिषैर्नृपः सर्वैर्वैस्नेहसंबंधात्मूच्छुःप्रेमविह्व
लाः७ गोपाऊचुः शीघ्रमागच्छहेकृष्णसर्वान्नोव्रजवासिनः पाहिसंदर्शनंदेहिदेवेभ्योपिमृतंयथा ८ त्वमेवसर्वदादेवयशोदानंद
दायकः श्रीनंदनंदनस्त्वंवैजीवनंव्रजवासिनां ९ व्रजेधनकुलेदीपोमोहनोमहतामपि यथानिदाघदग्धस्यप्राप्तंवैशीतलंजलं-
१० शीतार्त्तस्ययथावन्हिर्ज्वरार्त्तस्ययथौषधं मृतस्यमानवस्यापिपीयूषंमंगलंयथा ११ तथाव्रजस्यसर्वस्यजीवनंतवदर्शनं त
स्मादत्रस्थितिंकुर्यात्वबहुनाकथितेनकिं १२ यच्चास्तिकिंचित्सुकृतमस्मिन्वापूर्वजन्मनि तत्फलेनसदाचेतोभूयात्त्वत्पादपंक-
जे १३ येषांचेतस्त्वत्पदाब्जेनेभक्तास्त्वत्प्रियाःसदा भक्तार्थंसगुणोसित्वंनिर्गुणःप्रकृतेःपरः १४ तवभक्तात्प्रियोनास्ति
शिवोब्रह्मानवेंद्रिरा विसृज्यपारमेष्ठ्यादिनिष्कामात्वांभजंतिये १५ नैरपेक्ष्यंसुखंश्रीतंतेविदुर्युक्तचेतसः नारद उ० एवमुक्त्वा
थतेसर्वेरुरुदुःप्रेमविह्वलाः आनंदाश्रूणिमुंचंतःश्रीकृष्णास्यप्रपश्यतः १६ अश्रुपूर्णमुखःकृष्णोभगवान्भक्तवत्सलः गोपा
नाहप्रसन्नात्मानतान्विरहविह्वलान् १७ श्रीभगवानु० मत्प्राणाधिकप्रियायूयंसर्वेव्रजवासिनः त्वदयंमेस्तियुष्मासुदेहो

३६ नाशंगतायांमायायांबलदेवोमहाबलः गृहीत्वाभुजदंडाभ्यांभुजदंडेमदोत्कटं ३७ भ्रामयन्बालवत्तंप्रतूलंसइतस्ततः पा
तयामासभूपृष्ठेकमंडलुमिवार्भकः ३८ तस्यदैत्यस्यपातेनसाब्धिशैलवनैःसह चकंपेनाडिकामात्रंसर्वभूखंडमंडलं ३९ भग्नदंत
श्चलन्नेत्रोमूर्छितोनिधनंययौ कोलोनाममहादैत्योवृत्रोवज्रहतोयथा ४० तदाजयजयारावोदिविभूमौबभूवह देवदुंदुभ-
योनेदुः पुष्पवर्षाःसुरैःकृताः ४१ इत्थंकोलंघातयित्वाबलदेवोच्युताग्रजः दत्वाथकोषारवयेकोशाबींचपुरींततः ४२ स्नातुं
भागीरथींप्रागाद्गर्गाचार्यादिभिर्वृतः लोकानांसंग्रहंकर्तुंसर्वदोषक्षयायच ४३ स्नापयांचक्रुराचार्यास्तेगंगायांमाधवंबलं वेद-
मंत्रैर्मंगलैश्चगर्गाचार्यादयोद्विजाः ४४ लक्षंगजानांवैदेहस्यंदनानांद्विलक्षकं हयानांचतथाकोटिंधेनूनामर्बुदंदश ४५श
तार्बुदंचरत्नानांभारंजांबूनदावृतं रामादयोब्राह्मणेभ्यःप्रययौमथुरांपुरीं ४६ यत्ररामेणगंगायांकृतंस्नानंविदेहराट् तत्र
तीर्थंमहापुण्यंरामतीर्थंविदुर्बुधाः ४७ कार्तिक्यांकार्तिकेस्नात्वारामतीर्थेतुजान्हवीं हरिद्वाराच्छतगुणंपुण्यंवैलभतेजनः
४८ बहुलाश्वउ॰ कौशांब्याःकियद्दूरंस्थलेकस्मिन्महामुने रामतीर्थंमहापुण्यमत्यंवक्तुंत्वमर्हसि ४९ नारदउ॰ कौशांब्या
नदीशान्यांचतुर्योजनमेवच वायव्यांशूकरक्षेत्राच्चतुर्योजनमेवच ५० कर्णक्षेत्राच्चषट्क्रोशैर्नैलक्षेत्राच्चपंचभिः आग्नेयांदि
शिराजेंद्ररामतीर्थंवदंतिहि ५१ वृद्धकेशीसिद्धपीठाद्विल्वकेशवनात्पुनः पूर्वस्यांचत्रिभिःक्रोशैरामतीर्थंविदुर्बुधाः ५२
हृष्टाश्वोवगराजोभूत्कुरूपंलोमशंमुनिं दृष्ट्वाजहाससततंतंशशापमहामुनिः ५३ विकरालःक्रोडमुखोऽसुरोभवमहाखल
इत्थंसमुनिशापेनकोलःक्रोडमुखोभवत् ५४ बलदेवप्रहारेणत्यक्त्वाचमासुरींतनुं कोलोनाममहादैत्यःपरंमोक्षंजगामह ५५
ततोरामोमंत्रिभिश्चउद्धवादिभिरन्वितः जन्हुतीर्थंजगामाशुयत्रदक्षश्रुतेरभूत् ५६ गंगाब्राह्मणमुख्यस्यजान्हवीयेनक-
थ्यते दत्वादानंद्विजातिभ्यउषूरात्रौजनैःसह ५७ ततस्तत्पश्चिमेभागेपांडवानामतिप्रिये आहारस्थानकंप्राप्यरात्रौवासं

115

हुंसमागतंरामंश्रुत्वाकोलोपिनिर्गतः अक्षौहिणीभिर्दशभिर्मंडितश्चंडविक्रमः १४ चंचलाश्वतरंगाढ्यांरथेभाश्वतिमिंगिलां नदीमि-
वागतांसेनांप्रलयार्णवनादिनीं १५ वीरावर्तांचतांवीक्ष्यवध्वासेतुंहलंबलः आकृष्यतांनदग्रेणमुसलेनाहनद्दृढं १६ युगपत्तत्प्र
हारेणवीराअश्वारथागजाः सर्वतःकोटिशःपेतुःपेशिताःफलवद्द्रुणे १७ शेषाःप्रदुद्रुवुर्वीराभयात्तोरणमंडलात् एकाकीयु
द्धुधेदैत्यःकोलोरामेणशस्त्रभृत् १८ गोमूत्रचयसिंदूरकस्तूरीपत्रभृन्मुखं सुवर्णशृंखलायुक्तंप्रस्रवच्चित्कटिवधनं १९ स्रवन्म
दंचतुर्दंतघंटाटंकारभीषणं प्रोन्नतंदिग्गजमिवनदत्कोलघनप्रभं २० शितमंकुशमादायकोलआरुह्यकर्णतः स्वगजंनोदया
मासबलदेवायदैत्यराट् २१ आगतंवीक्ष्यतंनागमत्तंकोलेननोदितं तताडमुसलेनासौवज्रेणेंद्रोयथागिरिम् २२ मुसलस्य
प्रहारेणविशीर्णोभून्महागजः मूर्छितोनैकधैवाशुदंडघातेनमैथिल २३ कोलःक्रोडमुखोदैत्योरक्ताक्षःपतितोगजात् शूलं
चिक्षेपनिशितंमाधवायमहात्मने २४ मुसलेनतदारामस्तच्छूलंशतधाछिनत् काचपात्रंयथाबालोदंडेनचविदेहराट् २५ सह-
स्रभारसंयुक्तांगदांगुर्वीप्रगृह्यच बलंतताडहृदयेजगर्जघनवद्बलः २६ तद्गदायाःप्रहारेणकोलंकज्जलवन्ननु मुसलेनाह
नन्मूर्ध्निबलदेवोमहाबलः २७ मुसलाहतमूर्द्धापिपतितोरणमंडले मुष्टिघातंघातयित्वातत्रैवांतरधीयत २८ चकारमायां
मायावीदैतयीमतिभीषणां प्रलयप्रभवैर्मेघैर्महावातप्रणोदितैः २९ अंधकारंप्रकुर्वद्भिरभूदाच्छादितंनभः ३० जपापुष्पस-
मान्बिंदूनजस्रंरुधिरस्यच मोचयित्वाथबीभत्सवर्षाश्चक्रुर्घनाघनाः ३१ पूयमेदोविष्मूत्रसुरामांससमन्विताः दृष्ट्वा
ताभिश्चवर्षाभिहाहाकारोबभूवह ३२ ज्ञात्वाथतत्कृतांमायांबलदेवोमहाप्रभुः चिक्षेपमुसलंदीर्घंपरसैन्यविदारणं ३३ सर्वा
स्त्रघातकंस्वच्छमष्टधातुमयंदृढं शतयोजनविस्तीर्णंप्रलयाग्निसमप्रभं ३४ बलास्त्रमुसलंरेजेभ्रमद्दशदिशांतरं विदार
यद्घनान्व्योम्निनीहारंचयथारविः ३५ [illegible] बलान्मध्यतान्विददारह

८० कौरवाणांकुलेराजापरीक्षिद्दिविश्रुतः तस्यपुत्रोतितेजस्वीविख्यातोजनमेजयः ८१ पितुःशत्रुहतंयज्ञंकरिष्यतिनसं
शयः तस्यापिसर्वसामग्रीउद्धवद्वारतोभवेत् ८२ श्रीमद्भागवतंदिव्यंपुराणंवाचनंतदा गौरान्वयस्यसंप्राप्तिर्भविष्यतिन
संशयः ८३ श्रीमत्प्रसादविप्रर्षेर्महाभागवतोत्तमात् तद्द्वारासर्पयज्ञस्यनिवृत्तिःसंभविष्यति ८४ यज्ञसंस्कारकर्तृणांब्रा
ह्मणानांचपूजनं सदास्यतिमहाराजाग्रामाणांशतकंतदा ८५ ततस्त्वाचार्यवर्य्यस्यश्रीप्रसादस्यचाज्ञया सगंताशूकर
क्षेत्रेमासमेकस्थितोभवेत् ८६ दत्वादानान्यनेकानिगोमहागजवाजिनः रत्नंवासोब्राह्मणेभ्योभोजनंचयदृच्छया ८७
तत्तस्मात्तत्स्थलात्सोपिनिवर्त्यगुरुणासह गंगातीरस्थलान्यश्यन्नागमिष्यतिसद्वृतः ८८ शयाननगरेसंस्थाकरिष्य
तिसहानुगः श्रीगुरोराज्ञयातत्रसामग्रींसाधनैःसह ८९ अश्वमेधंकरोतिस्मसर्वजेताभविष्यति एकच्छत्रधरोभू-
त्वाश्रीगुरोःशरणंगतः ९० ततोगंगातटेरम्येपूर्वस्यांक्रोशपंचके परमैकांतिरूपेणसेवनंतत्करिष्यति ९१ तत्रभागव-
तीवार्ताभवरोगविनाशिनी भविष्यतिमुदायुक्तासमाजेषुसुधर्मिणां ९२ तत्रपूर्णसमाजेषुतेषांमध्येभवानपि शृणो-
षिभागवद्धर्मंगंताश्रीनिर्मलंपदं ९३ तपस्तमयार्थतेतस्मादेतत्प्रकाशितं एवंदेववरंदत्वागतोरामःसहानुगः ९४ श-
याननगराच्छुद्धादीशान्यांदिशिसंस्थितं स्थानंगंगातटेरम्यंकंटकादुत्तरेभवत् ९५ पुष्पवत्यादक्षिणेतुक्रोशैकंविस्तरे
णच तत्रसंकर्षणोदेवःस्थित्वादानपरोभवत् ९६ घोटकंदशसाहस्रंरथानांशतकंतथा द्विपंसहस्रंगाश्चैवदिक्सहस्रं
ददौमुदा ९७ तत्रसंकर्षणंदेवपूजयामासुरादरात् देवाःसमाययुःसर्वेऋषयश्चतपोधनाः ९८ नमःकोलेशघाताय
खरासुरविघातिने हलायुधनमस्तेस्तुमुशलास्त्रायतेनमः ९९ नमःसौंदर्यरूपायतालांकायनमोनमः इतिस्तुत्वास्त
तितेषांसंकर्षणउवाचह वरंब्रुवंतुवःसर्वेभवतांयदभीप्सितं १०० द्विजदेवाऊचुः यदायदायदायुक्ताःस्मरामभवतःपदं





116

चकारह ५८ तथदानंद्विजोतिभ्योदत्वासद्गुणभोजनं ततोयोजनमेकंचदेवंगंडूकसंज्ञकं ५९ तपस्तसंमहन्तेनांतदेवकृपयामये तद-
र्थस्वसमाजेनबलदेवोजगामह ६० ऊर्ध्वीस्थमेकपादस्थंध्यानस्तिमितलोचनं स्वभक्तहृदयस्थांस्वांमूर्तिंदर्शनलोलुपं ६१ तांजह
रतदानंतस्ततोबाल्येददर्शह सहृष्ट्वानंतदेवस्यमूर्तिपरमसुंदरीं ६२ स्रग्व्येककुंडलंगौरंतालांकरथसंयुतं स्तुत्वापरमयाभक्त्या
पपातचरणोपुनः ६३ तस्यशीर्ष्णिकरंदत्वावरंब्रूहीत्युवाचह यदिप्रसन्नोभगवाननुग्राह्योस्मिवायदि ६४ सर्वोत्तमांभागवतीं-
संहितांशुकवक्त्रतः निर्गतांदेहिमेस्वामिन्कलिदोषहरांपरां ६५ बलदेवउ० उद्धवद्वारतःप्राप्तिर्भविष्यतितवानघ श्रीमद्भागव
तीकीर्तिराधिकायात्कलौयुगे ६६ माडूकउ० कथंभगवताद्दत्तामुख्यातस्याधिकारिता कदायोगंममस्वामिन्कुरुसंदेहभं
जनं ६७ बलदेवउवाच कथयामिपरंगोप्यंरहस्यंपरमाद्भुतं अद्यापिममसामीप्येउद्धवोयंविराजते ६८ तद्दर्शनंकुरुपरमा
चार्यसंप्रदायकं अधुनातीर्थस्ययात्रायामुपदेशंनतेभवेत् ६९ यथोपदेष्टाभवतितेनतत्कथयाम्यहं उद्धवःस्थापितःश्रीमदाचा
र्यैःसंहितामयः ७० नंदादिव्रजवासीनांगोपीनांप्रीतयेकृतः स्वस्वरूपंपरिकरंयत्किंचिद्भगवत्तमं ७१ सर्वस्वभावगुणकंकृ
ष्णेनपरमात्मना उद्धवंचैवस्वात्मानमेकएवाचरद्विभुः ७२ साक्षात्कारंचकारादौनस्वीयमंतरंकृतवित् श्रीकृष्णमेवतेज्ञात्वा
पूजयामासुरादरात् ७३ वसंतर्तुश्चग्रीष्मोपिसचचारव्रजात्मको शमयामासराधायाःशोकंतत्कुंडपार्श्वजः ७४ सर्वभूमंडलं
तत्रविचचारव्रजानुगैः वियोगार्तिहरःप्रोक्तोगवांनंदादिगोपिनां ७५ मंत्राधिकारकुशलःसर्वःपरिकराग्रणीः अथांतर्ध्या-
नवेलायांभगवान्धर्मगुप्ततनुः ७६ तस्मैस्वतेजसमपिदांस्यतेपरमाद्भुतं मुद्राधिकारंसर्वत्रसर्वदैवविराजते ७७ अंत
र्ध्यन्तुस्वस्थानेदत्तातस्याधिकारिता बदरीस्थंसपरिकरंधर्मजंबोधयिष्यति ७८ अर्जुनादिवियोगार्तिहारीसैवभविष्यति
वज्रनाभोयादवानांमाथुरेसंभविष्यति ७९ श्रीकृष्णस्यैवपौत्रेषुमहाराज्ञीगणेषुच वियोगार्तिहरश्चैवस्थाप्यतेश्रीहरिःस्वयम्

यातिकृतार्थतां १४ पुराविधिःश्रीमथुरामुपेत्यतस्त्वातपोवर्षशतंनिरन्नं जपन्हरिंब्रह्मपरंस्वयंभूःस्वायंभुवंप्रापसुतंप्रवीणं१५
भूतेश्वरोदेववरःसतीपतिस्तस्त्वातपोदिव्यशरन्मधोर्वने कृष्णप्रसादान्नृपराजसत्वरंतस्याःपुरेमाथुरमंडलस्यच १६ कृष्ण
प्रसादादहमेवचारोभ्रमन्सदामाथुरमंडलस्य तथाहिदुर्गामथुरांप्रयातिश्रीकृष्णदास्यंप्रकरोतिनूनं १७ तस्त्वातपःशक्रप
दंचशक्रःसूर्योमनुंनित्यनिधिंकुबेरः पाशीचपाशंसमवापसम्यक्मधोर्वनेविष्णुपदंध्रुवश्च १८ तथांबरीषःसमवापमुक्तिं
समोक्षयंबालवणाज्जयंच रघुश्चसिद्धिंकिलचित्रकेतुस्तस्त्वातपोत्रैवमधोर्वनेच १९ तस्त्वातपोत्रैवमधोर्वनेशक्रःप्रभेभूत्वाबलि
घ्नश्चमधुर्महासुरः श्रीमाधवेमासिचमाधवेनयुयोधयुद्धेमधुसूदनेनसः २० ससर्षयःश्रीमथुरांसमेत्यतस्त्वातपोत्रैवचयोग-
सिद्धिं प्रापुःपुरेवामुनयःसमंताद्गोकर्णवैश्योपिमहानिधिंच २१ तस्त्वातपोत्रैवमधोर्वनेशक्रःप्रभेविजित्यदेवान्दिविलोकरावणः-
विधायरक्षांसिविधायमंदिरंप्रास्थायलंकांविरराजरावणः २२ तस्त्वातपोत्रैवमधोर्वनेशक्रःप्रभेगजाह्वयेशोमिथिलेशशंतनुः ले
भेसुतंभीष्ममतीवसत्तमंतत्वार्थवारांनिधिकर्णधारगं २३ बहुलाश्वउवाच मथुरायाश्चमाहात्म्यंवदद्देवर्षिसत्तम निवासे-
किंफलंप्रोक्तंमथुरायाःसतांनृणां २४ नारदउ० आदौवराहोधरणींनिमग्नांमहाजलेप्रोज्झितवीचिशंके स्वदंष्ट्रयोद्धृत्यकरी
वपद्मंकरेणमाहात्म्यमिदंजगाद २५ श्रुवज्जनोनामफलंहरेर्लभेच्छृण्वन्लभेत्कृष्णकथाफलंनरः स्पृशन्स्वतांस्पर्शनजंमधोः-
पुरिजिघ्रन्तुलस्यादलगंधिजंफलं २६ पश्यन्हरेर्दर्शनजंफलंस्वतोभक्ष्यंचनैवेद्यभवंरमापतेः कुर्वन्भुजाभ्यांहरिसेवयाफलं-
गच्छन्लभेत्तीर्थफलंपदेपदे २७ राजेंद्रहंतानिजगोत्रघातकीत्रैलोक्यहंतापिचकोटिजन्मसु राजञ्शृणुत्वंमथुरानिवासतो-
योगीश्वराणांगतिमाप्नुयान्नरः २८ पादौचधिग्यौनगतौमधोर्वनंदृशौचधिग्येनकदापिपश्यतः कर्णौचधिग्यौश्रृणुतोन
मैथिलवाक्यंवधिज्ञानकरोत्यलंमनाक् २९ द्विसप्तकोटीनिवनानियत्रतीर्थानिवैदेहसमास्थितानित्तु एकैकमेतेषुविमुक्ति-

सर्वबाधाविनिर्मुक्ताभवामःश्च्रतवाज्ञया १ रामउवाच यदायदामांस्मरथत्तदाहंशरणागतान् २ रक्षिताहंकलौनूनमितिसत्यंव
चोमम अत्रस्थलेवरंनीतंपूजितंमुनिपुंगवैः ३ श्चतःसंकर्षणस्थानंभविष्यतिकलौयुगे यस्मिन्स्नास्यंतिगंगायांदेवान्सं-
पूजयंतिये ४ दास्यंतिदानंविप्रेभ्योभोजनंकारयंतिये विष्णुंसंपूजयंतिस्मसफलंजीवितंक्षितौ ५ तेयांतिदैवतस्थानंका
मीप्राप्नोतिकामनां ततःपरिवृतोरामःस्वांपुरींसंजगामह ६ कोलरक्षोवधंकृत्वास्नात्वाविष्णुपदीजले रामस्यबलदेवस्यक-
थांयःशृणुयान्नरः सर्वपापविनिर्मुक्तःसयातिपरमांगतिम् ७ इतिश्रीमद्ग॰ म॰ खं॰ ना॰ ब॰ सं॰ कोलदैत्यवधोनामचतुर्वि
शोऽध्यायः २४ बहुलाश्वउवाच अकस्मादागतेरामेतत्रतीर्थमिदंश्रुतं अहोमधुपुरीधन्यायत्रसन्निहितश्चसः १ मथु
रायास्तुकोदेवः कःक्षत्ताकश्चरक्षति कश्चारःकोमंत्रिवरःकैर्भूमिस्तत्रसेविता २ नारदउ॰ परिपूर्णतमःसाक्षाच्छ्रीकृष्णो
भगवान्हरिः स्वयंहिमथुरानाथःकेशवःक्लेशनाशनः ३ साक्षाद्भगवताप्राप्तःकपिलायद्विजायच कपिलःप्रददौवैप्रसन्नः
शतमन्यवे ४ जित्वादेवान्राक्षसेंद्रोरावणोलोकरावणः यंसत्कृत्वापुष्पकेस्थाप्यलंकायांतमपूजयत् ५ जित्वालंकाराघवें
द्रस्तमानीयप्रयत्नतः अयोध्यायांचवाराहमर्चयामासमैथिल ६ स्तुत्वारामंचशत्रुघ्नोयमानीयप्रयत्नतः मथुरायांमहा
पुर्य्यांस्थापयित्वाननामह ७ सेवितोमाथुरैःसर्वैःसर्वेषांचवरप्रदः साक्षात्कपिलवाराहःसोयंमंत्रिवरःस्मृतः ८ क्षत्ता-
श्रीमथुरायाश्चनाम्नाभूतेश्वरःशिवः दत्वादण्डंपातकिनेभक्तस्यर्थामभ्रतांव्रजेत् ९ चंडिकातुमहाविद्यादेवीदुर्गतिनाशिनी-
सिंहारूढासदारक्षांमथुरायाःकरोतिहि १० चारोहंमथुरायाश्चपश्यंल्लोकानितस्ततः वदामिवार्तांसर्वेषांश्रीकृष्णायमहा-
त्मने ११ मध्येवैमथुरादेवीशुभदाकरुणामयी बुभुक्षितेभ्यःसर्वेभ्योददात्यन्नंविदेहराट् १२ चतुर्भुजाश्यामलांगाव्रजंनि-
प्राव्रजंतिच मथुरायांमृतंनेतुंविमानैःकृष्णपार्षदाः १३ श्रीकृष्णस्यांगसंभूतामथुरावैमहापुरी यस्यदर्शनमात्रेणनरो-

दानिवदामिसाक्षान्मथुरांनमामि ३० गोलोकनाथःपरिपूर्णदेवःसाक्षादसंख्यांडपतिःस्वयंहि श्रीकृष्णचंद्रोवततार
यस्यांतस्मैनमोन्यासपुरीषुकिंवा ३१ यन्नामपापंविनिहंतितत्क्षणंभवंत्यलंयांशृणुतोपिमुक्तयः वीर्थीषुवीथीषुच
मुक्तिरस्यास्तस्मादिमांश्रेष्ठतमांविदुर्बुधाः ३२ कस्यादिसर्गोयदिसंतिलोकेतासांतुमध्येमथुरेवधन्या याजन्ममौंजी
व्रतमत्युदाहैर्नृणांचतुर्द्धाविदधातिमुक्तिं ३३ पुरीश्वरींकृष्णपुरींव्रजेश्वरींतीर्थेश्वरींयज्ञतपोनिधीश्वरीं मोक्षप्रदांध
र्मधुरंधरांपरांमधोर्वनेश्रीमथुरांनमाम्यहम् ३४ शृण्वंतिमाहात्म्यमिदंमधोःपुरःकृष्णेकचित्तानियताश्चयत्रये व्र-
जंतितेतत्रपरिक्रमाफलंवैदेहराजेंद्रनचात्रसंशयः ३५ खंडंत्विदंश्रीमथुरापुरस्ययेशृण्वंतिगायंतिपठंतिसर्वतः इ-
हैवतेषांहिसमृद्धिसिद्धयोभवंतिवैदेहनिसर्गतःसदा ३६ त्रिःसप्तकृत्वोबहुवैभवार्थिनःशृण्वंतिचैनंनियताश्चयेभृशम्
तेषांगृहद्वारमलंकरोतिहिभृंगावलीकुंजरकर्णताडिता ३७ विप्रोथविद्वान्विजयीनृपात्मजोवैश्योनिधीशोवृषलो
पिनिर्मलः श्रुत्वेदमाराच्चमनोरथोभवेत्स्त्रीणांजनानामतिदुर्लभोपिहि ३८ निःकारणोभक्तियुतोमहीतलेशृ
णोतिचेदंहरिलग्नमानसः विजित्यविघ्नान्प्रविजित्यनाकपान्गोलोकधामप्रवरंप्रयातिसः ३९ इतिश्रीम-
द्गर्गाचार्यसंहितायांश्रीमथुराखंडेश्रीनारदबहुलाश्वसंवादेश्रीमथुरामाहात्म्यंनामपंचविंशोऽध्यायः २५ ७
श्रीराधाकृष्णार्पणमस्तु शुभंभवतु ७ ७ ७ ७ ७

ननादतेनब्रह्मांडंसप्तलोकैर्बिलैःसह विचेलुर्दिग्गजास्ताराराजच्छ्रखंडमंडलं १८ तद्देवबधिरीभूतंशत्रूणां
सैन्यमंडलं उत्ससंतोहयायुद्धाद्गजास्तुविमुखास्ततः १९ दुद्रावतद्बलंसर्वंटंकारोद्भयविह्वलं प्रतीपमेत्यग
व्यूतिःपुनस्तत्राजगामह २० एवंशार्ङ्गसमुच्चार्यतडित्सिंगस्फुरत्प्रभं बाणौघैश्छादयामासजरासंधबलंह
रिः २१ चूर्णीभूतारथाराजन्बाणौघैःशार्ङ्गधन्वनः चूर्णचक्रानिपेतुःक्षौहतसूताश्वनायकाः २२ द्विधा-
भूतागजाबाणैश्चलितागजिभिःसह साश्ववाहास्तथाश्वाश्वबाणैःसंछिन्नकंधराः २३ तथावीराम
हायुद्धेभिन्नोरश्छिन्नमस्तकाः विशीर्णकवचापेतुर्बाणौघैश्छिन्नसंशयाः २४ अधोमुखाऊर्द्धमुखा
श्छिन्नदेहानृपात्मजाः रेजूरणांगणेराजन्भांडव्यूहाइवाहता २५ क्षणमात्रेणतद्युद्धेशतक्रोशविलं
बिता आपगाभून्महादुर्गारुधिरस्रावसंभवा २६ द्विपग्राहा चोष्ट्रखरकबंधाश्वाधिकच्छपा शिशु
माररथाकेशशैवालाभुजंसर्पिणी २७ करमीनामौलिरत्नहारकुंडलशर्करा शस्त्रशुक्तिश्छत्रशंखा
चामरध्वजसैकता २८ रथांगावर्तसंयुक्तासेनाह्वयतदावृता शतयोजनविस्तीर्णाबभौवैतरणीय
था २९ प्रमथाभैरवाभूतावेतालायोगिनीगणाः अट्टहासंप्रकुर्वंतोनृत्यंतोरणमंडले ३० पिबंतोरु
धिरंशश्वत्कपालेननृपश्वरे हरस्यमुंडमालार्थंजगृहुस्तेशिरांसिच ३१ सिंहारूढाभद्रकालीडाकि-
नीशतसंवृता पिबतीरुधिरंचोष्णंसाट्टहासंचकारह ३२ विद्याधर्यस्त्ववरस्थागंधर्व्योप्सरसस्त
था क्षात्रधर्मस्थितान्वीरान्वव्रिरेदेवरूपिणः ३३ गृहीत्वातान्कलिरभूतासांपत्यर्थमंबरे ममानुरूपो
नेमंत्वइतितद्गतचेतसां ३४ केचिद्वीराधर्मपरारणरंगान्नचालिताः ययुर्विष्णुपदंदिव्यंभित्वामार्तंडमं

श्रीगणेशायनमः श्रीकृष्णायवासुदेवाय देवकीनंदनायच नंदगोपकुमाराय गोविंदायनमोनमः
१ बहुलाश्वउवाच श्रुतंत्वन्मुखाद्ब्रह्मन्मथुराखंडमद्भुतं वदमांद्वारकाखंडंश्रीकृष्णचरितामृतं
२ विवाहाः कतिपुत्राश्च कतिपौत्रारमापतेः सर्ववदमहाबुद्धे द्वारकावासकारणं ३ श्रीनारदउवा
च अस्तिप्राप्ती महिष्यौद्वेमृते कंसमहाबले जरासंधगृहंदुःखाज्जग्मतुर्मैथिलेश्वर ४ तन्मुखात्कं
सभरणंश्रुत्वाक्रुद्धोजरासुतैः अयादवीमहींकर्तुमुद्यतोभून्महाबलः ५ अक्षौहिणीभिर्विंशत्या-
तिसृभिश्चापिसंवृतः रम्यांमधुपुरींराजन्नायोबलवान्नृपः ६ भयातुरांपुरींवीक्ष्यनत्वेनासिंधुना
दिनीं सभायांभगवान्साक्षाद्बलदेवमुवाच ७ सर्वंचास्यबलंरामहंतव्यंवनसंशयः मागधस्तुनहं
तव्योभूयः कर्ताबलोद्यमं ८ जरासंधनिमित्तेनभारंवैभूभुजांभुवः सर्वंचापहनिष्यामिकरिष्या-
मिप्रियंसतां ९ एवंवदंतिकृष्णेवैवैकुंठाच्चरथौशुभौ अभूतामागतौराजन्सर्वेषांपश्यतांचतौ
१० समारुह्यरथौसद्योरामकृष्णौमहाबलौ यादवानांबलैःसूक्ष्मैस्त्वरंनिर्जग्मतुःपुरात् ११ यादवा-
नांमागधानांपश्यद्भिर्दिविजैर्दिवि बभूवतुमलंयुद्धमद्भुतरोमहर्षणं १२ अक्षौहिणीभिर्दशभीरथारू
ढोमहाबलः श्रीकृष्णस्यपुरःपूर्वंयुयुधेमागधेश्वरः १३ पंचभिश्चाक्षौहिणीभिर्धार्तराष्ट्रसुयोधनः
युयोधयादवैःसार्द्धंजरासंधसहायकृत् २४ पंचभिश्च तथाराजन्विंध्यदेशाधिपोबली तिसृभिश्चम
हायुद्धेवंगनाथोमहाबलः १५ एवमन्येपिराजानोजरासंधवशानुगाः प्राणैःसहायंकुर्वंतोजरासंध-
स्यमैथिल १६ बाणांधकारेसंजातेशत्रुसेनासमाकुले टंकारंशार्ङ्गधनुषःशार्ङ्गधन्वाचकारह १७

तः समेत्यराजानमसौबलिंददौ ५३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवा
देजरासंधपराजयोनामप्रथमोध्यायः १ श्रीनारदउवाच पुनस्तत्रजरासंधस्त्वावेत्यक्षौहिणीबलः
युयुधेयदुभिःशीघ्रंपुनःकृष्णपराजितः १ श्रीकृष्णतेजसासर्वेयादवावृद्धिमागताः धनुर्गजादिभिःश
स्त्रास्त्रैसल्लुंठनसाहसाः २ प्राप्तेचसाहसेराजन्विनायुद्धंपुरेबहि अर्भकाजलहारिण्यश्चक्रुःशस्त्रप्रहारणं
३ शत्रुद्रव्यंचसाहर्तुंवीक्षांतोकीतवाससः नागरामाथुरास्सर्वेपरंहर्षमुपागताः ४ एवंसप्तदशाक्षौहि
णसैन्याजरासुतः अष्टादशमेसंग्रामेआगंतुंचमनोकरोत् ५ मयाप्रणोदितःकालोयवनोवैमहाबलः
रुरोधमथुरांक्रुद्धोम्लेच्छकोटिसमावृतः ६ म्लेच्छानांचबलेवीक्ष्यस्वपुरेभयविह्वले भयंचाभयतःप्राप्तं
रामेणाचिंतयद्धरिः ७ स्वज्ञातिबंधुरक्षार्थेसमुद्रेभीमनादिनि चकारद्वारकादुर्गमेकरात्रेणमाधवः ८
यत्राष्टदिग्पालसिद्धिर्विश्वकर्माविनिर्मिता सर्वावैकुंठसंपत्तिर्दृश्यतेमोक्षकांक्षिभिः ९ हरिःस्वजनंत
त्रनीत्वायोगेनमैथिल पुराद्रामम्नुज्ञाप्यनिर्गतोभून्निरायुधः १० निरायुधंहरिंज्ञात्वामयोक्तैर्लक्षणैः-
खलः निरायुधःशतंयोद्धुंपदातिःस्वयमागतः ११ पराङ्मुखंप्राद्रवंतंदुरापंयोगिनामपि जिघृक्षुस्तंचा-
न्वधावत्तैनकानांप्रपश्यतौ १२ हस्तप्राप्तंवपुस्तस्मैदर्शयन्निवमाधवः दूरंगतःश्यामलाद्रेःप्राविशत्कंद
रंत्वरं १३ मुचुकुंदोयत्रचास्तेमांधातृतनयोमहान् असुरेभ्यःपुरारक्षांदेवानांयश्चकारह १४ अद्य
निशंनसुष्वापदेवसेनापरोनृप तमूचुर्देवताःसर्वेप्रसन्नाराजसत्तमं १५ वरंवरय भोराजन्यत्तेमनसि
वर्तते नत्वातान्प्राहराजेंद्रःकरोमिशयनंपरं १६ शयनांतेहरेःसाक्षाद्दर्शनंमेभवत्वलं योमध्येबोधये-

डलं ३५ शेषंबलंसमाकृष्य बलदेवोहलेनवै मुशलेनाहनत्क्रुद्धस्त्रैलोक्यबलधारकः ३६ एवंसै
न्येक्षयंयातेजरासंधस्यसर्वतः सुयोधनोविंध्यनाथोवंगनाथस्तथैवच ३७ सर्वेविदुद्रुवुर्युद्धाद्भय
भीताइतस्ततः जरासंधोमहावीर्योनागायुतसमोबले ३८ रथेनागतवान्राजन्बलदेवस्यसन्मुखे स
माकृष्यहलाग्रेणजरासंधरथंशुभं ३९ चूर्णयामाससहसामुशलेनयदूत्तमः जरासंधोपिविरथोहता
श्वोहतसारथिः ४० जग्राहबलिनंदोर्भ्यांसंत्यक्ताशस्त्रसंहतिः तयोर्युद्धमभूद्घोरंबाहुभ्यांरणमंड
ले ४१ पश्यतांदिविदेवानांनराणांभुविमैथिल उरसाशिरसाचैवबाहुभ्यांपादयोःपृथक् ४२ युयु-
धातेमल्लयुद्धेसिंहाविवमहाबलौ तयोश्चयुध्यातोःसर्वक्षणंभूखंडमंडलं ४३ स्थालीवसहसाराजन्चक
पेघटिकाद्वयं गृहीत्वाभुजदंडाभ्यांजरासंधंयदूत्तमः ४४ भूपृष्ठेपातयामासकमंडलुमिवार्भकः राम
स्तदुपरिस्थित्वाहंतुंशत्रुंजरासुतं ४५ जग्राहमुशलंघोरंक्रोधपूरितविग्रहः परिपूर्णतमेनाथश्रीकृ-
ष्णेनमहात्मना ४६ निवारितस्तदेवाशुतंमुमोचयदूत्तमः तेपसकृतसंकल्पोव्रीडितोपिजरासुतः
४७ निवारितोमंत्रमुख्यैर्मागधान्मागधोययौ इत्थंजित्वाजरासंधंमाधवोमधुसूदनः ४८ आयोध
नगतंवित्तंसर्वंनीत्वासुखाहृतं यादवानग्रतःकृत्वाबलदेवसमन्वितः ४९ उपगीयमानविजयःसूतमा
गधबंदिभिः शंखदुंदुभिनादेनब्रह्मघोषेनभूयसा ५० विवेशमथुरांसाक्षात्परिपूर्णतमःस्वयं ५१ स-
मर्चितोमंगललाजपुष्पैःपश्यंसुरीमंगलकुंभयुक्तां पीतांबरःश्यामतनुःशुभांगःस्फुरत्किरीटांगदकुंडलप्र
भः ५२ शार्ङ्गादिशस्त्रास्त्रधरोहसन्मुखस्तालांकयुक्तोगरुडध्वजस्स्वयं उद्यद्विलोलाश्वरथःसुरार्चि

अनयाभक्त्यामद्धाम प्रकृतेःपरं प्राप्स्यसित्वंमहाराजयतोनावर्ततेगतः ३४ नारदउवाच इत्थंश्रुत्वाहरिं
नत्वापरिक्रम्यनतानन: निश्चक्रामगुहाद्दुर्गाच्छ्रीकृष्ण प्रेमविह्वलः ३५ द्वापरक्षुल्लकामर्त्यातालवृक्षश-
तोच्छ्रितं दृष्ट्वातंदुद्रुवुर्मार्गेभयभीताइतस्ततः ३६ माभैष्टेत्यभयंयच्छन्जगमादिशमुत्तरां एवंदत्त्वावरंत
स्मैमुचुकुंदायधीमते ३७ भगवान्पुनराव्रज्यमथुराम्लेच्छवेष्टितां हत्वाम्लेच्छबलंसर्वंतद्धनान्याच्छि
नद्बलात् ३८ अथराजाजरासंधोयोद्धुमभ्युदितःपुनः आहूयमागधान्विप्रान्मुहूर्तदेशकारिणः ३९
प्राहदेवासुदेवाख्यंजित्वावेद्यागतोस्म्यहं सर्वान्संपूज्ययिष्यामि सदायुष्मत्सदाश्रये ४० कारागारेषुयावद्व
स्थिताभवतभोद्विजाः पराजितोहंवायुष्मान्हनिष्यामिनसंशयः ४१ एवमुक्त्वाद्विजाराजाजरासंधोम
हाबलः आजगामाशुमथुरांत्रयोविंशत्यनीकपः ४२ ब्रह्मवाक्यमृतंकर्तुंस्वप्रतिज्ञांविहायच मनु
ष्यचेष्टामापन्नोस्वपुराद्गीतभीतवत् ४३ रामकृष्णोपरोदेवौ पद्भ्यांदुद्रुवतुर्द्रुतं पलायमानौतौवीक्ष्य
मागधःप्रहसन्भृशं ४४ अन्वधावद्रथानीकैर्ब्रह्मवाक्यमनुस्मरन् दक्षिणाशांगतोइत्थंप्रवर्षणगिरौ
हरिः ४५ यस्मिन्निलीनौज्ञात्वातौएधोभिस्तंददाहह भस्मीभूतेवनेजातेदह्यमानतटाद्गिरे ४६ द-
शैकयोजनोत्तुंगात्समुत्पत्यसुरेश्वरौ अलक्ष्यमाणावरिभिर्द्वारकायांनिपेततुः ४७ सोपिदग्धौचतौम-
त्वामागधेंद्रोमहाबलः मागधान्श्रयायौवीरोवादयन्जयदुंदुभीन् ४८ ब्राह्मणान्पूजयामासभक्त्या-
परमयानृप यस्यविप्रोसहायोस्तिकुतस्तस्यपराजयः ४९ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारका
खंडेनारदबहुलाश्वसंवादेद्वारकावासकथनंनामद्वितीयोध्यायः २ श्रीनारदउवाच इत्थंमया-

न्मांवैशयनस्याप्यचेतनः १७ समयाहृष्टमात्रस्तु भस्मीभवन्तनुक्षणात् तथास्तुचोक्तःसुष्वापराजाकृतयु
गेपुरा १८ तत्रप्रविष्टोयवनोमत्वापीतांबरंच्युतं तताडयवनःक्रुद्धःपादेनाशुमहाबलः १९ मुचुकुंदःस
मुत्थायशनैरुन्मील्यसाक्षिणी आशाङ्गपश्यंस्तत्पार्श्वेस्थितकालंददर्शह २० सतावत्तस्यरुष्टस्यदृष्टि
पातेनमैथिल देहजेनाग्निनादग्धोभस्मसाद्भवत्क्षणात् २१ भस्मीभूतेचयवनेपरिपूर्णतमःस्वयं स्व
रूपंदर्शयामासमुचुकुंदायधीमते २२ कोटिसूर्यप्रतीकोशंज्योतिषांमंडलंप्रभुं स्थितंस्फुरत्किरीटार्ककुं
डलांगदनूपुरं २३ श्रीवत्सांकंचतुर्बाहुंपद्माक्षंवनमालिनं कोटिकंदर्पलावण्यंकालमेघसमप्रभं २४
दृष्ट्वाराजाधर्षितोपिसमुत्थायकृतांजलिः परिपूर्णतमंज्ञात्वाभक्त्यातंप्रणनामह २५ मुचुकुंदउ
वाच कृष्णायवासुदेवायदेवकीनंदनायच नंदगोपकुमारायगोविंदायनमोनमः २६ नमःपंकज
नाभायनमःपंकजमालिने नमःपंकजनेत्रायनमस्तेपंकजांघ्रये २७ नमःकृष्णायशुद्धायब्रह्मणे-
परमात्मने प्रणतक्लेशनाशायगोविंदायनमोनमः २८ नमोस्त्वनंतायसहस्रमूर्तये सहस्रपादाक्षिशि
रोरुबाहवे सहस्रनाम्नेपुरुषायशाश्वते सहस्रकोटियुगधारिणेनमः २९ हरेमत्समःपातकीनास्ति
भूमौ तथात्वत्समानास्तिपापप्रहारी इतिलंचमत्वाजगन्नाथदेव यथेच्छाभवेत्तेतथामांकुरुत्वं ३०
श्रीनारदउवाच एवंस्तुतोहरिःसाक्षात्परमानंदविग्रहः ज्ञात्वातंनिर्गुणंभक्तंप्राहगंभीरयागिरा ३१
श्रीभगवानुवाच धन्यस्त्वंराजशार्दूलधन्यास्तेविमलामतिः नैरपेक्ष्येणदिव्येनभक्तिभावेनपूरिता
३२ अद्यैवगच्छसद्धामबदर्याख्यंमदाश्रयः तत्रैवतुतपस्तप्त्वाभूत्वाब्राह्मणपुंगवः ३३ प्रेमलक्ष-

सर्वसुख्याय नररत्नाय शाश्वते कन्यारत्नमिदं राजन् बलदेवाय देहि भो १७ परिपूर्णतमौ साक्षाद्गोलोका
धिपति प्रभू भुवो भारावताराया वतीर्णौ बलकेशवौ १८ असंख्यब्रह्मांडपतिर्वसुदेवात्मजो हरिः द्वार-
कायां विराजेते यदुभिर्भक्तवत्सलौ १९ नारद उवाच अथ श्रुत्वा विधिं नत्वा रैवतो नृपसत्तमः आय
यौ द्वारकां भूयः संमृद्धायां समृद्धिभिः २० पारबर्हं रथं दत्वा विश्वकर्मविनिर्मितं सहस्रहयसंयुक्तं-
दिव्ययोजनविस्तृतं २१ दिव्यांबराणि रत्नानि क्षौमदुकूलानि मैथिल दत्वा ययौ तपस्तप्तुं बदर्याख्यं शु-
भावहं २२ तदा महोत्सवश्चासीद्यदुपुर्यां गृहे गृहे संकर्षणोथ भगवान्रेवत्या विरराज ह २३ बलदेव-
विवाहस्य कथां यः शृणुयान्नरः सर्वपापविनिर्मुक्तः परां सिद्धिमवाप्नुयात् २४ इति श्रीमद्गर्गाचार्य
संहितायां श्रीद्वारकाखंडे नारदबहुलाश्वसंवादे बलदेवविवाहोत्सवो नाम तृतीयोऽध्यायः ३ श्रीनार
द उवाच अथ श्रीकृष्णदेवस्य विवाहं शृणु मैथिल सर्वपापहरं पुण्यं चतुर्वर्गफलप्रदं १ भीष्मको नाम रा
जाभूद्विदर्भेषु प्रतापवान् कुंदनाधिपतिः श्रीमान्सर्वधर्मविदां वरः २ रुक्मिणी तत्सुता जाता श्रियो-
मात्राति सुंदरी कोटिचंद्रप्रतीकाशा गुणभूषणभूषिता ३ श्रुत्वैकदा पुरा सा वै मन्मुखाच्छ्रीहरेर्गुणान्
परिपूर्णतमं तं वै सा मेने सदृशं पतिः ४ तद्रूपं सद्गुणं श्रुत्वा मन्मुखात्प्रीतिवर्द्धनात् सदृशीं श्रीहरिस्तां वै
समुद्वोढुं मनो दधे ५ कृष्णाभावविदा राज्ञा सर्वे धर्मविदा भृशं भीष्मकेनैव कृष्णाय दातुं सा निश्चये कृता ६
युवराजस्ततो रुक्मी तं निवार्य्य प्रयत्नतः कृष्णाशत्रुर्महावीरः शिशुपालममन्यत ७ ततः खिन्नमना भैष्मी
श्रीकृष्णाय महात्मने दूतं स्वं प्रेषयामास ब्राह्मणं मिथिलेश्वर ८ स द्वारकां गतो दिव्यां श्रीकृष्णेन प्रपू



123

तेकथितं द्वारकावासकारणं विवाहादिकथासर्वांवदिष्यामिपरेशयोः १ पूर्वंश्रीबलदेवस्यविवाहंशृणुमै
थिल सर्वपापहरंपुण्यमायुर्वर्द्धनमुत्तमं २ आनर्त्तोनामराजाभूत्सूर्यवंशेमहामनाः यन्नाम्नानर्त्तदेशःस्या
त्समुद्रेभीमनादिनी ३ रैवतोनामतत्पुत्रश्चक्रवर्तीगुणाकरः राज्यंचकारसपुरींविनिर्मायकुशस्थलीं ४
तस्यपुत्रंशतंचासीद्रेवतीनामकन्यका सर्वोत्तमंचिरंजीवसुंदरंवरमिच्छती ५ एकदारथमास्थायहे-
मरत्नविभूषितं आरोप्यस्वांदुहितरंरैवतःपर्यटन्भुवं ६ भासोयोगबलेनापिब्रह्मलोकंशुभावहं कन्या
वरंपरिप्रष्टुंब्रह्माणंप्रणनामह ७ गायंत्यांसर्वचित्यांचस्थितोलब्धक्षणःक्षणं एकचित्तंविधिंज्ञात्वा
स्वाभिप्रायंन्यवेदयत् ८ रैवतउवाच परःपुराणोजगदंकराभूःपूर्णःपरमात्मापरमेश्वरासि स्थि
तःसदाधामनिपारमेष्ठ्ये सृजस्यलंपासिचहंसिसीदं ९ वेदामयंधर्मधरस्त्वदेव पृष्टोत्थधर्मश्चमनुर्मनी
षां अंगानिदेवाश्चसुराश्चपापा सर्वासृतिर्देवतनुस्तवस्यात् १० करोसिहस्तामलकंचविश्वंनेतुंप्रभुः
सारथिवद्गुणेषु एकस्त्वमेकंचविधायजालंग्रसिष्यसेसर्वमिवोर्णनाभिः ११ महेंद्रधिष्ण्यातववश्यम
स्ति किंसार्वभौमंकिंयोगसिद्धिः यःपारमेष्ठ्यंचसदास्थितोसि तस्मैनमोनंतगुणायभूम्ने १२ भवान्
स्वयंभूर्जगतांपितामहो विधेसुरज्येष्ठइतिप्रभावतः अस्यावरंसर्वगुणंचिरायुषं वदाशुमादिव्यमशेष
दर्शनः १३ नारदउवाच एतच्छ्रुत्वाततोब्रह्मास्वयंभूःसर्वदर्शनः रैवतंप्राहराजानंप्रहसन्निवमैथिल
१४ श्रीब्रह्मोवाच अत्रक्षणेनहेराजन्भुविकालोमहाबली त्वंरध्यनीतस्त्रिनवचतुर्युगविकल्पितः
१५ नसंतिमर्त्यलोकेतत्पुत्राःपौत्राःसबांधवाः तत्पुत्रपौत्रनप्तॄणांगोत्राणिचनशृणमय १६ तद्गच्छ

र्ज्जंतोलकानिविरेजिरे पारावतामयूराश्च यत्रतत्रपतंतिच २७ शिशुपालायस्वांकन्यांदास्यन्राजातुभीष्मकः चक्रेविवाहसंभारसाचयंमाहूयासरं २८ गीतमंगलसंयुक्तैनारीभिर्भवनोत्तमे रराजरुक्मिणीराजन्सिद्धिभिर्भूर्यथा भुवि २९ अथर्वविद्द्विजाभैष्मींस्नातांरत्नवाससं चक्रुर्मंत्रैस्तथारक्षांवध्वाशांतिविधायच ३० हैमानांभारलक्षंचमुक्तानांद्विगुणंतथा सहस्रभारवस्त्राणांधेनूनामर्बुदानिषट् ३१ गजाश्वतंरथानांचदशलक्षमनोहरं दशकोटिंहयानांचगुडादितिलपर्वतम् ३२ सहस्रस्वर्णपात्राणांभूषणानांतथायुतं विप्रेभ्यःप्रददौराजाभीष्मकोतिमहामनाः ३३ तथावैदमघोषस्यशिशुपालायवैद्विजाः चक्रुःशांतिपरांपूर्वविस्मृत्यैकरदार्चनं ३४ ब्राह्मणैर्मंगलस्नातंपीतकंचुकशोभितं मुकुटोपरिबिभ्राजत्पुष्पमौलिहरंशुभं ३५ हारकंकणकेयूरशिखामणिविभूषितं मंगलैर्गीतवादित्रैर्गंधाक्षतविचर्चितं ३६ आचारलाजैःस्रवरंशिशुपालंविधायच आरोप्यकरिणंप्रोच्चं दमघोषोविनिर्ययौ ३७ जरासंधेनशाल्वेनदंतवक्रेणधीमता विदूरथेनपौंड्रेणपार्ष्णिग्राहेनमैथिल ३८ विकर्षन्महतींसेनांदमघोषोमहाबलः दुंदुभीन्नादयन्दीर्घान्नाययौकुंडिनपुरं ३९ सन्मुखाद्यदुदेवस्यश्रुत्वोद्योगंनृपापरे सहस्रशःसमाजग्मुः शिशुपालसहायिनः ४० भीष्मकोत्वग्रतोगत्वासंपूज्यविधिवन्नृपं काश्मीरकंबलैर्दिव्यारुणैः सामुद्रसंभवैः ४१ मंडितेषुचसर्वेषुमुक्तादामविलंबिषु सौगंधिकैःपुष्परसैराष्ट्रेषुशिबिरेषुच ४२ वारांगनानृत्यलसन्मृदंगेषुप्रध्वन्सुच निवेशयामासनृपेविदर्भाधिपतिर्महान् ४३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेकुंटनपुरयाननामचतुर्थोध्यायः ४ श्रीनारदउवाच

जितः भुक्तवांस्तत्रचासीनोविश्रांतोमंदिरेहरेः ९ पृच्छतेकुशलंसर्वंश्रीकृष्णायमहात्मने ब्राह्मणस्तदनुज्ञात
स्तस्मैसर्वमवर्णयत् १० स्वस्तिश्रीकारपंचाढ्येनित्यानंदमहोदधौ श्रीमद्दिव्यगुणैःपूर्णेकोटिशोनतयोमम
११ शमत्रास्तुचतत्रास्तुततस्त्वत्सत्रमागतं नारदोक्तेनवचसाज्ञातोसिप्रकृतेःपरः १२ सर्वंजानासिसर्वज्ञ
स्तथावक्ष्येवचोरहः वीरभागंतुमांविद्धित्वंगृहाणमहामते १३ मानैद्यःप्रतिगृह्णीयाद्यथासिंहबलिंमृगः
कथंत्वामुद्वहेदुर्गेस्थित्वामितिचतत्शृणु १४ सर्वेद्युःकुलदेव्यास्तु यात्रास्तिमाममलोमही आगमिष्याम्य
हंयत्रतत्रमांत्वंगृहाणभो १५ श्रीनारदउवाच रुक्मिण्यासमभिप्रायंश्रुत्वाब्राह्मणभाषितं रथःसंपू
ज्यनामाशुदा रुकाह्मानद्धः १६ पश्चिमायातदारान्तोवैकुंठप्रभवंपरं किंकिणीजालसंयुक्तंहेमरत्न-
खचितप्रभं १७ सदश्वैःशैब्यसुग्रीवमेघपुष्पबलाहकैः नियोजितैदारुकेनचंचलैश्चारुचामरैः १८
युक्तंमहारथंदिव्यंसहस्रादित्यवर्चसं आरुह्यसारथिःपृष्ठेधृत्वाश्रीपादपंकजं १९ स्वहस्तेनद्विजंतस्मि
न्समारोप्यरमापतिः विदर्भान्प्रययौराजन्श्रीकृष्णोभगवान्हरिः २० कृष्णंचैकंगतंहर्तुंकन्यांतु
नृपमंडलात् कलिप्रशंकितोरामःश्रुत्वाभ्रातृसहायकृत् २१ नीत्वायदुबलंसर्वंसमर्थबलवाहनं वि
पक्षीयान्नृपान्जेतुंबलःपश्चाद्ययौत्वरं २२ कुंडिनोपवनंप्राप्तःसद्विजःसरथोहरिः संतस्थौचिंचिणीवृ
क्षेश्चास्तीर्याश्वपरिच्छदं २३ दूरात्संदृश्यतेतस्मात्कुंडनंतुपुरंपरं दीर्घदुर्गसमायुक्तंसप्तयोजनवर्तुलं
२४ दुर्लंघादुर्गमायत्रपरिखाजलपूरिता धनुःशतविस्तृतास्तिन्वालुभांस्यनदीवसा २५ पंचाश-
द्धस्तमानेनदुर्गाभित्तिस्तथोर्द्धगा यत्ररम्याणिहर्म्याणिस्फुरद्धेमशिखानिच २६ हेमकुंभध्वजस्फु-

कन्यकापूजनहेतवेनृपः अंतःपुरात्सर्वसखीसमन्विता विनिर्ययौकृष्णगृहीतमानसा १६ भेरीमृदंगैर्बहु
दुंदुभिस्वनैः सुगायकैर्बंदिजनैश्चमागधैः वारांगनानृत्यमनोज्ञभावैर्जयेत्यभून्मंगलशब्दमुच्चकैः १७
कोटींदुबिंबद्युतिमादधानां बालार्कताटंकधरांश्रियंतां सितातपत्रव्यजनैःस्फुरद्भिःसचामरैःपार्श्वगणाः-
सिषेवि १८ कोशाद्विनिःकृष्यसितासिलक्षं पदातयोवीरजनाइतस्ततः तथास्वगावैरथिनोगजस्थिताः
समुद्यतास्त्वाजुगुपुर्विदूरतः १९ देवीमठंप्राप्यसुचत्वरेस्थिता शांताशफान्विधौतकारांघ्रिपंकजागत्वासमी
पंयतवाक्कृतांजलि र्भेजेभवानींभवभीतिहारिणीं २० दुर्गेस्वसंतानयुतेशिवेशुभे नमामितुभ्यंसततं
भवानिते भूयात्सतिर्मेभगवान्परेश्वरः श्रीकृष्णचंद्रःप्रकृतेःपरःस्वयं २१ एवंशुभेमावदकृष्णनामं चै
द्यंसमुद्दिश्यवरंगृहाण इत्थंवदंतीषुसखीषुभैष्मी भूयोभवानींभवनेजगाद २२ अजानतीयंवदती ब-
लातदा वदंतीषुसखीषुभैष्मी गंधाक्षतैर्धूपविभूषणाद्यैः स्रग्माल्यदीपावलिभोगवस्त्रैः २३ आपूप
तांबूलफलेक्षुभिश्च भेजेभवानींपरयाचभक्त्या नत्वाथतावाबहुभूषणाद्यैः संपूज्यसौभाग्यवतीननाम
२४ सर्वास्त्रियस्ताःप्रददुर्वराणि सुमंगलाशीर्वचनानितस्यै रूपंसदातेशतरूपयासमं शीलंसदाशैलसु
तासमंप्रभो २५ शुश्रूषणंभर्तुररुंधतीसमं क्षमाहिभूयाज्जनकात्मजासमा २६ सौभाग्यमेवंतवदक्षिणा
समं सुवैभवंभीष्मसुतेशचीसमं सरस्वतीतेचसरस्वतीसमा भक्तिःपतौस्याच्चसतांहरौयथा २७ इतिश्री
मद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेरुक्मिणीनिर्गमनंनामपंचमोध्यायः ५ श्रीना
रदउवाच इत्थंविप्रवधूनांच दाशीभिरभिनंदिता देवींपुनर्विप्रवधूःप्रणनाममुहुर्मुहुः १ त्यक्त्वामुनिव्र-



125

ध्यायंतीकृष्णपादाब्जंभैष्मीकमललोचनी मेयंवालभतेवार्तामेघश्याममचिंतयत् १ रुक्मिण्युवाच

अहोत्रियामांतरितोविवाहो ममैवनागच्छतिकृष्णचंद्रः नवेद्मिकिंकारणमत्रधातर्नवितनेऽद्यापिचभूमिदेवः २ यदूत्तमोदेववरोममैषदृष्टाहिकिंचित्कलुषाविधातः कुतोद्यमोनूनमतीवहस्त ग्राहेनचागच्छतिकिंकरोमि ३ हादुर्भगायाश्चनमेविधाता नसानुकूलःकिलचंद्रमौलिः नचैकदंतोविमुखाचगौरी गावाहिविप्राश्चनसानुकूलाः ४ श्रीनारदउवाच एवंचिंतयभैष्मी टकाद्यालभूमिषु परिभ्रमंतीश्रीकृष्णपश्यंतीगृहशेखरान् ५ तदैवतस्यावामांगमस्फुरत्प्रतिभाषणं तेनप्रसन्नाश्रीभैष्मीकालज्ञासर्वमंगला ६ कृष्णप्रणोदितोविप्रस्तद्यश्चागतवान्तदा श्रीकृष्णागमनंतस्यैशनैःसर्वशशंसह ७ ततःप्रसन्नाश्रीभैष्मीतद्दंघ्रोःप्रणिपत्यसा प्राहत्वद्दूशतोविप्रनयास्यामिवचोमम ८ श्रुत्वागतौरामकृष्णौविवाहप्रेक्षणोत्सुको भीष्मकोनिर्गतोनेतुंब्राह्मणैस्तत्प्रभाववित् ९ भूशंमंगलयानेषुगंधाक्षतयुतेषुच वासोरत्नचयंधृत्वागीतवादित्रमंगलैः १० कोटिशोमधुपर्काणींकुंभव्यूहान्विधायच पूजयित्वाथविधिवद्रामकृष्णौपरेश्वरौ ११ अहोचास्मैनदत्तेयमितिखिन्नमनापरं आनंदनवनेस्थाप्यनत्वास्वगृहमाययौ १२ श्रुत्वागतंश्रीवसुदेवनंदनं त्रैलोक्यलावण्यनिधिंपरेश्वरं आगत्यनेत्रांजलिभिःपुरौकसः पपुःपरंतन्मुखपंकजामृतं १३ अस्यैवभार्याभवितुंहिरुक्मिणी योग्यास्तिनान्येऽस्त्यवदन्पुरौकसः दत्वास्वपुण्यानिविवाहहेतवे श्रीकृष्णलावण्यकलानिबंधकाः १४ कदापिसाक्षाच्छ्वशुरस्यमंदिरं सप्राप्रागतंचैवमहोवयंजनाः द्रक्ष्यामसंस्मारात्कृतकृत्यतांतदा व्रजेमलोकेबहुजीवितेनकिं १५ वदत्सुलोकेषुचभीष्मकन्यका द्रि-

माजग्मुःसहस्रशः २० प्रलयाब्धिसमंसैन्यंसमालोक्ययदूत्तमाः तत्रैमाजग्मुरारात्तेकृष्णौकैवर्त्तपोतकाः २१
बभूवतुमुलंयुद्धमद्भुतंरोमहर्षणं सैन्ययोश्चस्वपरयोर्देवदानवयोर्यथा २२ रथिनोरथिभिस्तत्रपतिभिः
सहपत्तयः गजागजैर्युयुधिरेतुरंगाश्चतुरंगमैः २३ शस्त्रांधकारेसंजातेरुक्मिणींभयविह्वलां विलोक्य-
भगवान्देवोमाभैषेत्यभयंददौ २४ बलदेवानुजोवीरोगदोधुन्वन्महद्धनुः विवेशशत्रुसंघट्टंवनंवज्रीइ
वप्रभुः २५ गदबाणविभिन्नांगारथिनश्छिन्नकंचुकाः हताश्वाहतसूताश्चनिपेतुर्भूमिमंडले २६ पदात
यश्छिन्नपदागदबाणागतव्यथाः निपेतुर्भूतलेराजन्वृक्षावातहताइव २७ अश्वारूढाःकेपिवीरागदबाणैर्विदा
रिताः पेतूरणांगणेसाश्वाःवृहतीफलवन्नृप २८ गदबाणैर्भिन्नकुंभामध्येमध्येविदारिताः विरेजुःपतिता
भूमौकुष्मांडशकलाइव २९ ततःपलायितंसैन्यंदृष्ट्वाशाल्वोमहाबलः गदंतताडगदयागदायुद्धविशारदः ३०
गदाविद्धोगदोधन्वीगदायुद्धप्रभाववित् धनुर्युद्धंसतत्याज्यतत्कालान्मनसात्वरं ३१ परांव्यथांगतेयुद्धेपति
तोपिसमुत्थितः तदाग्रजेनयादत्तातांगदांतुगदोग्रहीत् ३२ लक्षभारमयींगुर्वीपावकोमोदकींयथा तयागदो
हनच्छाल्वंवज्रेणेंद्रोयथागिरिं ३३ गदाप्रहारमथितेशाल्वेनिपतितेभुवि पौंड्रकोथजरासंधोदंतवक्रोविदूरथः
३४ चत्वारोन्नाययुस्तत्रगदोपरिरुषान्विताः पौंड्रकोपिमहावीरोगदस्यरथगांध्वजां ३५ चिच्छेददशभिर्बा
णैःकृत्वा क्ष्मैर्मिश्रतामिव ३५ दंतवक्त्रस्तुगदयागदस्यापिरथंशुभं चूर्णयामासराजेंद्रदंडेनेवसुमृद्घटं
३६ तथाश्वांश्चजरासंधःसारथिंचविदूरथः पातयामासभूपृष्ठेशितैर्बाणैर्विदेहराट् ३७ ततोमुशलमादा
यबलदेवस्त्वरंबली विकारालेमुखेभीमेदंतवक्त्रमताडयत् ३८ ततोमुशलघातेनदंतवक्त्रस्ययुध्यतः

तंभैष्मीगिरिजागृहनस्ततः सहालिभिःसर्वाभिश्चनिश्चक्रामशनैःशनैः २ कोटिचंद्रप्रतीकाशांभैष्मींकम
ललोचनां अकस्माद्ददृशुर्वीरास्सनिधिंनिर्धनायथा ३ अश्वारूढाश्चरथिनोगजिनोश्चपदातयः समागता
रक्षितारस्तेमुमुहुर्वीक्ष्यरुक्मिणीं ४ तदपांगमितैस्तीक्ष्णै र्बाणैःकामधनुश्च्युतैः उज्झितास्त्रानिपेतुःकाच-
र्दिताःसैन्यकास्तदा ५ रथेनवायुवेगेनघंटामंजीरनादिना नैश्चेयसंभवैरश्वैर्युतेनातिपताकिना ६ शी
घ्रंस्वसैन्यसंघट्टात्तत्सैन्यंसंविदारयन् वायुर्यथापप्रवनंहरिर्दारुकसारथिः ७ स्त्रीकदंबकमेत्याशुपश्य-
तांद्विषतांप्रभुः समारोप्यरथंभैष्मींतार्क्ष्यपुत्रःसुधामिव ८ देवानांपश्यतांराजन्राजकन्यांजहारह दिव्यंश
ङ्खोत्तमशार्ङ्गंधनुष्टंकारयन्मुहुः ९ ततोवेगेनमहतास्वसैन्यंचागतोहरिः देवदुंदुभयोनेदुर्यदुदुंदुभयस्तदा
१० सिद्धाश्चसिद्धकन्याश्चश्रीकृष्णस्यरथोपरि हर्षितावद्वृषुर्देवाःपुष्पैर्नंदनसंभवैः ११ ततोययौजयारा
वैःशनैरामयुतोहरिः शृगालसंघमध्याच्चकेसरीभागहृद्यथा १२ तदाकोलाहलेजातेरुक्मिणीहरणे
सति बभूवरक्षकानांचशस्त्राशस्त्रिपरस्परं १३ जरासंधवशाःसर्वेमानिनोनृपसत्तमाः नसेहिरेस्वाविभ
वपरंजातंयशःक्षयं १४ अहोधिगस्मान्स्वयशोहृतंगोपैश्चधन्विनां शृगालैरिवसिंहानामतःकिंस्यात्पराज
यः १५ एवमुक्त्वाक्रोधपराजगृहुःशस्त्रसंहतिं विसृज्यक्रीडनाक्षादीनदंशिताःसैन्यसंयुताः १६ अक्षौ
हिणीद्वयेनापिपौंड्रकःक्रोधपूरितः अक्षौहिणीत्रयेनापिमहावीरोविदूरथः १७ अक्षौहिणीपंचयुतोदंत
वक्त्रोतिदारुणः अक्षौहिणीत्रयेनाशुशाल्वोराजपुरेश्वरः १८ अक्षौहिणीभिर्दशभि र्जरासंधोमहाबलः
आययौसन्मुखेयोद्धुंयादवानांमहात्मनां १९ अन्येपिचैद्यपक्षीयायोद्धुंश्रीकृष्णसन्मुखे धनुष्टंकारयंतस्तेस

वितुमिच्छसि नचेत्त्वांसबलंसद्योनयामियमसादनं १० ययातिसायसंभ्रष्टोगोपालोच्छिष्टभुक्भवान् जरासंध
भयाद्भीतोयवनाग्रासलायितः ११ इत्युक्त्वेषुधिनाकृत्यबाणंचापेनिधायसः नियम्यकर्णपर्यंतंनिचखानह
रेर्हृदि १२ संताडितोपिभगवानुधनुर्ज्यांतस्यनादिनीं चिछेदसायकेनाशुगरुडःपन्नगीयथा १३ निधा
यशीघ्रंकोदंडंशिंजिनींस्वर्णभूषितां रुक्मीतुदशभिर्बाणैःसंजघानहरिंरणे १४ हरिरेकेनबाणेनशिंजिनीस
हितंधनुः चिच्छेदरुक्मिणःसद्योज्ञानेनेवागुणामयं १५ कृष्णोमोघेनबाणेनमध्यतस्तांद्विधाकरोत् रुक्मी
पुनःशतैर्बाणैःसंतताडमृधेहरिं १६ छिन्नधन्वाथवैदर्भोमहाशक्तिंस्फुरत्प्रभां प्राहरद्धरयेचोक्तिंविज्ञा
नायथामुनिः १७ तताडगदयातांवैगदाधारीगदाग्रजः द्विधाभूतामहाशक्तीरुक्मःसूतंजघानह १८
कौमोदकीगदागुर्वीपतंतीवेगधारिणी तद्रथंचूर्णयामाससाम्बंशैलंयथापविः १९ प्राहरद्धरयेसोपिगदां-
स्वांभीष्मकात्मजः चक्रेणचूर्णयामासभगवानपितांपुनः २० परिघंवंगजंनीत्वारुक्मीरुक्मांगदोबली
जघानश्रीहरिंस्कंधेजगर्जघनवन्मृधे २१ संताडितोपिभगवान्मालाहतइवद्विपः तेनैवपरिघेनापितंज
घानरणांगणे २२ परिघाभिहतोरुक्मीकिंचिद्व्याकुलमानसः भर्त्सयन्माधवंव्याजोजग्राहखड्गचर्म-
णी २३ तत्खड्गंचर्मणाछित्वास्वखड्गंप्राहरद्धरिः खड्गाग्रेणशिरस्त्राणःकंचुकश्चोद्यातोमहान् २४ ह
स्तत्राणेपियुगपदेतच्छिन्नीकृत्तेमृधे खड्गमुष्टिकरंदृष्ट्वारुक्मिणंसमुपस्थितं २५ गृहीत्वाभुजदंडाभ्यां-
पातयित्वामहीतले तस्योपरिहरिःस्थित्वायथासिंहोमृगोपरि शितधारंनंदकाख्यंखड्गंजग्राहरोषतः २६
दृष्ट्वाभ्रातृवधंखड्गंरुक्मिणीभयविह्वला पतित्वापादयोर्भर्तुरुवाचकरुणंसती २७ श्रीरुक्मिण्युवाच

मुखेवक्रोपियोदंतःसतुभूमौपपातह ३९ नदाहसतिदैत्यारीरुक्मिणीसहितेहरौ पौंड्रकंचजरासंधंतथादुष्टं
विदूरथं ४० जघानमुशलेनाशुबलदेवोरुषान्वितः त्रयोपिपतितायुद्धेमूर्छितास्राक्षतासुता: ४१ सेनांसमा
गतांसर्वांसमाकृष्यहलेनवै मुशलेनाहतत्क्रुद्धोबलदेवोमहाबलः ४२ दशयोजनपर्यंतंरथेभाश्वपदातयः पे
शिताचूर्णिताभूमौशयानाधरणींगताः ४३ जरासंधादयःसर्वेमृत्यशेषानृपापरे पला तांश्वेद्यमे प्रोचु
र्नष्टोत्सवंभृशं ४४ भोभोपुरुषशार्दूलदौर्मनस्यमिदंत्यज किमेकेनविवाहेनभवितातेशतंभुवि ४५ अद्यैव
द्वारकांगत्वाबध्वारामंसमाधवं अयादवींकरिष्यामःपृथ्वींसागरमेखलां ४६ एवंसंबोधितोमित्रैश्चैद्योगा
च्चंद्रकापुरं ययुःस्वस्वंपुरंसर्वेहतशेषानृपास्ततः ४७ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनार
दबहुलाश्वसंवादेरुक्मिणीहरणेयदुविजयोनामषष्ठोध्यायः ६ श्रीनारदउवाच रुक्मिण्याहरणंश्रु
त्वामित्राणांचपराभवं प्रतिज्ञामकरोद्रुक्मीशृण्वतांसर्वभूभुजां १ अहत्वासमरेकृष्णमप्रत्यूह्यचरुक्मिणीं
कुंडिनंनप्रवेक्ष्यामिसत्यमेतद्ब्रवीमिवः २ इत्युक्त्वाकवचंदिव्यंघनमर्बुदनिर्मितं शिरस्त्राणंासिंधुजंचसद
धारमहोद्भटः ३ सौवीरस्यधनुःशालिलाढजंचेषुधिद्वयं आदायम्लेच्छदेशस्यखड्गंचर्मचकोटजं ४ ये
दरस्यमहाशक्तिंगुर्जरराटभवांगदां परिघंवंगजंधृत्वाहस्तत्राणंचकौंकणं ५ बद्धगोदांगुलित्राणःकिरी
टीरत्नकुंडलः रुक्मांगदस्तदारुक्मीयुद्धंकर्तुमनोदधे ६ जैत्ररथंसमारुह्यचंचलाश्वनियोजितं पृष्ठतोचग
मत्कृष्णांकर्षणक्षौहिणीद्वयं ७ पुनःसमागतांदृष्ट्वासेनांसप्तोमहाबलःतयाशुयोधसमरेयदुसेनासमन्वितः ८
तिष्ठतिष्ठेतिदेवेशंविसृजन्परुषंवचः संप्राप्तोतिरथंरुक्मीधनुष्टंकारयन्मुहुः ९ त्वंरमुंचस्वसारंमेयदिजी

भवेनमुक्तिं सएवभुक्तिंप्रतियातिमुक्तः ४५ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेश्रीरुक्मिणीविवाहोनामसप्तमोध्यायः ७ श्रीनारदउवाच अन्यासांकृष्णापत्नीनांमंगलंशृणुमैथिल सर्वपापहरंपुण्य मायुर्वर्द्धनमुत्तमं १ सत्राजितायसूर्येणदत्तःसाक्षात्स्यमंतकः उग्रसेनायसमणिःश्रीकृष्णेनाभियाचितः २ सत्राजितस्तंनददौद्रव्यलोभेनमैथिल दिनेदिनेस्वर्णभारानष्टौयःसृजतिस्वतः ३ अथप्रसेनस्तद्भ्रातामणिंकंठेनिधायसः सैंधवंहयमारुह्यमृगयाव्यचरद्वने ४ सिंहेनमारितःसोपिसिंहोजांबवताहतः गृहीत्वातंमणिंसद्योजांबवान्स्वगुहांगतः ५ कृष्णेननिहतोभ्रातामणिग्रीवोवनंगतः नायातःस्वसभामध्येइतिसत्राजितोब्रवीत् ६ भगवान्दुर्यशोलिप्तोनागरैस्तुवनंगतः प्रसेनमश्वंसिंहंचहतंप्रेक्ष्यमहामते ७ ऋक्षराजबिलंगत्वामणिंहर्तुंस्वयंहरिः युद्धंकृत्वाष्टविंशाहमजयदृक्षनायकं ८ तेनदत्तांजांबवतींहरयेकन्यकांशुभां मणिनासहराजेंद्रद्वारकामाययौहरिः ९ सत्राजितायप्रददौमणिंनिर्लोभनःप्रभुः व्रीडितोवांङ्मुखोभीतोराजासत्राजितोमणिं १० गृहीत्वापिपुनस्तस्मैश्रीकृष्णायमहात्मने सत्यभामांसुतांप्रादात्शांत्यर्थंमैथिलेश्वर ११ पांडवानांसहायार्थमिंद्रप्रस्थंगतोहरिः तत्रैववार्षिकान्मासान्न्यवासीद्भक्तवत्सलः १२ एकदारथमारुह्यहरिर्गांडिविनासह मुनीरेयमुनातीरेमृगयार्थीविनिर्ययौ १३ तपश्चरंतींकालिंदींश्रीकृष्णंवरमिच्छतीं दर्शितांपांडवेनापितांगृहीत्वाजगामह १४ द्वारकामेत्यकालिंदींसूर्यकन्यांमनोहरां उपयेमेविधानेनवितन्वन्मंगलंपरं १५ अवंत्यराजतनुजांमित्रविंदांमनोहरां स्वयंवरेतांजहारभगवान्रुक्मिणीयथा १६ नग्नजित्कन्यकांसत्यांदमित्वासप्तगोवृषान् पश्यतांसर्वलोकानामुपयेमेहरिःस्वयं १७ केकेयराज-

अनंतदेवेशजगन्निवासयोगेश्वराचिंत्यजगत्सतेत्वं हंतुंनयोग्यः करुणासमुद्रे मद्भ्रातरंशालभुजंमहाभुजः २८
श्रीनारदउवाच परित्रासैर्यदंगांतांदुःखशुष्यन्मुखींप्रियां रुद्धकंठांसतींवीक्ष्यन्यवर्तततहरिःश्वयं २९ बध्वातंक-
टिबंधनखड्गेनशितधारिणा वपनंश्मश्रुकेशानांचकारार्द्धमुखेहरिः ३० अक्षौहिणीद्वयंजित्वारामःप्राप्तः
ससैनिकः बद्धंविरूपिणंदीनरुक्मिणंतुददर्शह ३१ विमुच्यबद्धंसदयःप्राहनिर्भर्त्सयन्हरिं असाध्विदंत्व
याकृष्णकृतलोकजुगुप्सितम् ३२ हास्यंवैशालभद्राणांनहिचिंताद्दशंभवेत् यस्यास्सहोदरेमुख्येविरूपेच
त्वयाकृते ३३ किंवदिष्यतिसापित्वांभ्रातुर्वैरूप्यचिंतया माशोचंकुरुकल्याणिस्वस्थाभवस्मचिस्मिते ३४
आर्यपुत्रमहाबुद्धेमाशोचंकुरुदुर्मनाः सर्वकालकृतंमन्येप्रियमप्रियमेववा ३५ वायोर्घनावलिरिववशेय-
स्याखिलंजगत् तंकालमीश्वरंविद्धिविष्णुंकलयतांप्रभुं ३६ अहंममेतिभावोयंजगतोबंधकारणं ताभ्यां
विरहितोभावोमोक्षएवनसंशयः ३७ सुखदुःखप्रदोनान्यःपुरुषस्यात्मविभ्रमः मित्रोदासीनरिपवःसंसार
तमसःकृतः ३८ एवंरामेणदेवेनवादितोभीष्मकात्मजः वैमनस्यंपरित्यज्यरुक्मिणीचययौमुदं ३९ रु-
क्मीतुताभ्यामुत्सृष्टोवितथात्ममनोरथः स्मरन्विरूपकरणंतपसेसमनोदधत् ४० बारितोमंत्रमुख्यैश्चकुंडि
नंनगतःपुनः चक्रेभोजकटंनामनिवासायपुरंपरं ४१ रुक्मिण्यासहगोविंदःसरामोयदुभिर्वृतः द्वारकांप्रय
योराजन्नादयन्जयदुंदुभीन् ४२ जातेमहोत्सवेपुर्य्यांरुक्मिणींरुचिराननां उपयेमेविधानेनमार्गशीर्षेह
रिःस्वयं ४३ हरेर्विवाहंसतिरुक्मिणीपतेः श्रीरुक्मिणीभूषितरुक्ममंदिरा पुरंदरस्यापियथामरावती द्वाराव
तीपुण्यवतीतथाबभौ ४४ भैष्मीविवाहस्यकथांविचित्रां शृणोतियःश्रावयतेचभक्त्या इहैवमुक्तावि-

णामयुतंभुवि ४ उत्तानबर्हिरानर्त्तोभूरिषेणइतित्रयः शर्य्यातेरभवन्पुत्राः सर्वधर्मभृतांवराः ५ उत्तानब-
र्हिषेपूर्वांभूरिषेणायदक्षिणां पश्चिमांचदिशंसर्वामानर्तायददौनृपः ६ ममेयंहिमहीकृत्स्नामयाधर्मेण
पालिता बलार्ज्जिताबलिष्ठेनयूयंतांपालयिष्यथ ७ पितुर्वचःसमाकर्ण्यआनर्तोमध्यमःसुतः ज्ञानी-
ज्ञानमयंवाक्यमुवाचप्रहसन्निव ८ आनर्तउवाच नवेयंनमहीकृत्स्नानत्वयापालिताक्वचित् नत्वद्बला
र्ज्जिताराजन्बलिष्ठोभगवान्भुवि ९ महीश्रीकृष्णावेषस्यतेनैवपरिपालिता तत्तेजसार्जिता कृत्स्नाबलिष्ठा
न्हरेःसमः १० सएवविश्वंस्वकृतंसृजत्यत्तिचपातिच सएवब्रह्मपरमंकालःकलयतांप्रभुः ११ योंतःप्र-
विश्यभूतानिभूतैरप्यखिलाश्रयः सविश्वाख्योधियज्ञोसोपरिपूर्णतमःस्वयं १२ यद्भयाद्वातिवातोयंसूर्य्य
स्तपतियद्भयात् यद्भयाद्वर्षतेदेवोमृत्युश्चरतियद्भयात् १३ परिपूर्णतमंसाक्षाच्छ्रीकृष्णंपरमेश्वरं भजसर्वा
त्मनाराजन्साहंकारसमाचर १४ नारदउवाच ज्ञानंप्राप्तोपिशर्य्यातिराक्षिप्तःपुत्रवाक्शरैः आनर्तंस्व-
सुतंप्राहरुषाप्रस्फुरिताधरः १५ शर्य्यातिरुवाच दूरंगच्छ असद्बुद्धे गुरुवद्भाषसेकथं यावद्भुक्तंतुमेराज्यं
तावत्त्वंमामहींवशः १६ यस्त्वयाराधितकृष्णःसोपिसर्वसहायकृत् नवीनांकिंमहींतेवैभगवानेवदास्यति
१७ नारदउवाच इत्युक्तस्तुतदानर्तोराजानंप्राहमानदः यत्रतेचमहीराज्यंतत्रवासोनमेभवेत् १८ पित्रानिः
सारितोराज्ञाप्यानर्तोब्धितटंगतः वेलामेत्यतपस्तेपेवर्षाणामयुतंजले १९ प्रेमलक्षणयाभक्त्यासंतुष्टोभगवा
न्हरिः तस्मैस्वंदर्शनंदत्वावरंब्रूहीत्युवाचह २० कृतांजलिपुटोभूत्वानर्तउत्थायशीघ्रतः ननामकृष्णपा-
दाब्जंरोमांचीप्रेमविह्वलः २१ आनर्तउवाच नमस्तेवासुदेवायनमःसंकर्षणायच प्रद्युम्नायानिरु

१२९

तनुजांभद्रांतुभगवान्हरिः कालिंदीमिवतांशश्वदुपयेमेविधानतः १८ बृहत्सेनसुतांराजन्लक्ष्मणांलक्ष्म-
णैर्युतां छित्वामत्स्यमरीञ्जित्वाजयाहभगवान्हरिः १९ तथाषोडशसाहस्रंशतंचनृपकन्यकाः भौमंहत्वात-
न्निरोधादात्ताश्चारुदर्शनाः २० तासांमुहूर्तएकस्मिन्नानागारेषुयोषितां सविधंजगृहेपाणिनानारूपःस्व
मायया २१ एकैकशस्ताःकृष्णस्यपुत्रान्दशदशाबलाः अजीजनन्ननवमान्पितुःसर्वात्मसंपदां २२ रुक्मिण्यां
भीष्मककन्यायांप्रद्युम्नःप्रथमोभवत् कामदेवावतारोयंपितृवत्सर्वलक्षणः २३ शंबरोनिर्दयस्तोकंहृत्वाब्धौ
तंसमाक्षिपत् मत्स्योदरेगतःसोपिनममारहरेःसुत २४ मत्स्योदरेनिर्गतोसौभार्ययापरिपालितः ज्ञा
त्वाशत्रुकृतांवार्तांसकाश्मीरूढयौवनः २५ हत्वातंशंबरंशत्रुंभार्ययावरमागतः द्वारकामायथौराजन्
चित्रकर्मचतस्यतत् २६ सहरुक्मिणोदुहितरंहृत्वाभोजकटात्सुगत स्वयंवरस्थलाद्राजन्नुपयेममहा
रथः २७ तस्मात्सुतोनिरुद्धोभून्नागायुतबलान्वितः सुरज्येष्ठावतारोयंशारदेंदीवरप्रभः २८ चतुर्व्यूहावता
रस्यपरिपूर्णतमस्यहि एवंविचित्रंचरितंविवाहानांसुमंगलं २९ सर्वपापहरंपुण्यमायुर्वर्द्धनमुत्तमम् म
यातेकथितंराजन्किंभूयःश्रोतुमिच्छसि ३० इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुला-
श्वसंवादेसर्वमहिष्योद्वाहोनामाष्टमोध्यायः ८ बहुलाश्वउवाच त्रिषुलोकेषुविख्याताधन्यावैद्वारका
पुरी परिपूर्णतमःसाक्षाच्छ्रीकृष्णोयत्रवासकृत् १ श्रीकृष्णस्यांगसंभूतापुरीद्वारावतीश्रुता कस्मादिहाग-
तब्रह्मन्कस्मिन्कालेवदप्रभो २ श्रीनारदउवाच साधुसाधुत्वयापृष्टंद्वारकागमकारणं यच्छ्रुत्वा-
शुद्धतांयातिलोकाघात्यपिपातकी ३ शर्यातिनामराजाभूच्चक्रवर्तीमनोःसुतः चकारराज्यंधर्मेणवर्षा-

जनैः शतं ३ द्वारकांनगरींदृष्ट्वानरोनारायणोभवेत् द्वारकायांमृतःकोपिगर्दभोपिचतुर्भुजः ४ पश्य
न्नश्रुएवन्कथांतस्याद्वारकेतिवदन्क्वचित् दृष्टादद्यात्तृणंमृत्कंगतोयातिपरांगतिं ५ एकदारैवतभ
क्तंप्रेमानंदसमाकुलं प्रेक्ष्यस्वंदर्शनंदत्वाहरिरश्रुमुखोभवत् ६ तन्नेत्रबिंदुसंभूतागोमतीसामहा
नदी यस्यादर्शनमात्रेणब्रह्महत्याप्रमुच्यते ७ गोमतीतीरजेपुण्यंरजायोधारयेन्नरः शतजन्म
कृतंपापंमुच्यतेनात्रसंशयः ८ स्नानकालेगोमतीतिवदत्यपिनरःक्वचित् गोमत्यांस्नानजंपुण्यंल
भतेवैनसंशयः ९ मकरस्थेरवौमाघेप्रयागेस्नानमाचरेत् शताश्वमेधजंपुण्यंसंप्राप्नोतिविदेहरा
ट १० तत्सहस्रगुणंपुण्यंगोमत्यांमकरेरवौ गोमत्याश्चैवमाहात्म्यंवक्तुंनालंचतुर्मुखः ११ गोम-
त्यांचक्रतीर्थेतुपाषाणनिचयाश्चये तेसर्वेचक्रतांयांतिपूजनीयाःप्रयत्नतः १२ चक्रचिन्हंचक्रतीर्थे
द्वादश्यांस्नानमाचरेत् चक्रपाणिपदंयातिपापानांभाजनोपिहि १३ कोटिजन्मकृतैःपापैःपतितो
योपिपातकी चक्रतीर्थस्यसोपानमेत्यमुक्तिंसमारुहत् १४ बहुलाश्वउवाच गोमत्यांहिमहान
द्यांचक्रतीर्थंशुभार्थदं कथंजातंबहुमतंतन्मेब्रूहिमहामते १५ नारदउवाच अत्रैवोदाहरंतीमतिति
हासंपुरातनं यस्यदर्शनमात्रेणपापहानिःपरंभवेत् १६ अलकेशोराजराजोनिधीशोधर्मभृत्प्रभुः वैष्ण
वंयज्ञमारेभेकैलासोत्तरभूमिषु १७ तस्ययज्ञेस्वयंविष्णुरागतोवैस्वधामतः ब्रह्माशिवोजंभभेदीव
रुणोयादसांपतिः १८ वायुर्यमोरविःसोमःक्षितिसर्वजनेश्वरी गंधर्वाप्सरसःसिद्धासर्वेतत्रसमाय-
युः १९ देवर्षयःसमाजग्मुस्तथाब्रह्मर्षयोनृप धनाध्यक्षोभवत्तस्यपुत्रस्तुनलकूबरः २० रक्षायांवीर

न्द्रायसात्वतांपतयेनमः २२ पित्रानिष्कासितेोदेवत्वामहंशरणागतः देहिमत्थंभूमिमन्यांयत्रवासोहिमेभवे
त् २३ ध्रुवोपियत्प्रसादेनययौसर्वोत्तमंपदं तस्मैनमोभगवतेप्रणतक्लेशहारिणे २४ श्रीनारदउवाच
आनर्तमानतंदीनंभगवान्दीनवत्सलः प्रसन्नश्रीमुखेनाहमेघगंभीरयागिरा २५ श्रीभगवानुवाच
अन्यानमेदिनीलोके किंकर्तव्यंमयानृप स्ववचस्त्वद्दतंकर्तुमङ्गत्वयापरितोषितः २६ तस्मादेवस्यलोकस्यवै
कुंठस्यपरंतप भूखंडंयोजनशतंददामिविमलंशुभं २७ श्रीनारदउवाच इत्युक्त्वानर्तनृपतिंभगवान्
भक्तवत्सलः वैकुंठाच्चसमुत्पाट्यभूखंडंशतयोजनं २८ चक्रसुदर्शनंधृत्वासमुद्रेभीमनादिनि दधारभ
गवान्देवस्तस्योपरिविदेहराट २९ आनर्तोलक्षवर्षान्तंतत्रराज्यंचकारह पुत्रपौत्रसमायुक्तोराजन्वैकु
ठसंपदं ३० इदंश्रुत्वाथसर्यातिःपितावैविस्मितोभवत् आनर्तोनामदेशोभूदानर्तस्यप्रसादतः ३१ रेव
तस्तस्यपुत्रोभूत्श्रीशैलस्यगिरेःसुत सप्तुसाह्वस्वहस्ताभ्यामानर्तेघुन्यपातयत् ३२ सोभूद्रैवतना-
म्नापिरैवतोनामपर्वतः कुशस्थलींविनिर्माय राज्यकृत्वाथरेवतः ३३ समादायस्वकांकन्यांब्रह्मलोकं
जगामह बलदेवविवाहेपितत्कथाकथितामया ३४ तस्माद्द्वारवतींपुण्यांमोक्षद्वारांविदुःसुराः ३५
इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेद्वारकागमनकारणंनामनवमोध्या
यः ९ श्रीनारदउवाच इत्थंमयातेकथितंद्वारकागमकारणं सर्वपापहरंपुण्यंकिंभूयःश्रोतुमिच्छ
सि १ बहुलाश्वउवाच सर्वतीर्थमयीभूमिद्वारकानगरीशुभा तत्रमुख्यानितीर्थानिवदमांमुनिस
त्तम २ श्रीनारदउवाच आप्रभासात्तीर्थमयीमर्यादीकृत्ययज्ञियं भूमिमोक्षप्रदाराजन्द्वारकायां

३८ मुनिरुवाच घंटानादमहादुष्टपापबुद्धेतिलुब्धक ग्राहवत्त्वंधनग्राहीग्रहोभवमहाखल ३९
पार्श्वमौलेपापबुद्धेधनलोभमदान्वितः गजवत्प्रेरणांकुर्वन्त्वंगजोभवदुर्मते ४० नारदउवाच ताभ्यां
शापंमुनिर्दत्वानिधिंनीत्वाकुबेरतः वरंददौपुनस्तस्मैदुर्वासादुर्लभंपरं ४१ अस्मात्स्थानाच्चद्विगुणाभवंतु
निधयोनव इत्युक्त्वासनिधिःप्रागादहोत्तेजीयसांबलं ४२ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखं
डेनारदबहुलाश्वसंवादेगोमत्युपाख्यानेचक्रतीर्थमहात्म्यंनामदशमोध्यायः १० नारदउवाच
कुबेरमंत्रिणौदीनौविप्रशापविमोहितौ तत्रसाक्षात्स्वयंविष्णुःप्राहुतौशरणंगतौ १ श्रीभगवानुवाच
मदर्चासंयुतेयज्ञेभवंतौदुःखसंयुतौ ब्राह्मणानांवचोहंवैदूरीकर्त्तुंनचक्षमः २ भवतंग्राहमातंगौयुद्धं
हियुवयोर्यदा तदावैमत्प्रसादेनप्रकृतिंस्वांगमिष्यथ ३ नारदउवाच इत्युक्तौहरिणातौद्वौराजराज
स्यमंत्रिणौ बभूवतुर्ग्राहगजौजातिस्मरणसंयुतौ ४ घंटानादोभवद्ग्राहोगोमत्यांचशतंसमाः विकरालोम
हाभीमशतदंष्ट्रवपुर्द्धरः ५ पार्श्वमौलिगजेंद्रोभूत्रैवतस्यगिरेर्वने चतुर्दंतःकज्जलाभस्तुष्टप्राच्योधनुःशतं
६ वंजुलैःकुरवैःकुंदैर्वदरैर्वेत्रवेणुभिः रंभाभूर्जवटैर्युक्ते कोविदारासनार्जुनैः ७ मंदारपाटलाशोकचूत
चंपकचन्दनैः पनसोदुंबराश्वत्थखर्जूरैर्बीजपूरकैः ८ प्रपालापौतकाम्रैश्चक्रमुकैःपरिमंडिते रैवतस्य
वनेदीर्घोविचचारमहागजः ९ एकदामाधवेमासिगजेंद्रोगिरिगह्वरात् स्नातुंतांगोमतींगंगामाययौस
गणोनदन् १० चिरंसमवगाह्याप्सुशुंडादंडैरितस्ततः करेणुःकलभान्सर्वान्स्नापयामासनागराट् ११
महान्ग्रहोपितत्रस्थोबलीयान्देवनोदितः अगृहीच्चरणेनागंक्रोधपूरितविग्रहः १२ येनैवतद्गृहेनी-

भद्रोभूत्सत्सेवायांगजाननः यथामद्गुरुणा सर्वपरिवेषणकारिणः २१ बकुलेयस्सभापूज्यामकरोद्धर्म
तत्परः घंटानादःपार्श्वमौलिःकुबेरस्यतुमंत्रिणौ २२ सर्वशास्त्रविदांश्रेष्ठौदानाध्यक्षौबभूवतुः एवंहिवि
धिवद्यज्ञोबभूवपरमोत्सवः २३ अध्वरावभृथस्नातोराजराजोमहामनाः परंभागंचदेवेभ्योविप्रेभ्योद-
क्षिणामदात् २४ एवंपूर्णेध्वरेमुख्येतुष्टेदेवर्षिसत्तम आजगामाथदुर्वासादंडीछत्रीजटाधरः २५
क्रोधीकृशोपादुकांघ्रिर्दीर्घश्मश्रुःकृशोदरः दर्भासनसमित्पात्रमृगचर्मधरःपरः २६ तमागतंसमागम्यपू
जयित्वाविधानतः भयभीतःपरिक्रम्यकुबेरःप्रणनामह २७ अद्यमेसफलंजन्मसफलंमंदिरंचमे अद्य
मेसफलोयज्ञोब्रह्मन्नस्यागतेसति २८ इत्थंसंतोषितस्तेनदुर्वासाभगवान्मुनिः देवंमनुष्यधर्माणंप्राहप्र
हसिताननः २९ त्वंराजराजोधर्मात्मादानीविप्रपरायणः कृतंतेवैष्णवंयज्ञंविष्णुसंतोषकारणं ३०
नयाचितोमयात्वंवैक्वापिवैश्रवणप्रभो अद्यैवयाचनांकुर्वेज्ञात्वात्वंदानिसत्तम ३१ मद्याच्ञांसफलींकु
र्यात्तुभ्यंदास्यामिसद्वरं नचेत्त्वांभस्मसात्कुर्वेशापेनातिभयेनवै ३२ वर्ततेत्वद्गृहेसर्वत्रैलोक्यनिधयोनव
तान्मेप्रयच्छभद्रंतेतदर्थागतवानहं ३३ नारदउवाच एतच्छ्रुत्वाराजराजोदानशीलउदारधीः ओ
मितिप्रतिगृण्हीध्वंप्राहतंगुह्यकेश्वरः ३४ एवंनिधीन्प्रदास्यंतंदानाध्यक्षौनिधीश्वरं घंटानादःपार्श्वमौ
लिरूचतुलाभमोहितौ ३५ द्वावुचतुः एकोयंब्राह्मणोलोभीनिधिभिःकिंकरिष्यति लक्षंदिव्यंदहिंचा-
स्मैद्दत्तिरस्तथोत्तरा ३६ नारदउवाच तद्वचःपुरुषंश्रुत्वादुर्वासाक्रोधविग्रहः भ्रूभंगकुटलीभूतर
क्तनेत्रश्चकारह ३७ स्थलीवसर्वब्रह्मांडंचचालनिमिषद्वयं प्रणतंधनदंवीक्ष्यताभ्यांशापंमहामुनिः

सन्न्यानर्तभूमिषु २ दृष्ट्वाथभंसरःस्नात्वाहरेःपूजांचकारह तत्पूजायांमहाशंखंपापशक्त्याबिस्वतः ३
चोरयामासकक्षीवान्तस्यशिष्योतिलोभतः पूजाशंखंगतंवीक्ष्यक्रुद्धःप्राहत्रितोमुनिः ४ येननीतस्तुमे
शंखःसशंखोभवतुध्रुवं तदैवशंखरूपोभूत्कक्षीवान्शापपीडितः ५ तत्पादयोर्निपतितःपाहिमामित्युवा
चह शीघ्रंशांतस्त्रितःप्राहदुर्मतेकिंकृतंत्वया स्तेयदोषाद्दुःखपापंमद्वचनोमृषाभवेत् ६ भजश्रीकृष्णपादा
ब्जंसतेमोक्षंकरिष्यति इत्युक्त्वाथगतेराजन्चिंतदेवमहामुनौ ७ सरोवरेनिपतितःकक्षीवान्शंखरूपधृ
क् भवदन्कृष्णाकृष्णेतिशतवर्षस्थितोभवत् ८ परिपूर्णतमःसाक्षात्भगवान्भक्तवत्सलः आगत्यसरस-
स्तीरंसाभृत्येत्यभयंददौ ९ तामेघनादगंभीरांगिरंश्रुत्वाजलेचरः चुक्रोशपाहिपाहीतिदेवदेवजगत्पते १०
भुजगेंद्रभोगरुचाभुजेनभगवान्प्रभुः शंखभक्तंगजमिवप्रोज्जहारदयापरः ११ तदैवादिव्यरूपोभूच्छं
खरूपंविहायसः कृतांजलिर्हरिनत्वास्तुतिंचक्रेतदार्द्रकः १२ कक्षीवानुवाच वासुदेवनमस्तेस्तुगोविंदपुरुषो
त्तम दीनवत्सलदीनेशह्यारकेशपरेश्वर १३ ध्रुवेध्रुवपदंपात्रेप्रह्लादस्यार्तिहारिणे गजस्योद्धारिणेतुभ्यं
बलेर्बलिविदेनमः १४ द्रौपदीचीरसंतानकारिणेहरयेनमः गराग्निवनवासेभ्यःपांडवानांसहायिने १५
यादवत्राणकर्त्रेचशक्रादाभीरदक्षिणे गुरुमातृद्विजानांचपुत्रदात्रेनमोनमः १६ जरासंधनिरोधा-
र्तनृपाणांमोक्षकारिणे नृगस्योद्धारिणेसाक्षात्सुदाम्नोदैन्यहारिणे १७ वासुदेवायकृष्णायनमःसं
कर्षणायच प्रद्युम्नायानिरुद्धायचतुर्व्यूहायतेनमः १८ त्वमेवमाताचपितात्वमेव त्वमेवबंधुश्चसखात्व
मेव त्वमेवविद्याद्रविणंत्वमेव त्वमेवसर्वंममदेवदेव १९ श्रीनारदउवाच एवंस्तुत्वाहरिंराजन्कक्षी



132

तोगजेंद्रोबलदर्पितः तमाकृष्यबलिग्राहंपुनस्तेनविकर्षितः १३ करेणवश्चकलभास्तंतारयितुमक्षमाः एवंत
योर्युद्धतोश्चकर्षतोर्हिबहिर्मिथः १४ पंचशतंचवर्षाणिव्यतीयुःपश्यतांसतां एवंकश्मलमापन्नोगजोजाति
स्मरोमहान् १५ प्रेमलक्षणयाभक्त्याहरिपादकृताश्रयः सस्मारश्रीहरिंदेवंमृत्युपाशवशंगतः १६ गजेंद्र
उवाच श्रीकृष्णकृष्णसरवकृष्णवपुर्दधान कृष्णायतेविशदधिष्णुसुरेशविष्णो पूर्णप्रभोपरमयावनपुण्य
कीर्ते मांपाहिपाहिपरमेश्वरपापपाशात् १७ नारदउवाच एवंग्राहगृहीतांगंस्मरंतंचहरिंहरिः ज्ञात्वा
कृत्स्नरवगंवेगादधावद्दीनवत्सलः १८ स्वयंरवगात्समुत्तीर्य्यधावन्चक्रंसमाक्षिपत् चक्रेग्रासेपूर्वमेवग्राह
स्यापिशिरोहृतं १९ दैन्यंग्रासेधनमिवदेहाच्छिन्नंबभूवह पश्चात्प्रपतितंचक्रंगोमत्यांचदृढदनदत् पाषा
णनिचयान्सर्वांश्चक्राकारंश्चकारह २० तन्नेमिसंघर्षभवंचक्रतीर्थंशुभावहं तच्चक्रदर्शनाद्राजन्ब्रह्महं
त्याप्रमुच्यते २१ ग्राहश्छिन्नशिराभूत्वापूर्वरूपंदधारह श्रीकृष्णानुग्रहाद्धस्तीदिव्यरूपोबभूवसः २२
परिक्रम्यहरिंनत्वास्तुत्वादेवादेवंकृतांजलिः कुबेरमंत्रिणौतौद्वौजग्मतुःस्वपदंपुनः २३ देवेषुपुष्पवर्षत्सु जय
ध्वनिनदत्सुच जगामभगवान्साक्षात्स्वयंधामकृतेःपर २४ चक्रतीर्थकथामेनांयःशृणोतिनरोत्तमः
चक्रतीर्थस्नानफलंसंप्राप्नोतिनसंशयः २५ गजग्राहकथांपुण्यांयःशृणोतिसमाहितः दुःस्वप्नंनश्यते त-
स्यसुस्वप्नंभवतिध्रुवं २६ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेचक्रतीर्थोत्प
त्तौगजग्राहमोक्षोनामैकादशोध्यायः ११ श्रीनारदउवाच शंखोद्धारेतीर्थमुख्येस्वर्णदानंददातियः स
गच्छेद्वैष्णवंलोकंसर्वोपद्रववर्जितं १ श्रीकृष्णभक्तःशांतात्मात्रितोनाममहामुनिः तीर्थयात्राप्रसंगेनप्रा

दाहरंतीममितिहासंपुरातनं यस्यश्रवणमात्रेणपापशापात्प्रमुच्यते १४ आसीद्गजाह्वयेवैश्योराजमार्गपतिः
परः महागौरवसंयुक्तोनिधीशोधनदोयथा १५ वेश्याप्रसंगनिरतोविटगोष्ठीविशारदः द्यूतक्रीडनकास-
क्तोलोभमोहमदान्वितः १६ मृषावादीमहादुष्टः कुकर्मनिरतःसदा ब्राह्मणेभ्योनपितृभ्योनदेवेभ्योध
नंददौ १७ हरेःकथांप्रेक्ष्यदूराद्दूरंवैनिर्ययौत्वरं पित्रोःसेवापिनकृतानपुत्रेभ्योधनंददौ १८ त्यक्त्वाभा-
र्यांसंभिन्नोभूद्धनाढ्योदुर्मतिःखलः वेश्याप्रसंगात्तस्यापिधनार्द्धंप्रक्षयंगतं १९ अर्धंतुतस्करैर्नीतंकिंचि
त्पृथ्व्यांगतंस्वतः पुण्येनवर्द्धतेलक्ष्मीःपापेनक्षीयतेध्रुवं २० एवंसनिर्धनोजातोवेश्यासक्तोमहाखलः त
स्मिन्गजाह्वयेरम्येचौरीकर्मचकारह २१ चौरीकर्मप्रकुर्वंतंबध्वातंदामभिर्नृपः देशान्निःसारयामास
शंतनुर्नृपतीश्वरः २२ वनेपिनिवसन्सोपिजीवहिंसांचकारह समाद्वादशसाहस्रंनववर्षयदाऽधनः २३
पश्चिमांतुदिशंप्रागाद्वैश्योदुर्भिक्षपीडितः वनेवैमारितःसोपिसिंहेनतलघाततः २४ तदैवयमदूतास्तंब
ध्वापाशैरधोमुखं कशाघातैस्ताडयंतो निन्युर्मार्गेयमस्यच अथकश्चिन्महान्गृध्रोमांसंतस्यभुजस्यच २५
गृहीत्वाखंगतःसद्यःस्वादश्चंचुपुटेनतं २६ निरामिषाःखगाश्चान्येस्वामिषंजग्मुरातुराः एवंकोलाहलेजाते
शरखचिल्लादिभिःकृते २७ नजहौमुखतोमांसंपश्चिमाशांजगामह तत्समेनापिगृध्रेणतीक्ष्णतुंडेनताडिता
त् २८ तन्मुखात्प्रपतन्मांसोगोमतीसिंधुसंगमे तीर्थप्लुतेतस्यमांसेवैश्योयंपातकीमहान् २९ तेषांपा-
शमयंछित्वाभूत्वादेवश्चतुर्भुजः पश्यतांयमदूतानांविमानमधिरूढ्वसः ३० विराजयन्दिशःसर्वाःपरं
धामहरेर्ययौ ३१ गोमतीसिंधुसंगस्यमाहात्म्यंशृणुतेनरः सर्वपापविनिर्मुक्तोविष्णुलोकंप्रयातिसः ३२

वान्प्रेमपूरितः विमानवरमास्थाय यादवानांच पश्यतां २० विभ्राजयन्दशदिशः शतसूर्यसमप्रभः जगाम
वैष्णवंलोकंसर्वोपद्रववर्जितं २१ शंखोद्धारःकृतोयस्मिन्हरिणामैथिलेश्वर तस्मात्तीर्थंमहापुण्यंशंखोद्धा
रकथांगतं २२ शंखोद्धारकथामेतांय शृणोतिनरोत्तमः शंखोद्धारस्नानफलंलभतेवैनसंशयः २३
इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेशंखोद्धारमाहात्म्यंनामद्वादशोध्यायः
१२ श्रीनारदउवाच प्रभासस्यापिमाहात्म्यंशृणुराजन्महामते सर्वपापहरंपुण्यंतेजसांवर्द्धनंपरं १
गोदावर्यांगुरौसिंहेहरक्षेत्रेचकुंभगे रविग्रहेकुरुक्षेत्रेकाश्यांचंद्रग्रहेतथा २ यत्पुण्यंलभतेराजन्स्नानतो
दानतोनरः तस्माद्धतगुणंपुण्यंप्रभासेचदिनेदिने ३ यत्रस्नात्वादक्षशापात्गृहीतोयक्ष्मणोडुराट् वि
मुक्तःकिल्बिषात्सद्यो भेजेभूयःकलोदयम् ४ महापुण्यतमाराजन्यत्रप्रत्यक्सरस्वती तस्यांस्नात्वानरः
पापीसाक्षाद्ब्रह्ममयोभवेत् ५ तत्तीरेवर्ततेराजन्नाम्नावैबोधपिप्पलं कृष्णेनयत्रोद्धवायदत्तंभागवतं
शुभं ६ तंनत्वाभ्यर्च्यविधिवत्स्पृष्ट्वाश्रीबोधपिप्पलं शृणोतियोभागवतंपुराणंब्रह्मसंमितं ७ श्लोकार्धं
श्लोकपादंवाप्नोतिनियतमानसः तस्यपाणौभवेद्राजन्वैष्णवंपरमंपदम् ८ प्रौष्ठपाद्यांपूर्णिमास्यांहेम-
सिंहसमन्वितं ददातियोभागवतंसयातिपरमांगतिं ९ पुराणंनश्रुतंयैस्तुश्रीमद्भागवतंक्वचित् तेषांवृथाज
न्मगतंनराणांभूमिवासिनां १० यैर्नश्रुतंभागवतंपुराणंनाराधितोयैःपुरुषःपुराणः हुतंमुखेनैवधराम
राणांतेषांवृथाजन्मगतंनराणां ११ द्वारावत्यांतीर्थराजंगोमतीसिंधुसंगमं यत्रस्नात्वानरोयातिवैकुंठं
विमलंपदं १२ शताश्वमेधजंपुण्यंगंगासागरसंगमे तत्सहस्रगुणंप्रोक्तंगोमतीसिंधुसंगमे १३ अत्रैवो

यातेनृपसत्तमे तत्पूर्वस्यादहंप्राप्तः श्रीशैलस्यपुरेनृप २७ कलप्रियेणापिमयाश्रीशैलायमहात्मने क थितंसर्ववृत्तांतंनृपचौर्य्यसमन्वितं १८ श्रीशैलपुत्रंमोहेननिर्भर्त्स्येतिकयासिहि सुमेरुगिरिराजंचहिमवं- तंनगेश्वरं १९ श्रीशैलःप्राहधर्मात्मापुत्रस्नेहसमाकुलः एकोदैवेनदत्तोयंनपुत्रावहवश्वमे २० तंहर्तुमाग तेराज्ञिरैवतेवैमहाबले विदेशंयातिपुत्रोमेतेनराज्ञामहात्मन २१ पुत्रस्नेहाभिभूतोयंयुवयोःशरणंगतः जित्वातंरैवतंशीघ्रंपुत्रंमांदातुमर्हथ २२ जाते श्चकारणात्तोद्वौसुमेरुश्चहिमाचलः शैललक्षैःपरिवृत्तौ योद्धुमाजग्मतुर्द्रुतम् २३ ततोभुजासमुत्पाट्यहनुमानिवतंगिरिं उर्द्ध्वंकृत्वाबलाद्राजायदागंतुंमनोदधे- २४ तदैवचागतान्वीक्ष्यगिरीन्शस्त्रास्त्रधारिणः अट्टहासंचकारोच्चैस्तडिसातमिवात्मनः २५ ननादतें नब्रह्मांडंसप्तलोकैर्बिलैःसह तदैवतेषांशस्त्राणिहस्तेभ्योन्यपतन्स्वतः २६ निःशस्त्रास्ते यदाशैलाःकुर्व तःप्रध्वनिंमुहुः गच्छंतंसगिरिंनेदुर्मुष्टिभिर्जानुभिःपथि २७ यथाशूराहनूमंतंमनुपातामहाबलं तै स्ताडितोपिनजहौगिरिंराजाकरांयतः २८ मन्मुखात्तच्छ्रीहरिःश्रुत्वाशैलोद्योगंनृपोपरि सद्योभक्तसहा यार्थंभगवान्भक्तवत्सलः २९ आगत्याकाशमार्गेपिदत्वातेजःस्वकंपरं माभैष्टेत्यभयंदत्वात्वरमंतरधीय त ३० गतेहरौभगवतिभगवत्तेजसान्वितः एकहस्तेगिरिंधृत्वामुष्टिनावज्रघातिना ३१ सुमेरुंसंतता- डाशुवज्रीवबलवत्तरः तस्यमुष्टिप्रहारेणमेरुर्विह्वलतांगतः ३२ हिमवंतंबाहुवेगात्पातयित्वामहीत ले ममर्दपद्भ्यांचान्यांश्चविंध्यादीन्रणदुर्मदः ३३ विंध्यादयश्चतेसर्वेपादघातेनमर्दिताः भयभीतारणं- त्यक्त्वादुद्रुवुस्तेदिशोदश ३४ एवंजित्वाशैलसंघंतंशैलंशैलसन्निभः रैवतोपिजपारावेरानर्तेषुन्यपतन्-

इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादे प्रभाससरस्वतीबोधपिप्पलगोमतीसिंधु
संगममाहात्म्यंनामत्रयोदशोध्यायः १३ श्रीनारदउवाच द्वारावत्याःसमुद्रस्यमाहात्म्यंशृणुमानद सर्व-
पापहरंपुण्यंतत्स्नानफलदंस्मृतं १ माधव्यांपूर्णमास्यांयोव्रती स्नात्वानदीपतिं नत्वासंपूज्यविधिव
द्रत्नदानंकरोतियः २ तस्य देहेत्रयोदेवानिवसंतिमहीपते यस्यदर्शनमात्रेणनरायातिकृतार्थता ३
तद्देहस्पर्शनात्सद्योब्रह्महत्याप्रमुच्यते यत्रयत्रगतःसोपितत्रतत्रचभूःशुभा ४ दृष्ट्वातंचमृतंपापीजग्
द्धधकरोपिहि छिनत्तिपापपटलंपरंमोक्षंप्रयातिहि ५ रैवतस्याथशैलस्यमाहात्म्यंशृणुमानद सर्व
पापंहरंपुण्यंभुक्तिमुक्तिप्रदायकं ६ गौतमस्यसुतोधीमान्मेधावीनामवैष्णवः विंध्याचलेतपस्तेपेव-
र्षाणामयुतंशतं ७ तंद्रष्टुमागतःसाक्षाद्द्व्यांतरतमोमुनिः नोत्तस्थौ सनात्सोपिमेधावीतपसोत्कटः
८ अथांतरतमस्तंवैशशापक्रोधपूरितः सतामभक्तपापात्मन्नतयोर्बलविगर्वितः ९ शैलवत्तेस्थि-
तिश्चात्रवंशैलोभवदुर्मते इत्युक्त्वाथगतेसाक्षाद्द्व्यांतरतमेमुनौ १० मेधावीशैलतामाप्तःश्रीशैलस्यस्क
तोभवत् जातिस्मरोमहाबुद्धिर्विष्णुभक्तेप्रभावतः ११ एकदामन्मुखाच्छ्रुत्वामाहात्म्यंद्वारिकापुरः
तत्रवासोपिराजानंरैवतंगच्छसत्वरं १२ वदमत्प्रार्थनामुक्तांत्वंमहादीनवत्सलः सोयंमहाबलोराजा-
प्रसन्नोयदिवाभवेत् १३ तेननीतस्यमेवासोभविष्यतिहरेःपुरि इतिश्रुत्वामयाविष्णुभक्तानांशांति
कारिणा १४ रैवतायाश्रुकथितंतथोक्तंपरमंवचः सप्रसन्नःप्राहराजन्नत्रकोपिनपर्वतः १५ तत्स्थापनां
करिष्यामिसमुत्पाट्यभुजाबलात् समुन्नीयद्वारकायांप्रतिज्ञामकरोदिमां १६ एतस्मिन्तंचोरयितुंप्र

श्वमाहात्म्यंशृणुपापहरंपरं १४ यस्यश्रवणमात्रेणकर्मबंधात्प्रमुच्यते गोपीनांयत्रवासोभूत्तेनगो-
पीभुवःस्मृताः १५ गोप्यंगरागसंभूतंगोपीचंदनमुत्तमं गोपीचंदनलिप्तांगोगंगास्नानफलंलभेत् १६
महानदीनांस्नानस्यपुण्यंतस्यदिनेदिने गोपीचंदनमुद्राभिर्मुद्रितोयःसदाभवेत् १७ अश्वमेधसहस्रा-
णिराजसूयशतानिच १८ सर्वाणितीर्थदानानिव्रतानिचतथैवच कृतानितेननित्यंवैसकृतार्थोनसंशयः
१९ गंगामृद्द्विगुणंपुण्यंचित्रकूटरजःस्मृतं तस्माद्दशगुणंपुण्यंरजःपंचवटीभवं २० तस्माच्छतगुणंपुण्यं
गोपीचंदनकंरजः गोपीचंदनकंविद्धिवृंदावनरजःसमं २१ गोपीचंदनलिप्तांगंयदिपापशतैर्युतं तंनेतुंनय-
मःशक्योयमदूतःकुतःपुनः २२ नित्यंकरोतियःपापीगोपीचंदनधारणं सप्रयातिहरेर्धामगोलोकंप्रकृतेःप
रं २३ सिंधुदेशस्यराजाभूद्दीर्घबाहुरितिश्रुतः अन्यायवर्तीदुष्टात्मावेश्यासंगरतःसदा २४ तेनवैभारतेव
र्षेब्रह्महत्याकृतंशतं दशगर्भवतीहत्याकृतातेनदुरात्मना २५ मृगयायांतुबाणौघैःकपिलागोवधःकृतः
सैंधवंहयमारुह्यमृगयार्थीगतोभवत् २६ एकदाराज्यलोभेनमंत्रीक्रुद्धोमहाखलं जघानारण्यदेशेतंती
क्ष्णधारेणचासिना २७ भूतलेपतितंमृत्कगतंवीक्ष्ययमानुगाः बध्वायमपुरींनिन्युर्हर्षयंतःपरस्परं २८
सन्मुखेवस्थितंवीक्ष्यपापिनंयमराड्बली चित्रगुप्तंप्राहतूर्णंकायोग्यायातनास्यवै २९ चित्रगुप्तउवाच
चतुराशीतिलक्षेषुनरकेषुनिपात्यतां निःसंदेहंमहाराजयावच्चंद्रदिवाकरौ ३० अनेनभारतेवर्षेक्षणंनसु
कृतंकृतं दशगर्भवतीघातःकपिलागोवधःकृतः ३२ तथावनमृगानांचकृत्वाहत्यासहस्रशः तस्मादयंम
हापापीदेवनाद्विजनिंदकः ३३ नारदउवाच तदायमाज्ञयादूतानीत्वातंपापरूपिणं सहस्रयोजना-

यत् ३५ सोभूद्रैवतनामापिराजन्रैवतकोचलः हरिभक्तःशैलमुख्योद्वारावत्यांविराजिते ३६ तस्यदर्शन
मात्रेणब्रह्महत्यांप्रमुच्यते स्पर्शनाच्छतयज्ञानांफलमाप्नोतिमानवः ३७ यात्रांकृत्वापियस्यापिपरिक्रम्य
नताननः भोजनंब्राह्मणेदत्वायातिविष्णोःपरंपदं ३८ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनार
दबहुलाश्वसंवादेरत्नाकररैवतकाचलमाहात्म्यंनामचतुर्दशोध्यायः १४ श्रीनारदउवाच तस्मिन्गिरौ
यज्ञतीर्थंरैवतेनकृतंपुरा यत्रकृत्वायज्ञमेकंकोटियज्ञफलंलभेत् १ कपिटंकंनामतीर्थंकपिपातात्समु-
द्भवे गिरौरैवतकेराजन्सर्वपापप्रणाशनं २ भौमासुरसखोदुष्टोद्विविदोनामवानरः मारितोयत्ररामेण
मुष्टिनावज्रपातिना ३ सद्योमुक्तिंगतःसोपिसतांहेलनवानपि तत्रस्नात्वासदादेवाआगच्छंतिनरेश्वरः
४ कलविंकस्ययात्रायांकोटिगोदानजंफलं तस्माच्चद्विगुणंपुण्यंदंडकाख्येवनेशुभे ५ तस्माच्चतु
र्गुणंपुण्यंसैंधवाख्येमहावने जंबूमार्गेपंचगुणंपुण्यंप्राप्नोतिमानवः ६ तस्माद्दशगुणंपुण्यंपुष्करा
ख्येवनेस्मृतः तस्माद्दशगुणंपुण्यमुत्पलावर्तयात्रया ७ तस्माच्चनैमिषारण्येपुण्यंदशगुणंस्मृतं तस्मा
च्छतगुणंपुण्यंकपिटंकेविदेहराट् ८ नृगकूपंद्वारकायांतीर्थानांतीर्थमुत्तमं यस्यदर्शनमात्रेणविप्राव
घात्प्रमुच्यते ९ अज्ञानाद्ब्राह्मणस्यापिगांददौब्राह्मणायसः तेनपापेनकूपेवैकृकलासवपुर्द्धरः १०
नृगोपिदानिनांश्रेष्ठःपतितोयत्रचतुर्भुजं श्रीकृष्णेनतदुद्धारःकृतोवैपश्यतांसतां ११ तत्दिनान्नृगकूपंतु
तीर्थीभूतंमहीपते कार्तिकेपूर्णिमायांतुतस्मिन्स्नानंसमाचरेत् १२ कोटिजन्मकृतात्पापान्मुच्यतेनात्र
संशयः एकंयत्रापिगोदानंकरोतिविधिवन्नरः १३ कोटिगोदानजंपुण्यंलभेतैवनसंशयः गोपीभूमे

न्निवासतः ३ तत्तीर्थस्यापिमाहात्म्यंश्रुत्वाचंद्राननामुखात् राधास्नातुंमनश्चक्रेकृष्णाविक्षेपविह्वला ४
श्रीसिद्धाश्रमयात्रायांसूर्यपर्वणिमाधवे राधागंतुंमनश्चक्रेउत्थायकदलीवनात् ५ गोपीनांशतयूथेनसर्व
गोपगणैःसह शतवर्षेव्यतीतेषुश्रीदाम्निशापकारणात् ६ श्रीराधाशिबिकारूढाछत्रचामरवीजिता आ
नर्तेषुमहातीर्थेययौसिद्धाश्रमंसती ७ तत्रैवभगवान्साक्षाद्यादवैःपरिमंडितः स्त्रीणांषोडशसाहस्रैर्यात्रार्थं
चाययौनृप ८ बलिष्ठायैचगोपालांकोटिशःशस्त्रपाणयः सिद्धाश्रमंतेजुगुपुःसर्वतोराधिकाज्ञया ९ शत
यूथास्तथागोप्योवेत्रहस्तामहाबलाः सिद्धाश्रमेचविधिवत्स्नांतींराधांसिषेविरे १० द्वारकावासिनांतेषांस्थि
तानांस्नानमिच्छतां शस्त्रवेत्रैस्ताडितानांविविशुर्भगवत्स्त्रियः ११ केयंस्नातीतीपप्रच्छुर्यस्यावैभवम-
द्भुतं यद्घोरवात्रसंतीहसर्वेयादवपुंगवाः १२ अहोकस्यप्रियाचेयंकानामकुत्रवासिनी त्वंसर्वज्ञोहिभगवन्व-
दनोदेवकीसुत १३ श्रीभगवानुवाच वृषभानुसुतासाक्षाद्राधेयंकीर्तिनंदिनी व्रजेश्वरीमद्दयितागोपि
काधीश्वरीवरा १४ स्नातुंसिद्धाश्रमंप्राप्ताव्रजात्गोपीगणैःसह यद्घोरवात्रसंत्येतेतस्यावैभवमद्भुतं १५
श्रीकृष्णस्यवचःश्रुत्वासत्यभामाथभामिनी शनैःप्राहसपत्नीनांरूपयौवनगर्विता १६ किंवुराधारूपवतीना
हंरूपवतीकिमु बहुभिर्याचितापूर्वंरूपौदार्यगुणान्विता १७ तद्रूपकारणात्सख्यःशतधन्वामृतोभवत् अ
क्रूरकृतवर्माचपुरातौद्वौपलायितौ १८ दिनेदिनेस्वर्णभारानष्टौसंसृजतिस्वतः दुर्भिक्षमार्गरिष्टानिसर्पाधि
व्याधयोशुभाः १९ नसंतिमायिनस्तस्ययत्रास्तेभ्यर्चितोमणिः मत्पित्रापारबर्हेहेपिदत्तःसाक्षात्स्यमंतकः
२० तेनजातंमद्गृहेपिसर्ववैभवमद्भुतं प्रेम्णापरेणश्रीकृष्णंगरुडोपरिगामिनी २१ भौमासुरमहायुद्धेह



136

ग्रामे तप्ततैलमहाखले ३४ स्फुरदुत्स्फुच्छलत्फेने कुंभीपाके न्यपातयन् मलयाग्निसमो वह्निः सद्यः शीतलतां गतः ३५ वैदेहतन्निपतनात्सङ्गाद्क्षेपणाद्यथा तदैव चित्रमाचख्युर्यमदूता महात्मने ३६ अनेन सुकृतं भूमौ स्व-ल्पं वा न कृतं क्वचित् चित्रगुप्तेन सततं धर्मराजो व्यचिंतयन् ३७ सभायामागतं व्यासं संपूज्य विधिवन्नृप न त्वा पप्रच्छ धर्मात्मा धर्मराजो महामतिः ३८ यम उवाच अनेन पापिना पूर्वं न कृतं सुकृतं क्वचित् स्फुर दुत्स्फुच्छलत्फेने कुंभीपाके महाखले ३९ अस्य क्षिपणतो वह्निः सद्यः शीतलतां गतः इति संदेहतश्चेतः खिद्यते मे न संशयः ४० श्रीव्यास उवाच सूक्ष्मा गतिर्महाराज विदिता पापपुण्ययोः अथा ब्रह्मगति प्राज्ञैः सर्वशास्त्रविदां वरैः ४१ दैवयोगाद्दृश्यपुण्यं प्राप्तं वैस्वयमर्थवत् येन पुण्येन शुद्धोऽसौ तच्छृणु त्वं महामते ४२ कस्यापि हस्ततो यत्र पतिता द्वारकामृतः तत्रैवायं मृतः पापी शुद्धो भूत्तत्प्रभावतः ४३ गोपीचंदनलिप्तांगो नरो नारायणो भवेत् एतस्य दर्शनात्सद्यो ब्रह्महत्या प्रमुच्यते ४४ नारद उवाच इति श्रुत्वा धर्मराजस्तस्मानीय विशेषतः विमाने कामगे स्थाप्य वैकुंठं प्रकृतेः परं ४५ प्रेषयामास सहसा गो-पीचंदनकीर्तिवत् एवं ते कथितं राजन् गोपीचंदनकं यशः ४६ गोपीचंदनमाहात्म्यं यः शृणोति नरोत्तमः स या ति परमं धाम श्रीकृष्णस्य महात्मनः ४७ इति श्रीमद्गर्गाचार्यसंहितायां श्रीद्वारकाखंडे कृपिटकनृगकूप गोपीभूमिमाहात्म्यं नाम पञ्चदशोऽध्यायः १५ श्रीनारद उवाच सिद्धाश्रमस्य माहात्म्यं शृणु राजन्महाम ते यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते १ यत्स्पर्शनाद्धरेः साक्षान्न वियोगो भवेत्क्वचित् तं च सिद्धाश्र मं नाम वदंतीह पुराविदः २ दर्शनादस्य सालोक्यं सामीप्यं स्पर्शनात्तथा सारूप्यं स्नानतो याति सायुज्यं त

शं धारयंतीतिकोमलं ४० दूरात्तांराधिकांप्रेक्ष्यकृष्णापत्न्यः सहस्रशः जग्मुर्मूर्छांमहाराजतद्रूपेणातिमो-
हिता ४१ तत्तेजसाहतरुचः सूर्यात्तारगणायथा गजरूपाभिमानास्ताऊचुः सर्वाःपरस्परं ४२ अहोएता
दृशंरूपंत्रिलोक्यांनहिचाद्भुतं श्रुतंयथातथादृष्टमद्वितीयंमनोहरं ४३ एवंवदंत्यस्तांप्राप्ताः श्रीकृष्णस्य
पुरःसराः गोपीनांराजपुत्रीणांनेत्राणिपरिरेभिरे ४४ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडे
सिद्धाश्रममाहात्म्येराधारूपदर्शनंनामषोडशोध्यायः १६ श्रीनारदउवाच श्रीकृष्णमागतंवीक्ष्यपट्ट
राज्ञीसमन्वितं तदाजयजयारावंचक्रुर्गोप्योतिहर्षिताः १ सहसाश्रीहरिंराधापरिक्रम्यकृतांजलिः पद्मा
भाभ्यांतुनेत्राभ्यामानंदाश्रूणिमुंचती २ स्यमंतकखचितसांद्रंचिंतामणिखचित्तटं पद्मरागलसन्मध्यंचं
द्रमंडलवर्तुलं ३ कौस्तुभैः प्रखचित्पृष्ठं कुंभमंडलमण्डितं पारिजातकपुष्पाढ्यंपीयूषस्राविछत्रमत् ४
दत्वासिंहासनंतस्मैप्राहप्रसितानना अद्यमेसफलंजन्मअद्यमेसफलंतपः ५ अद्यमेसफलोधर्मोहरेत्वय्या-
गतेसति धन्यंसिद्धाश्रमंस्नानंसफलीभूतमद्भुतं मयापिनकृताभक्तिस्तवभक्तसहायिनः ६ बहवश्चसहाया
न्मेत्वयादेवकृताभुवि कंसोपिलोकविजयीयेनभीतोबभूवह ७ समारितोमद्वचनात् शंखचूडस्त्वयाहरे
मत्प्रेम्णापित्वयादेववैभवंदर्शितंव्रजे ८ शक्रस्यमानभंगोपिकृतोदेवत्वयाबलात् मत्कारणाद्व्रजंरक्षन्
धृत्वागोवर्धनाचलं ९ यथेच्छालिंगितोरासेगोपीभिस्त्वंवशीकृतः इदंतेचरितंदेवनरलोकविडंबनं १०
श्रीनारदउवाच एवंवदंतीसाराधात्वरंचंद्राननाज्ञया सादरेणहरेःपत्नीर्वीक्ष्यतांगौरवंददौ ११ भैष्मींजांबु
वतींभामांसत्यांभद्रांचलक्ष्मणां कालिंदींमित्रविंदांचमिलित्वासापरस्परं १२ षोडशस्त्रीसहस्रंचराहि



137

एंप्राग्ज्योतिषंपुरं ममापिकृपयायूयंतत्पुराच्चसमागताः २२ प्राप्ताश्रीकृष्णपत्नीत्वंसमाएवनसंशयः मद्गोरवा
च्चशक्रायच्छत्रंदत्तमनेनवै २३ कुंडलेदेवमात्रेचदत्तेवैमत्प्रियेच्छया ऐरावतभवानागाभौमासुरसमुद्भवः २४
मदिच्छयासमानीताश्रीकृष्णेनमहात्मना मत्कारणान्महावैरंशक्रेपिकृतवान्हरिः २५ मद्द्वारेवर्ततेनित्यंवृक्षेंद्रः
पारिजातकः पातिव्रत्येनैवमयाश्रीकृष्णोयंवशीकृतः २६ सर्वोपस्करसंयुक्तोनारदायसमर्पितः मत्समानंनक
स्यास्तुगौरवंवैभवंतथा २७ रूपौदार्य्यंनकस्यास्तुराधायाःकिमुवर्णनं यद्रूपोपरिचैद्याद्याञ्जनेनयुयुधुर्युधि
२८ हेसुभ्रुरुक्मिणीसात्वंकथंरूपवतीनहि सगोपकन्यकासख्योयूयंवैराजकन्यका धन्यामान्याश्चसर्वावै
यूयंमानवतीवरा २९ एवंतुसत्यभामायांवदंत्यांमैथिलेश्वर भूत्वामानवतीसर्वारुक्मिण्याद्यास्त्रियोवराः
३० कुलकौशलशीलार्थरूपयौवनगर्विताःश्रीकृष्णंमानदंप्राहुरष्टपट्टमहास्त्रियः ३१ राज्युवाच श्रुतं
तवमुखात्पूर्वंराधारूपंपरंस्मृतं यस्यांरक्तःसदात्वंवैत्वयिरक्ताचयासदा ३२ तांराधांद्रष्टुमिच्छामस्त्वत्
प्रियांव्रजवासिनीं त्वद्वियोगेनसंखिन्नास्नातुंचात्रसमागतां ३३ नारदउवाच यथास्तुचोक्त्वाश्रीकृष्णःप
ट्टस्त्रीपरिवेष्टितः षोडशस्त्रीसहस्राढ्ये द्रष्टुंराधांजगामह ३४ श्रीहेमशिबिरेरम्ये पताकाध्वजमंडिते च्चं
द्रमंडलशोभाढ्यवितानलनितेशुभे ३५ मुक्ताजवनिकायत्रवस्त्रोयस्तरणंशुभं मालतीमकरंदाढ्यंसर्वतोगं
धिसंकुलं ३६ तेनभृंगावलीचक्रेबलंकोलाहलंपरं तत्रराधापट्टराज्ञीश्रीकृष्णाहृतमानसा ३७ हंसाभैर्व्यज
नैर्दिव्यैर्वीज्यमानासखीजनैः छत्रंदोलधरैस्तत्रव्रजद्भिस्तामितस्ततः ३८ बालार्ककुंडलधरा विद्युद्धारमनो
हरा कोटिचंद्रप्रतीकाशातन्वीकोमलविग्रहा ३९ [illegible]सिंमनोहरां शनैःशनैःपादप-

त्नीभिः समन्विता नीत्वादुग्धंतत्समीपंप्रययौपरमादरात् २९ उष्णंदुग्धंसितायुक्तंकचोलेहैमनेकृते
अपाययत्परंप्रीत्याराधांभीष्मकनंदिनी ३० एवमभ्यर्च्यविधिवद्दत्वातांबूलवीटकं सत्यभामादिभिः शा
श्वत्सपत्नीभिःसमन्विता ३१ आगत्यकृष्णसामीप्यंवदंतीस्वकृतंशुभा भेजेश्रीरुक्मिणीसाक्षा-
च्छ्रीकृष्णपदपंकजं ३२ संलालयंतीसततंकोमलैःकरपल्लवैः कृष्णपादतलोच्छालान्वीक्ष्यसाविस्मिता
भवत् ३३ उच्छालकाःकथंजातास्तवपादतलेप्रभो अद्यैवभूताभगवन्नवेद्म्यत्रहिकारणं ३४ षोड
शस्त्रीसहस्राणांशृण्वतीनांहरिःस्वयं राधाभक्तिप्रकाशार्थंप्रसन्नःप्राहरुक्मिणीं ३५ श्रीभगवानु
वाच श्रीराधिकायाह्रदयारविंदेपादारविंदंहिविराजतेमे अहर्निशंप्रश्रयपाशबद्धंलवंलवार्द्धंनचलत्य
तीव ३६ अद्योष्णदुग्धप्रतीयानतोंघ्रा वुच्छालकास्तेममप्रोच्छलंति मंदोष्णमेवंहिनदत्तमस्यै युष्मा-
भिरुष्णंतुपयःप्रदत्तं ३७ श्रीनारदउवाच श्रीकृष्णस्यवचःश्रुत्वारुक्मिण्याद्यास्त्रियोवराः प्रेम माणं
विसृज्याथविसिष्णुःसर्वतोनृप ३८ श्रीराधायाःपराप्रीतिर्माधवेमधुसूदने तत्समानानवेकेषामद्वितीः
यामहीतले ३९ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेसिद्धाश्रमेश्रीराधा
कृष्णसमागमोराधाप्रेमप्रकाशोनामसप्तदशोध्यायः १७ श्रीनारदउवाच श्रीराधायाःपरांप्रीतिंज्ञा
त्वागोपीगणस्यच ऊचुर्हरिंराजपुत्र्यस्तद्रासप्रेक्षणोत्सुकाः १ पट्टराज्यऊचुः धन्यागोप्यस्तुतेभक्त्या
प्रेमलक्षणसंयुताः याःप्राप्तारासरंगेवैतासांकिंवर्ण्यतेतपः २ वृंदावनेकृतोरासोविधिनायेनमाधव तंविधिं
द्रष्टुमिच्छामोयदित्वंमन्यसेप्रभो ३ त्वंचात्रैवतथाराधागोप्यःसर्वाव्रजांगनाः वयंचास्यैवदेवेशरासोयोग्यंभवे



138

णीमुखमेवच्च प्रेमानंदमयीदोर्भ्यांपरिरेभेमुदान्विता १३ श्रीराधोवाच चंद्रायथैकोबहवश्चकोराः सूर्योयथैकोबहवोदृशस्युः श्रीकृष्णचंद्रोभगवांस्तथैको भक्ताभगिन्योबहवोवयंच १४ पद्मप्रभावंमधुपोयथाहि रत्नप्रभावंकिल तत्परीक्षित विद्याप्रभावंचयथाहिविद्वान काव्यप्रभावंचयथाकवींद्रः १५ यथासहस्रेषुजनेषुसत्कृच रसप्रभावंरसिकस्तथाहि जानातितत्वेननरेंद्रपुच्यः कृष्णप्रभावंभुविकृष्णभक्तः १६ नारदउवाच राधावाक्यंतदाश्रुत्वारुक्मिणीभीष्मनंदिनी सपत्नीसहिताप्राहराधांकमललोचना १७ रुक्मिण्युवाच धन्यासिराधेवृषभानुपुत्रि त्वद्भक्तिभावेनवशीकृतोयं वदत्यलंयस्यकथांत्रिलोकी सएववार्तांवदतित्वदीयां १८ श्रुतंयथातेहरिभावलक्षणं तथाहिदृष्टंनहिचित्रमेवहि गच्छाशुचास्मच्छिबिराणियत्र हित्वानेतुमत्रागतवत्यश्चाहृताः १९ नारदउवाच एवमुक्त्वाभीष्मसुताराधाकीर्तिसुतांतदा समानीयस्वशिबिरंसादरंणमहात्मना २० शिबिरेसर्वतोभद्रेपद्मकिंजल्कवासिते हैमशिरीषमृदुलेपर्य्यंकेसोपबर्हणे २१ रुक्मिं-निवासयामासवासःस्रग्मंडनादिभिः संपूज्यविधिवद्राज्ञीसपत्नीसहितासती २२ गोपीनांशतयूथंचसंपूज्यंचपृथक्पृथक् वार्तालापान्बहुविधान्कृत्वाकृष्णप्रियास्ततः २३ स्वपयित्वाथतांजग्मुःस्वंस्वंवैशिबिरंमुदा कृष्णपार्श्वंगताभैष्मीदृष्ट्वाजागृदुपस्थितं कथंनशेषेभोस्वामिन्नितिकृष्णमुवाचह २५ श्रीभगवानुवाच प्रत्युद्गमप्रस्तवणैराश्वासेनव्रजेश्वरी अर्चिताहित्वयासुभ्रु प्रसन्नासाभवत्परं २६ सात्वनित्यंहिपिबतीशयानादौपयःशुभं पयःपानंतुनकृतंमधुस्मृभ्रुत्वयाकिल २७ तेननिद्रानयनयोर्नजातास्यामहामते तस्मान्ममापिप्रस्वापोनजातोभीष्मकन्यके २८ नारदउवाच इतिश्रुत्वावरंभैष्मीसप

तमंसाक्षाल्लक्ष्मीकृष्णंपुरुषोत्तमं रासांतेरुक्मिणीमुख्याप्राहुःप्रेमपरायणाः २१ राज्ञ्यऊचुः दृष्टात्वद्रूप
माधुर्य्योरासरंगेमनोहरे गतंमनोनस्त्वानंदं ब्रह्मानंदंयथामुनिः २२ एतादृशोपिरासोन्योनभूतोनभवि
ष्यति शतयूथस्तुगोपीनामत्रमाधववर्तते २३ पत्न्यःषोडशसाहस्रंसखीभिःसहितावयं सर्वाःकोटिषु
ताश्चात्रअष्टपट्टमहास्त्रियः २४ वृंदावनेपिनैतादृक्भूतोवामाधवेश्वर नारदउवाच एवंकृताभिमा-
नानांराज्ञीनांप्रहसन्हरिः प्राहेदंपृच्छतांराधाभवतीभिःपरापरं २५ सत्यभामादिकाःसर्वाःपृच्छंतीनागरीव
रां किंचिद्धसंतीमनसिप्राहराधापरंवचः २६ श्रीराधोवाच ननुरासपरंचात्र बहुस्त्रीगणसंकुलं पूर्वरा
ससमोनस्याद्यस्तुवृंदावनेभवत् २७ क्वचात्रवृंदारण्यंहिदिव्यद्रुमलताकुलं प्रेमभारानतलतंमधुमत्तम
धुव्रतं २८ पुष्पव्यूहान्वहंतीयायथोष्णिकुमुद्वितासुभा हंसपद्मसमाकीर्णाक्वचात्रयमुनानदी २९ मा
धव्यस्तुलताःक्वात्रपुष्पभारनताःपराः क्वपक्षिणःप्रेमपरागायंतिमधुरस्वनम् ३० लोलालिपुंजाःकुंजाःक्व
निकुंजादिव्यमंदिराः क्ववायुश्शीतलोमंदोवातिपद्मरजोहरन् ३१ श्रृंगैर्मनोहरैरुच्चैर्गिरिर्गोवर्द्धनोचलः सर्वत्र
फलपुष्पाढ्योदरीभिःक्वकरीवसः ३२ कालिंदीपुलिनेरम्येवायुनाचितसैकते वंशीवित्रधरोमल्लपरिबर्हवि
राजितः ३३ क्वचात्रकृष्णःश्रृंगारोवनमालाविभूषितः श्यामानामलकानांचवक्राणांगंधवारिणा ३४
बलितंहलितंक्वात्रकुंडलाभ्यांपरस्परं श्रीमुखेकृष्णचंद्रस्यगंडस्थलमनोहरं ३५ पत्रावलिंगंधलोभा
द्भ्रमद्भृंगावलीयुते क्वप्रेम्णादर्शनंचैवस्पर्शनंहर्षणंतथा ३६ कामेषुतिग्मकोणैश्चनेत्रैःक्वायांगदोरसः
क्वाकर्षणंक्वहस्ताभ्यांहस्ताद्धस्तविसर्जनं ३७ वलीनत्वंनिकुंजेषुसन्मुखेनतदर्शनं गृहणंक्वात्रची

139

दिह ४ पूर्णीकुरुजगन्नाथ अस्माकंतुमनोरथं कृतोमनोरथोन्योनरासक्रीडांमनोहरे ५ इतितासांवचः श्रुत्वाभगवान्प्रहसन्निव प्राहताःप्रेमसंयुक्तागीर्भिःसंमोहयन्निव ६ श्रीभगवानुवाच रासेश्वर्यास्तुराधायामनश्वेदंतुअंगनाः तदारासोभवेदत्रभवतीभिस्तुष्टछता ७ इतिश्रुत्वावचस्तस्यरुक्मिण्याद्यानृपात्मजाः राधामत्यपरंप्रेम्णाप्राहुःप्रहसिताननाः ८ श्रीराज्यऊचुः रंभोरुचंद्रवदनेव्रजसुंदरीशे रासेश्वरिप्रियतमे सखिशीलरूपे राधस्कुकीर्तिकुलकीर्तिकरेशुभांगे त्वांप्रष्टुमागतवतीस्सकलावयंस्म ९ रासेश्वरोपिकिलचात्ररसप्रदायी रासेश्वरीत्वमपिगोपवरांगनाश्च एवंवयस्मइतिसर्वविधौरसार्थेरासंकुरुप्रियतमेचतथाप्रियंन १० श्रीराधोवाच रासेश्वरस्यपरमस्यसतांकृपालो रंतुंमनोयदिभवेत्तुतदात्ररासः शुश्रूषयापरमयापरयाचभक्त्या संपूज्यतंकिलवशीकुरुतप्रियेष्टाः ११ श्रीनारदउवाच राधायावचनंश्रुत्वाश्रीकृष्णोक्तंतथावदन् तथास्तुचोक्तासाराधाप्रसन्नाभून्महामनाः १२ माधवेपूर्णिमायांतुपुण्येसिद्धाश्रमेशुभे प्रदोषकालेचंद्रभेरासारंभोबभूवह १३ रासेश्वरश्चरासार्थैरासेश्वर्य्यासमन्वितः रराजरासेरसिकोयथारत्यारतीश्वरः १४ यावतीर्गोपिकाः सर्वायावतीराजकन्यकाः तावद्रूपधरोरेजेएककृष्णोद्वयोर्द्वयोः १५ तालवेणुमृदंगानांकालकंठैःसर्वाजनैः वलनूपुरकांचीनांमिश्रशब्दोमहानभूत् १६ कोटिकंदर्पलावण्यस्त्रग्वीकुंडलमंडितः पीतांबरधरोराजन्किरीटकटकांगदः १७ रासेश्वर्यासमगायन्रासेरासेश्वरःस्वयं स्त्रीगणैःसहितोराजंश्चंद्रस्ताराग्णैर्यथा १८ एवंसर्वानिशाराजन्क्षणवद्रासमंडले व्यतीताभून्महाराजमहानंदमयीशुभा १९ श्रीरासमंडलंदृष्ट्वारुक्मिण्याद्यास्त्रियोवराः जग्मुस्तापरमानंदंसर्वाःपूर्णमनोरथा २० परिपूर्णे

दितः भूत्वैवं रथ मास्थायगोलोकंयात्यसंशयः १० अथतीर्थानिचान्यानिशृणुराजन्महामते शतो
त्तराणितत्रैवसहस्राणिचषोडश ११ अष्टभिःसहितान्येवपत्नीनांभवनानिच तानिप्रदक्षिणीकृत्य
नत्वानत्वापृथक्पृथक् १२ ज्ञानतीर्थेसमाप्लुत्यस्पृशेत्यःपारजातकं तस्यज्ञानंचवैराग्यंभक्तिर्भवतितत्
क्षणं १३ श्रीकृष्णोत्हृदयेतस्यवसेद्धृष्टमनाःसदा समृद्धिसिद्धयःसर्वास्तंभजंतिनिसर्गतः १४ समु-
क्तःसकृत्तार्थस्माद्यःपश्येद्धरिमंदिरं तत्समोवैष्णवोनास्तितीर्थंचतत्समंनहि १५ पंचयोजनविस्तीर्णाद्भ
गवन्मंदिरात्ततः धनुःशतेकृष्णकुंडःकृष्णतेजःसमुद्भवः १६ यंस्नात्वाकुष्टतामुक्तःसांबोजांबवती-
सुतः तस्यदर्शनमात्रेणसर्वपापैःप्रमुच्यते १७ तस्माद्दष्टादशपदेपूर्वस्यांदिशिमैथिल सर्वतीर्थोत्त
मंपुण्यंबलभद्रसरोमहत् १८ पृथ्वीप्रदक्षिणंकृत्वाबलदेवोमहाबलः यज्ञंयत्रविनिर्मायरेवत्याविर
राजह १९ तत्रस्नात्वानरःसद्योमुच्यतेसर्वपातकात् पृथ्वीप्रदक्षिणायाश्चफलंतस्यनदुर्लभं २० भगव
न्मंदिराद्राजन्सहस्रंधनुरयतः दक्षिणस्यांमहातीर्थंगणनाथस्यवर्तते २१ अनिर्दिशगतेराजन्प्रद्युम्न स्व
कृतेतदा गणेशपूजनंयत्रपूजयामासरुक्मिणी २२ यत्रस्नात्वाहेमदानंयोददातिनृपेश्वर पुत्रप्राप्तिर्भ
वेत्तस्यवंशस्तत्रविवर्द्धते २३ भगवन्मंदिराद्राजन्दक्षिणभागेचपश्चिमे धनुर्षिद्विशतेचास्तेदानतीर्थपरंशु
भं २४ यत्रश्रीकृष्णचंद्रस्यनित्यंदानंकरोतियः तत्रस्नात्वानरोराजन्द्विपलंकांचनंतथा २५ चतुर्गुणं
तुरजतंपट्टांबरशतंतथा तथासहस्रमौल्यानिनवरत्नानियानिच २६ योददातिनरश्रेष्ठ तस्यपुण्यफलं
शृणु अश्वमेधसहस्राणिराजसूयशतानिच २७ दानतीर्थस्यपुण्यस्यकलांनार्हंतिषोडशीं बद्रि

राणांहरणंवेणुवेत्रयोः ३८ कुंभेमणाचात्रबाहुभ्यांकर्षणंचपरस्परं पुनःपुनस्तद्ग्रहणंभुजेचंदनचर्चितं३९
यत्रयत्रचयालीलातत्रतत्रैवशोभते यत्रवृंदावनोनास्तितत्रमेनमनःसुखं ४० नारदउवाच राधावाक्यं
ततःश्रुत्वासर्वाःसद्ममहास्त्रियः जुहुर्मानस्वरासस्थाविस्मिताहर्षितास्थिताः ४१ एवंसिद्धाश्रमेरासंकृत्वाश्री
राधिकेश्वरः नीत्वागोपीगणान्सर्वान्राधयासहितोहरिः ४२ सभार्योभगवान्साक्षात्द्वारकांप्रविवेशह
कारयामासराधायैमंदिराणिपराणिच ४३ निवासयित्वासुखंसुखंसर्वास्ताश्चव्रजौकसः इत्थंसिद्धाश्रमक
थामयातेकथितानृप ४४ सर्वपापहरापुण्यासर्वेषांचैवमोक्षदा ४५ इतिश्रीमद्गर्गाचार्यसंहितायांश्री-
द्वारकाखंडेनारदबहुलाश्वसंवादेसिद्धाश्रममाहात्म्येरासोत्सवोनामाष्टदशोध्यायः १८ श्रीनारदउवा
च द्वारावतीमंडलंतुशतयोजनविस्तृतं तस्यप्रदक्षिणासर्वायोजनानांचतुःशतं १ तन्मध्येकृष्णचरितं-
दुर्गंद्वादशयोजनं द्वितीयंचबहिर्दुर्गंनवतींचलदुत्तरैः क्रोशैःसंघट्टितंराजन्कृष्णेनमहात्मना २ तृती
यंचतथादुर्गंभूनेश्चद्विशतैर्नृप क्रोशैःसंघटितंराजन्रत्नप्रासादसंयुतं ३ तेषामंतर्दुर्गेपिश्रीकृष्णस्यमहा
त्मनः मंदिराणिविचित्राणिनवलक्षाणिसंतिहि ४ तत्रराधामंदिरस्यद्वारेलीलासरोवरम् सर्वतीर्थोत्तमं
राजन्गोलोकाच्चसमागतं ५ यस्मिन्स्नात्वानरःपापीव्रतीभूत्वासमाहितः अष्टम्यांहेमदानंचदत्वान
त्वाविधानतः ६ कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः प्राणांतेतन्नरंनेतुंगोलोकाच्चमहारथः ७ स
हस्रादित्यसंकाशश्चागच्छतिनसंशयः दशकंदर्पलावण्योरत्नकुंडलमंडितः ८ स्रग्वीपीतांबरःश्या
मःसहस्रार्कस्फुरद्द्युतिः सहर्षपार्षदैर्युक्तश्चामरांदोलराजितः ९ जयध्वनिसमायुक्तोवेणुदुंदुभिना-

रेविदेहराट् इंद्रतीर्थंमहापुण्यंकामदंसिद्धिदायकं १ तत्रस्नात्वानरोराजन्निंद्रलोकंप्रयातिहि इहैवचंद्र
सादृश्यंवैभवंप्राप्यतेनरः २ तथावैदक्षिणेद्वारेसूर्यकुंडोभिधीयते तत्रसत्राजितेनापिपूजितोभूत्स्यमंतकः
३ तत्रस्नात्वापद्मरागंयोददातिनृपेश्वर सूर्यप्रभाविमानेनसूर्यलोकंप्रयातिहि ४ तथावैपश्चिमेद्वारेब्र
ह्मतीर्थंविशिष्यते तत्रस्नात्वानरोराजन्स्वर्णपात्रेचपायसं ५ योददातिमहाबुद्धिस्तस्यपुण्यफलंशृणु
ब्रह्महापिनृहागोघ्नोमातृहाचार्यहाघवान् ६ इंद्रलोकेपदंधृत्वाबिभ्रद्ब्रह्ममयंवपुः चंद्राभेनविमानेनया
तिब्रह्मपदंसच ७ तथावैउत्तरेद्वारेक्षेत्रेस्यान्नैललोहितं यत्रसाक्षान्महादेवोराजतेनीललोहितः ८ देव
तामुनयःसर्वेतथासप्तर्षयःपरे वसंतियत्रवैदेहतथासर्वेमरुद्गणाः ९ नीललोहितलिंगंतुयत्रसंपूज्य-
यत्नतः ऐश्वर्यमतुलंलेभेरावणोलोकरावणः १० कैलासस्यापियात्रायांयत्फलंलभतेनृप तस्माच्छत
गुणंपुण्यंनीललोहितदर्शनात् ११ नीललोहितकुंडेवैस्नातोयस्त्रिदिनंनरः सयातिशिवलोकाख्यंपापा
युतयुतोपिहि १२ सप्तसामुद्रकंनामतीर्थंयत्रविराजते यत्रस्नात्वानरःपापीपापसंघैःप्रमुच्यते १३ स
मानाचसमुद्राणांस्नानंपुण्यंलभेत्वरं विष्णुर्विरिंच्योगिरिशइंद्रोवायुर्यमोरविः१४पर्ज्जन्योधनदःसोमःक्षितिरग्नि
रपांपतिः तत्सार्श्वेषुसदात्वेतेतिष्ठंतिमनुजेश्वर १५ सप्तकोटीनितीर्थानिब्रह्मांडेयानिकानिच सर्वाणि
तत्रतिष्ठंतिसप्तसामुद्रकेनृप १६ तत्रस्नात्वानरःपश्चात्कृत्वासर्वपरिक्रमां प्राप्नोतिद्वारकायाश्चयात्रायाः
सफलंफलं १७ सप्तसामुद्रकमृतेनयात्राफलदास्मृता सप्तसामुद्रकंतीर्थंविष्णुरूपंविदुःसुराः १८
इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेद्वितीयदुर्गेइंद्रतीर्थसूर्यकुंडब्रह्मतीर्थनैललोहितसप्तसमुद्रमा



१४१

काश्मपयात्रायांयत्फलंलभतेनरः २८ तस्माच्छतगुणंपुण्यंदानतीर्थेपरात्मनः सैंधवारण्ययात्रायां
मेषस्थेचदिवाकरे २९ उत्पलावर्त्तयात्रायांवृषस्थेभास्करेसति स्नानंदानंलक्षगुणंभवतीहनसंशयः
३० तस्मात्कोटिगुणंपुण्यंदानतीर्थेविदेहराट् मासमेकंचयत्स्नानंदानतीर्थेकरोतिहि ३१ तस्यजातंच
यत्पुण्यंचित्रगुप्तोनवेत्तितत् तस्यतीर्थस्यमाहात्म्यंवक्तुंनालंचतुर्मुखः ३२ सर्वेषांचैवदानानामश्वदानं
परंस्मृतं अश्वदानाद्गजस्यापिगजदानाद्रथस्यच ३३ रथदानात्परंराजन्भूमिदानंविशिष्यते भूमि-
दानादन्नदानंमहादानंप्रकथ्यते ३४ अन्नदानात्समंदानंनभूतोनभविष्यति देवर्षिपितृभूतानांतृप्तिर
न्नेनजायते ३५ दानतीर्थेत्वन्नदानंयःकरोतिमहामनाः ऋणत्रयंविमुच्याथयातिविष्णोःपरंपदं ३६
दशैवमातृकेपक्षेराजेंद्रदशपैतृके प्रियायादशपक्षेतुपुरुषानुद्धरेन्नरः ३७ चतुर्भुजादिव्यरूपानागारीकृत
केतनाःस्रग्विणःपीतवस्त्रास्ते प्रयांतिहरिमंदिरं ३८ भगवन्मंदिराद्राजन्नुत्तरस्यांदिशिस्मृतं क्रोशार्द्धे
नृपशार्दूलमायातीर्थंमनोहरं ३९ विराजतेयत्रनित्यंदुर्गादुर्गतिनाशिनी सिंहारूढाभद्रकालीचंडमुंडवि
नाशिनी ४० स्यमंतकंसमाहर्तुमृक्षराजबिलंगते पुत्रेचदेवकीदेवीपूजयामाससत्फलैः ४१ तदाजगा
मप्रियया समणिर्भगवान्हरिः तद्दिलात्तत्प्रसिद्धस्यान्मायातीर्थंफलप्रदं ४२ मायातीर्थेचयःस्नात्वामा
यांसंपूज्यमानवः सर्वान्मनोरथप्राप्तिंप्राप्नुयान्नात्रसंशयः ४३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीद्वारका
खंडेनारदबहुलाश्वसंवादेप्रथमदुर्गेलीलासरोवरहरिमंदिरज्ञानतीर्थकृष्णकुंडबलभद्रसरोगणेशतीर्थ
दानस्थलमायातीर्थमाहात्म्यंनामैकोनविंशोध्यायः १९ श्रीनारदउवाच द्वितीयस्यापिदुर्गस्यपूर्वद्वा

कस्नानमृतेकथंराज्यंभवेदिह अंतेमोक्षंकथंयातिनरःपापयुतोपिहि २० पिंडारकस्नानमृतेनवर्म पिंडारक
स्नानमृतेन कर्म पिंडारकस्नानमृतेनधर्मःपिंडारकस्नानमृतेनशर्म २१ पिंडारकस्नानमृतेवियोगी पिंडारकस्ना
नकरोवियोगी पिंडारकस्नानकरःसुभोगी पिंडारकस्नानकरोनरोगी २२ द्वारावतींमाधवमासमध्ये प्रद
क्षिणीकृत्यनमस्करोति सर्वाइहामुत्रचसिद्धयोपि वैदेहतत्पाणितलेभवंति २३ तीर्थाप्लुतोधःशयनःशुचिश्च
मौनीव्रतीवायवभोजनेन आरभ्यचैत्रींकिलपौर्णमासीं योमाधवीमेत्यकरोतियात्रां २४ तत्पुण्यसंख्यांग
दितुंनशक्यश्चतुर्मुखोवेदमयोविधाता योमेघधारांगणयेत्कदाचित् कालेनपुण्यानिनकृष्णपुर्याः २५
यथातिथीनांहरिवासरंच यथाहिशेषोफणिनांफणींद्रः यथागरुत्मान्द्विपक्षिणांच यथापुराणेषुचभारतं-
च २६ यथाहिदेवेषुचदेवदेवः श्रीवासुदेवोयदुदेवदेवः तथापुरीक्षेत्रसमस्तमध्ये द्वारावतीपुण्यवतीप्रशस्ता
२७ अहोतिधन्यंयदुमंडलीभि विराजतेभूमितलेमनोहरा वैकुंठलीलाधिकृताकुशस्थली यथातडिद्भिर्जल
दावलिर्दिवि २८ यत्रैवसाक्षात्पुरुषःपरेश्वरो धृत्वाचतुर्व्यूहमलंविराजते यस्तूग्रसेनायददौनृपेशतां कृष्णा
यतस्मैहरयेनमोनमः २९ यदास्वलोकंभगवान्गमिष्यति संप्लावयिष्यत्यथतांतदार्णवे वैदेहदिव्यंहरिमं
दिरंविना तस्मिन्निवासंभगवान्करिष्यति ३० श्वएवंतितत्रैवकलौजलाब्धिर्नो कृष्णोक्तमित्थंसततंदिनेदि
ने भवेदविद्योयदिवासविद्यो योब्राह्मणोवैसतुमामकीतनुः ३१ भूत्वाथविप्रोब्धितदादगाधं गत्वागृहीत्वा
प्रतिमांपरस्य कृत्वाप्रतिष्ठांचविधायसौधं करिष्यतेस्थापनमर्कएषः ३२ श्रीद्वारकानाथमितिस्वरूपं पश्यंति
येभक्तजनाकलौयुगे गच्छंतितेविष्णुपदंनृदेवयोगीश्वराणामपिदुर्लभंयत् ३३ इदंमयातेकथितंनृदेव मा



142

हात्म्यंनामविंशोध्यायः २० श्रीनारदउवाच तृतीयस्यापिदुर्गस्यपूर्वद्वारेमहाबलः रक्षत्यहर्निशंराजन्ह
नूमानंजनीसुतः १ तंप्रेक्ष्यभगवद्भक्तंहनूमंतंमहाबलं जायतेभगवद्भक्तोहनूमानिवमानवः २ तथावैद
क्षिणद्वारंचक्रंनामसुदर्शनं रक्षत्यहर्निशंराजन्श्रीकृष्णगतमानसं ३ तस्यदर्शनमात्रेणभवेद्भक्तोहरेःपरः भ
क्तस्यापिसदारक्षांकरोतिहिसुदर्शनं ४ तथावैपश्चिमंद्वारंजांबवानृक्षराड्बली रक्षत्यहर्निशंराजन्भगव
द्भक्तसंयुतः ५ तंप्रेक्ष्यभगवद्भक्तंजांबवंतंमहाबलं चिरंजीवीहरेर्भक्तोभवतीहचमानवः ६ तथावैचोत्त
रंद्वारंविष्वक्सेनोमहाबलः रक्षत्यहर्निशंराजन्श्रीकृष्णात्हृदयोमहान् ७ तस्यदर्शनमात्रेणनरोयातिकृ
तार्थतां शृणुराजन्बहिर्दुर्गातीर्थंपिंडारकंस्मृतं ८ पिंडारकस्यमाहात्म्यंशृणुतद्राजसत्तम यस्यस्मरण
मात्रेणमहापापात्प्रमुच्यते ९ अर्थसिद्धोश्चिद्वारैरैवताद्रिसमुद्रयोः मध्येपिंडारकक्षेत्रंतीर्थानांतीर्थमुत्तमं
१० क्रतुराजंराजसूयंयदुराजोमहाबलः चकारयत्रवेदहपरिपूर्णतमाज्ञया ११ सर्वाणियत्रतीर्थानिस
माहूतानिसर्वतः निवासंचक्रिरेराजन्नुग्रसेनकृतूत्तमे १२ तेनपिंडारकंनामसर्वतीर्थस्यपिंडतः तत्रस्ना
त्वानरःसद्योराजसूयफलंलभेत् १३ यत्रैवत्रिदिनंस्नात्वाब्रत्तीभूत्वासमाहितः ब्राह्मणेभ्यःस्वर्णदानंदत्वायःप्र
णतोभवेत् १४ इहैवनरदेवःस्यात्समहात्मानसंशयः नित्यंशृणोतिसलतंबंदिवद्भिर्यशःस्वयं १५ सुवर्णर
त्नवस्त्राद्यैःसुचंद्रवदनैःपरैः स्त्रीसंघैःसेवितोनित्यंत्हृष्टपुष्टोमहाबलः १६ अहोरात्रंप्रताड्यंतेद्वारिदुंदुभयो
घनाः करींद्राणांचचीत्कारैरश्वह्रेषैस्समन्वितं १७ विराजतेराजसंघंप्रेक्षयन्प्रांगणाजिरं रत्नप्रासादनिचयंध्व
जमंडलमंडितं १८ मत्तकुंजरकाणाभ्यांताडिताभृंगमंडली अलंकरोतितद्वारंमंडितंमंडलेश्वरैः १९ पिंडार

हात्म्यमेतत् किलकृष्णपुर्य्याः शृणोतियः श्रावयतेन्चभक्त्या श्रीद्वारिकावासफलंलभेत्सः ३४ श्रीद्वारकाया-
नृपखंडमेतत् मयातवाग्रेकथितंस्फुपुण्यं कीर्तिकुलंभक्तिमतीवमुक्तिं ददातिराज्यंचसदैवशृएवत्तां ३५ इति
श्रीमद्गर्गाचार्यसंहितायांश्रीद्वारकाखंडेनारदबहुलाश्वसंवादेतृतीयदुर्गेपिपिंडारकारमाहात्म्यंनामैकविंशो-
ध्यायः २१ इतिश्रीद्वारकाखंडंसमाप्तम् षष्ठम् ६ ५ ५ ५

143

**इतिश्रीमद्गर्गाचार्यसंहितायांद्वारकाखंडःसमाप्तः**

श्रीगणेशायनमः ॥ ओं ॥ नमोभगवतेतुभ्यंवासुदेवायसाक्षिणे प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच १
अज्ञानतिमिरांधस्यज्ञानांजनशलाकया चक्षुरुन्मीलितंयेनतस्मैश्रीगुरवेनमः २ श्रीगर्गउवाच इत्थंश्री-
कृष्णचरितंमयातेकथितंमुने चतुःपदार्थदंनॄणांकिंभूयःश्रोतुमिच्छसि ३ शौनकउवाच बहुलाश्वोमैथि-
लेंद्रः श्रीकृष्णेष्टोहरिप्रियः किंपप्रच्छाथदेवर्षिंस्तस्मैब्रूहितपोधनः ४ श्रीगर्गउवाच उग्रसेनंयादवेंद्रंश्रीकृ
ष्णेनकृतंमुने श्रुत्वातिविस्मितोराजानारदंप्राहमैथिलः ५ बहुलाश्वउवाच कोवायंमरुतोराजाकेनपुण्ये-
नभूतले यादवेंद्रोमहाबुद्धिरुग्रसेनोबभूवह ६ यस्यश्रीकृष्णचंद्रोपिसहायोभूद्धरिःस्वयं तस्याहोमहि-
मानंमेब्रूहिदेवर्षिसत्तम ७ श्रीनारदउवाच सूर्यवंशोद्भवोराजाचक्रवर्तीकृतेयुगे यज्ञंचकारविधिवन्म
रुत्तोयोजगज्जितं ८ महासंभृतसंभारेहिमाद्रेःपार्श्वउत्तरे संवर्तंमुनिशार्दूलंगुरुंकृत्वास्यदीक्षितः ९
पंचयोजनविस्तीर्णःकुंडोभूद्यस्यचाध्वरे योजनंब्रह्मकुंडस्तुगव्यूतिःपंचकुंडकाः १० मेखलागर्तविस्तारवे-
दिभिर्निर्मितादश सहस्रहस्तमुच्चांगोयज्ञस्तंभोबभौमहान् ११ विंशद्योजनविस्तीर्णःसौवर्णोयज्ञमंडपः
वितानतोरणैरेजेकदलीखंडमंडितः १२ ब्रह्मरुद्रादयोदेवाःसगणास्तत्रचागताः ऋषयोमुनयःसर्वेतस्यय-
ज्ञंसमाययुः १३ होतारोदशलक्षाणिदशलक्षाणिदीक्षिताः अध्वर्यवःपंचलक्षमुद्गातारस्तथापरे १४
आहूतास्तत्रविद्वांसश्चतुर्वेदविदोद्विजाः सर्वशास्त्रार्थतत्वज्ञाःकोटिशोन्येप्रपूजिताः १५ हस्तिशुंडासमां
धारांभुक्त्वाज्यस्यहुताशनः अजीर्णंप्रापतद्यज्ञेनचित्रंविद्धिमैथिल १६ येभ्योभागंवदंतीहविश्वेदेवाः-
सभासदः तेभ्यस्तेभ्योददुर्वाताःपरिवेष्टारएवते १७ केपिजीवास्त्रिलोक्यांतुनबभूवुर्बुभुक्षिताः सर्वेदे-

अस्मिन्मनोदेवमनोरथाब्धिंगतेषुविंशोषुयुगेषुचाष्टौ गत्वाथनाकंधरणींसमेत्यमयाहिगोवत्सपदंकरिष्यसि ३४
श्रीनारदउवाच इत्युक्त्वाभगवान्साक्षात्तत्रैवांतरधीयत सोयंतुमरुत्तोराजाउग्रसेनोबभूवह ३५ तंयज्ञंका
रयामासराजसूयंहरिःस्वयं किंदुर्लभंत्रिलोक्यांतुभक्तानांमैथिलेश्वर ३६ मरुत्तस्यापिचरितंयःशृणोतिनृ-
पोत्तम तस्यज्ञानंसवैराग्यंभक्तियुक्तंप्रजायते ३७ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीविश्वजित्खंडेना
रदबहुलाश्वसंवादेश्रीमरुत्तोपाख्याननामप्रथमोऽध्यायः १ बहुलाश्वउवाच कथंचकारविधिवत्
राजसूयाध्वरंनृप श्रीकृष्णेनसहायेनवदेतन्नितरांमुने १ श्रीनारदउवाच उग्रसेनःसुधर्मायांकृष्णंसंपू
ज्यचैकदा नत्वाप्राहप्रसन्नात्माकृतांजलिपुटःशनैः २ उग्रसेनउवाच भगवन्नारदमुखाच्छ्रुतंयस्यमहत्फ
लं तंयज्ञंराजसूयाख्यंकरिष्यामितवाज्ञया ३ त्वत्पादसेवयापूर्वंमनोरथमहार्णवं तेरुर्जगत्तृणीकृत्यनि
र्भयाःपुरुषोत्तम ४ श्रीभगवानुवाच सम्यग्व्यवसितंराजन्भवतायादवेश्वर यज्ञेनतेजगत्कीर्तिस्त्रिलो-
क्यांसंभविष्यति ५ आहूययादवान्साक्षात्सभांकृत्वाथसर्वतः तांबूलवीटिकांधृत्वाप्रतिज्ञांकारयप्रभो ६
ममांशायादवाःसर्वेलोकद्वयजिगीषवः जित्वारीनागमिष्यंतिहरिष्यंतिबलिंदिशां ७ श्रीनारदउवाच अथां
धकादीनाहूयशक्रसिंहासनेस्थितः सुधर्मायांप्राहनृपोधृत्वातांबूलवीटिकां ८ उग्रसेनउवाच योजयेत्स
मरेसर्वाञ्जंबूद्वीपस्थितान्नृपान् मनस्वीशक्रकोदंडीसोत्तितांबूलवीटिकां ९ श्रीनारदउवाच नृपेषुतूष्णीं
प्रगतेषुसत्सुश्रीरुक्मिणीनंदनएवसम्राट् जग्राहतांबूलचयंमहात्मानत्वानृपंमैथिलशंबरारिः १० प्रद्युम्न-
उवाच विजित्यसमरेसर्वाञ्जंबूद्वीपस्थितान्नृपान् गृहीत्वाचबलिंतेभ्यआगमिष्याम्यहंबलात् ११ अगम्या-

वास्कसोमेनह्मजीर्णत्वमुपागताः १८ संवर्तायददौराज्यंजंबूद्वीपस्यचाध्वरे गजानांहेमभाराणांनियुतानिचतुर्द-
श १८ शतार्बुदंहयानांतुयज्ञांतेदक्षिणान्नृप कोटिशोनवरत्नानांमहार्हाणांमहात्मने २० हयानांपंचसाह-
स्रंगजानांशतमेवच शतभारस्कवर्णानांब्राम्हणेब्राम्हणेददौ २१ जलभोजनपात्राणिहैमानिप्रस्फुरंतिच
भुक्त्वातानिविसृज्याशुगतास्तुष्टाद्विजातयः २२ विप्रत्यक्तैःस्वर्णपात्रैरुच्छिष्टैर्नृपवर्जितैः हिमाद्रिपार्श्वेशै-
लोभूदद्यापिशतयोजनम् २३ मरुतस्ययथायज्ञेनतथान्यस्यकर्हिचित् त्रिलोक्यांशृणुराजेंद्रनभूतोनभविष्य
ति २४ यज्ञकुंडाद्विनिर्गत्यपरिपूर्णतमःस्वयं आत्मानंदर्शयामासमरुत्तायमहात्मने २५ तमालोक्यहरिं
नत्वाकृतांजलिपुटोनृपः गदितुंनसमर्थोभूद्रोमांचीप्रेमविह्वलः २६ तंप्रेमपूरितंदृष्ट्वापतितंपादयोर्नतं उ
वाचभगवान्साक्षान्मेघगंभीरयागिरा २७ श्रीभगवानुवाच राजंस्त्वयाहंधिनयेनतोषितोनिष्का
रणैर्यज्ञपरैःसमर्चितः वरंपरंब्रूहिमहामतेत्वरं दास्यामिदेवैरपिदुर्लभंदिवि २८ श्रीनारदउवाच श्रु
त्वातुराजामरुतःकृतांजलिःप्रदक्षिणीकृत्यहरिंपरेश्वरं सपूज्यभक्त्याविशदोपचारकैर्नत्वाभृशंगद्गदयागिराब्र-
वीत् २९ मरुतउवाच नवेद्म्यहंत्वच्चरणारविंदतोवरंपरंश्रीपुरुषोत्तमोत्तम समेत्यगंगांतृषितोतिदुर्मतिःस्वनं
तिकूपंहियथानरेतराः ३० तथापियाचेतववाक्यगौरवात्पादारविंदंहृदयारविंदात् कदापिमेमाव्रजतुव्रजेश्वरमूलंचतुर्णांविदुरर्थसंपदां ३१ श्रीभगवानुवाच धन्योसिराजंस्तवनिर्मलामतिःप्रलोभितस्यापिवरैर्नका-
मभूत् तथापिमत्तोवरयेप्सितंपरंविनाफलंभक्तिसुखान्नमेस्फुरं ३२ मरुतउवाच देयंयदामेवरमीप्सितंप्रभो
वैकुंठलोकंकुरुतान्धरातले रक्षस्थितंमांनिजभक्तवत्सलतस्मिन्पुरेभक्तजनैःपरैःसह ३३ श्रीभगवानुवाच

इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवादे प्रद्युम्नविजयाभिषेकोनाम द्वितीयोऽध्यायः २
श्रीनारदउवाच अथनत्वाहरिं कार्ष्णिरुग्रसेनं बलंगुरुं नीत्वाज्ञांरथमारुह्य कुशस्थल्याविनिर्ययौ १ त
थातमनुगाः सर्वेयादवाउद्धवादयः भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः २ तथास्वभ्रातरः सर्वेगदाद्याः कृ
ष्णमोदिताः स्वपुत्राः सबलाः सर्वेसांबाद्याश्चमहारथाः ३ किरीटिनः कुंडलिनो लोहकंचुकमंडिताः चतुरं-
गबलोपेताः कोटिशस्तेविनिर्ययुः ४ कलापिहंसगरुडमीनतालध्वजैरथैः सूर्यमंडलसंकाशैश्चंचलाश्वनियो
जितैः ५ हेमकुंभैः सशिखरैर्मुक्तातोरणराजितैः विडंबयद्भिर्नितरांवायुवेगमतः परं ६ चामरांदोलितैर्दिव्यै
र्वीरमंडलमंडितैः सौवर्णैर्देवधिष्ण्याभैरेजुर्वीरामनोहराः ७ मदच्युताश्चित्रमुखाहेमजालसमन्विताः महोद्भ
टागजाउच्चारुणघंटारुणांबराः ८ गिरीन्द्रशिखराभद्राद्विपेंद्रान्दिग्विभावितान् विडंबयंतोदृश्यंतेराजसैन्ये-
द्विपान्नृप ९ केचिद्भद्रास्तकथिताः केचिद्भद्रामृगापरे विंध्याचलभवाः केचित्केचित्काश्मीरसंभवाः १० मल
यप्रभवाः केचिद्धिमाद्रिप्रभवाः परे मौरंगप्रभवाः केचित्कैलासवनसंभवाः ११ ऐरावतकुलेभाश्चचतुर्दंताः कला-
पिनः तिस्रः शुंडारूर्द्ध्वभाग्यागच्छंतिभुविचांबरे १२ ध्वजायुक्ताः कोटिगजाः कोटिदुंदुभिसंयुताः कोटिसैन्यामह
हामात्यै रत्नमंडलमंडिताः १३ गर्जयंतोघनश्यामानीडाडंबरराजिताः इतस्ततोविरेजुस्तेबलेव्योमकराइव १४
करैर्गुल्मान्समुत्पाद्यक्षेपयंतोर्कमंडले कंपयंतोभुवंपादैर्मदैरार्द्रीकृताचलाः १५ दुर्गाद्रिगंडशैलादीन्पातयं-
तः शिरःस्थलैः खंडयंतश्चशत्रूणांबलमेतादृशागजाः १६ तुरंगानिर्गताराजन्केचिन्मात्स्याकलिंदजाः औशी-
नराः कौशिलाश्चवैदर्भाः कुरुजांगलाः १७ कांबोजजाः सृंजयजाः कैकेयाः कुंतिसंभवाः दारदाकेरलाश्चांगाः वां-

गमनंबभ्रोर्ब्राह्मणस्यगुरोस्तथा हत्याभ्रूणस्यमेभूयान्नकुर्यांकर्मचेदिदं १२ श्रीनारदउवाच श्रुत्वावचःशंब
रारेःसाधुसाध्वितियूथपाः ऊचुस्तेषांपश्यतांचतंजग्राहयदूत्तमः १३ गर्गोयदुकुलाचार्यान्मुहूर्तंबोध्ययत्नतः
तत्स्नानंकारयामासमुनिभिर्वेदसूक्तिभिः १४ उग्रसेनोथतिलकंप्रद्युम्नस्यचकारह बलिंदत्वानमश्चक्रुःसर्वेया
दवयूथपाः १५ उग्रसेनोददौखड्गंप्रद्युम्नायमहात्मने कवचंप्रददौसाक्षाद्बलदेवोमहाबलः १६ स्वतूणा-
द्वौविनिष्कृष्यतूणावक्षयसायकौ धनुश्चशार्ङ्गधनुषःसमुत्पाद्यददौहरिः १७ किरीटकुंडलेदिव्येपीतंवासो
मनोहरं छत्रंचचामरेसाक्षाच्छूरोत्पन्नोददौपुनः १८ शतचंद्रंददौतस्मैवसुदेवोमहामनाः उद्धवःप्रददौ
साक्षान्मालांकिंजल्किनींशुभां १९ अक्रूरोदक्षिणावर्तंशंखंविजयदंददौ श्रीकृष्णकवचंयंत्रंगर्गाचार्योद
दौमुनिः २० तदैवह्यागतःशक्रोलोकपालैःसकौतुकः आजग्मतुर्ब्रह्मशिवौदेवर्षिगणसंवृतौ २१ प्रद्यु
म्नायददौशूलीत्रिशूलंनिर्ज्वलप्रभं ब्रह्माददौमहाराजपद्मरागंशिरोमणिं २२ पाशीपाशंशक्तिधरःशक्तिं
शत्रुविमर्दिनीम् वायुश्चव्यजनेदिव्येयमोदंडंददौपुनः २३ रविर्गदांमहागुर्वींकुबेरोरत्नमालिकां चंद्रकां
तिमणिंचंद्रःपरिघंचतनूनपात् २४ क्षितिश्चपादुकेप्रादाद्दिव्येयोगमयेपरे प्रद्युम्नायददौकुंतंभद्रकालीत
रस्विनी २५ हैमाढ्यमुच्चशिखरंसहस्रहयसंयुतं विश्वकर्मकृतंसाक्षाद्ब्रह्मांडांतर्बहिर्गतं २६ सहस्रच
क्रसंयुक्तंमनोवेगंघनस्वनं मंजीरकिंकिणीजालंघंटाटंकारभूषणं २७ रथंददौमहादिव्यंसहस्रध्वजशो-
भितं जैत्रंरत्नमयंशक्रःप्रद्युम्नायमहात्मने २८ शंखदुंदुभयोनेदुस्तालवीणादयस्तदा मृदंगवेणवोरागै
र्जयध्वनिसमाकुलैः २९ वेदघोषैर्लाजपुष्पैर्मुक्तावर्षसमन्वितैः प्रद्युम्नस्योपरिसुराःपुष्पवर्षंप्रचक्रिरे ३०

न्वितांवरं श्रीकृष्णबलदेवाभ्यामुग्रसेनउवाचह १ उग्रसेनउवाच हेप्रद्युम्नमहाप्राज्ञश्रीकृष्णकृपयात्वरं वि-
जित्यनृपतीन्सर्वान्द्वारकामागमिष्यसि २ मत्तंप्रमत्तमुन्मत्तंसुप्तंबालंजडंस्त्रियं प्रपन्नंविरथंभीतंमारिपुंहंति
धर्मवित् ३ राज्ञोहिपरमोधर्मश्चार्तानामार्तिविग्रहः उत्पथानांबधश्चेत्थमाततायीवधार्हणः ४ पुमान्यो-
षिदुतक्लीवआत्मसंभाविनोधमः भूतेषुनिरनुक्रोशोनृपाणांतद्वधोवधः ५ नैनोराज्ञःप्रजाभर्तुर्धर्मयुद्धे
वधोद्विषां आदिराजोनृपान्पूर्वंप्राहस्वायंभुवोमनुः ६ योरणेनिर्भयोभूत्वा कृत्वाग्निंप्रागतोव्यसुः सग-
च्छेद्ब्रह्मपरंभित्त्वामार्तंडमंडलम् ७ भयाद्रणाद्दुपरतस्त्यक्त्वायुद्धेपतिंनृपः व्रजेद्यःक्षत्रियोभूत्वासमहारौ-
रवंव्रजेत् ८ सेनांरक्षतुराजाहिसेनाराजानमेवहि सूतःकृच्छ्रगतंरक्षेद्रथिनंसारथिंरथी ९ यूयंचयाद-
वाःसर्वेसमर्थबलवाहनाः कार्ष्णिमेवाभिरक्षंतुकार्ष्णिर्वःपरिरक्षतु १० गावोविप्राःसुराधर्मछंदांसिभुवि-
साधवः पूजनीयाःसदासर्वैर्मनुष्येर्मोक्षकांक्षिभिः ११ वेदाविष्णुवचोविप्रामुखंगावस्तनुर्हरेः अंगानिदेव-
ताःसाक्षात्साधवोह्यसवःस्मृताः १२ श्रीकृष्णोयंहरिःसाक्षात्परिपूर्णतमःप्रभुः येषांचित्तेस्थितोभक्त्यातेषां
तुविजयःसदा १३ श्रीनारदउवाच शिरसाजगृहुःसाक्षादुग्रसेनस्यशासनं प्रणेमुर्यादवाःसर्वेकृतांजलि
पुटान्नृप १४ उग्रसेनंनृपंशूरंवसुदेवंबलंहरिं ननामकार्ष्णिःशिरसागर्गाचार्यंमहामुनिं १५ श्रीकृष्ण-
बलदेवाभ्यांपुरींयातेनृपेश्वर दिग्जयार्थीहरेःपुत्रःप्रययौयादवैःसह १६ चतुर्योजनलंबीस्थिराजमार्गोपिय-
स्यवै बभौहेमसमयैःसर्वैःशिबिरैर्मैथिलेश्वर १७ अग्रतोवाहिनीयुक्तोकृतवर्मामहाबलः ध्वजिनीसहि-
तःपश्चादक्रूरोधन्विनांवरः १८ तत्पश्चादुद्धवोमंत्रीप्रतिमापंचसंयुतः तत्पश्चात्कृष्णचंद्रस्यसुतास्त्व

गाविकटंसंभवः १८ कौंकणाः कोटकाः केचित्कर्णाटागौर्जराहयाः सौवीराः सैंधवाः केचित्पांचाला आर्बुदाः परे
१९ कैच्छाश्चकेचिदानर्ता गांधारामालवादयः महाराष्ट्रभवाः केचित्तैलंगाजलसंभवाः २० परिपूर्णतमस्यापि
श्रीकृष्णस्यमहात्मनः वाजिशालाःप्रवर्तंतेतेभ्यश्चैवविनिर्गताः २१ श्वेतद्वीपाच्चवैकुंठात्तथाजितपदान्नृप रमा-
वैकुंठलोकाच्च प्रासाद्येतेपिनिर्गताः २२ हेममहारसमायुक्तामुक्तामालामनोहराः शिखामणिमहारश्मिसेविताःकृप-
रिच्छदाः २३ चामरैर्मंडिताःपुच्छसुरवपदस्फुरत्प्रभाः यादवानांमहासैन्येदृश्यंतेचेदृशाहयाः २४ वायुवेगा
मनोवेगानस्पृशंतःपदैर्भुवि अपक्कसूत्रेष्वतिगाबुद्बुदेष्वपिमैथिल २५ व्रजंतःपारदमनुजालेपूर्णाभवेषुच
दृश्यंतेपिनिराधाराःस्फारावारिषुमैथिल २६ गंडशैलनदीदुर्गगतंप्रासादसंचयान् विलंघयंतःसततंचंचलास्ते-
तुरंगमाः २७ मयूरीतित्तिरीक्रौंचीहंसींयेषांजनींगतिं कुर्वंतोपिविनृत्यंतोमैथिलेंद्रइतस्ततः २८ केचित्सप
क्षादिव्यांगाश्यामकर्णामनोहराः पीतपुच्छाश्चंद्रवर्णावाजिशालाविनिर्गताः २९ उच्चैःश्रवकुलेजातास्सूर्यवा
जिभवाःपरे अश्विनीसुतविद्याढ्यावरुणेनप्रयोजिताः ३० केचिन्मंदारभाःकेचिच्चित्रवर्णामनोहराः अश्वि-
नीपुष्पसंकाशाःस्वर्णाभाहरितप्रभाः ३१ पद्मरागप्रभाःकेचित्सर्वलक्षणलक्षिताः कोटिशःकोटिशोराजन्नन्ये-
पिनिर्गताहयाः ३२ धनुर्धृतोभटाःसैन्येसंग्रामेलब्धकीर्तयः शक्तित्रिशूलासिगदावर्मपाशधराःपरे ३३ वर्षं-
तःशस्त्रधाराभिःप्रलयाब्धिसमानृप दिग्गजाइवदृश्यंतेमर्दयंतोह्यरीन्मृधे ३४ एवंविनिर्गतंराजन्यदूनांविपुलं-
बलं दृष्ट्वासुरासुराःसर्वेविसिष्मुःपरमद्भुतं ३५ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुला-
श्वसंवादेयादवसैन्यगमनंनामतृतीयोऽध्यायः ३ श्रीनारदउवाच इत्थंसेनावृतंवीराप्रद्युम्नंधन-

रथेनशक्रदत्तेनस्वसैन्यपरिवारितः कच्छदेशान्ययौजेतुंत्रैपुरान्गिरिशोयथा ६ कच्छदेशाधिपःशम्भोमृगयार्थी-
विनिर्गतः सेनांसमागतांज्ञालापुरींहालांसमाययौ ७ प्रद्युम्नस्यागतासेनागजपादप्रताडनैः चूर्णयंतीतरून्देशान्पा
तयंतिचमैथिल ८ उत्थितैस्तद्रजोवृंदैरंधीभूतंनभोभवेत् भयंप्रापुर्जनाःसर्वेकच्छदेशविवासिनः ९ तदाति
धर्षितःशम्भोगजानांहेममालिनां नीत्वापंचशतंसद्योहयानामयुतंतथा १० विंशद्भारंरूक्मवर्णानामागतस्तस्यसन्मु
खे दत्वाबलिंननामाशम्भुजावध्वाकरद्वयं ११ तस्मैतुष्टःशंबरारिःप्रददौरत्नमालिकां संस्थाप्यराज्येतंराजन्तेषां
हिप्रकृतिःसता १२ कलिंगान्प्रययौजेतुंरुक्मिणीनंदनोबली पतत्पतोकैःसत्सैन्यैर्मेघैरिंद्रइवव्रजन् १३
कलिंगराजःस्वबलैःसमर्थद्विपवाहनैः निर्ययौसन्मुखेयोद्धुंप्रद्युम्नस्यमहात्मनः १४ कलिंगमागतंवीक्ष्यानि
रुद्धोधन्विनांवरः रथेनैकेनतत्सैन्यैर्युयुधेयादवाग्रतः १५ शतबाणैश्चकालिंगंदशभिर्दशभीरथान् अता
यन्गजान्वीरश्चापटंकारयन्मुहुः १६ स्वशास्त्रवश्चस्वेसर्वेसाधुसाध्वितिवादिनः अनिरुद्धः प्रयुयुधेप्रद्युम्न
स्यप्रपश्यतः १७ अनिरुद्धस्यबाणौघैःकेचिद्वीराद्विधाकृताः गजाश्चभिन्नशिरसःपादभिन्नाहयान्नृप १८
रथाश्चचूर्णंचरणाहताश्चाहतनायकाः रथसारथयोवातैर्निपेतुःपादपाइव १९ पलायमानांतांसेनांकालिंगो
वीक्ष्यमैथिल आजगामगजारूढोविच्छिन्नकवचोरुषा २० द्विसप्ततिर्भारयुतांगदांविक्षेपसत्वरं गजेनपा
तयन्वीरान्जगर्जघनवद्बली २१ गदाप्रहारपतितंकिंचिद्व्याकुलमानसं अनिरुद्धंमृधेवीक्ष्ययादवाःक्रोधपूरि-
ताः २२ तद्वेवतेद्रुःकालिंगंबाणैस्तीक्ष्णैःस्फुरत्प्रभैः समांसमुद्धटंश्येनंकुररश्चंचुभिर्यथा २३ कालिंगोपि
तदाक्रुद्धःसज्यंकृत्वाधनुःस्वयं टंकारयन्मुहुर्बाणैर्बाणांश्चूर्णीचकारह २४ गदोगदांसमादायबलदेवानुजोबली

ष्टादशस्मृताः १९ ययुर्महारथा राजन्येशताक्षौहिणीयुताः प्रद्युम्नश्चानिरुद्धश्चदीप्तिमान्भानुरेवच २० सांबोमधुर्बृहद्भानुश्चित्रभानुर्वृकोरुणः पुष्करो वेदबाहुश्चश्रुतदेवःसुनंदनः २१ चित्रभानुर्विरूपश्चक-विर्न्यग्रोधएवच तत्पश्चात्प्रययुःसर्वेगदाद्याःकृष्णनोदिताः २२ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः ऋतुबाणकोटिसंख्यायादवानांप्रकथ्यते २३ तत्सैन्यसंख्यांनृपतेकःकरिष्यतिभूमिषु इत्थंयदूनांचलतां नृपाणांविकर्षतांतांमहतींचसेनां कोदंडटंकारयुतोथचक्रौधुकारआताडितदुंदुभीनां २४ इभेंद्रचीत्कार-हयेंद्रहेषणेर्नद्रद्धुशुंडीदृढवीरगर्जनैः ढक्कानिनादैर्यदुवस्तडित्स्वनैःप्रचंडमेघाइवलोविडिंडिरे २५ राज-द्भुवोमडलमेवदिग्गजाःमहत्स्वनैस्तेबधिरीकृताइव सर्वाथदुर्गंरिपवोविदुद्रुवुर्भिःसाहसाकोन्चलतांमहात्मना-२६ कूर्मस्तुकिंकाविलिकेवदंतःकुतःकगच्छामइतिद्रवंतः उपद्रवोद्दोषविधिःकथाति चचालकोकेःसहिताच लेति २७ छलेनभञ्जस्यहरिःपरेश्वरोभारंविदेहेशभुवोवतारसन् योभूत्क्षतुर्व्यूहधरोयदोःकुले तस्मैनमो नंतगुणायभूभृते २८ इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडेनारद बहुलाश्वसंवादे प्रद्युम्नदि ग्विजयार्थगमनंनामचतुर्थोऽध्यायः ४ श्रीबहुलाश्वउवाच कान्कान्देशान्ययौजेतुंक्रमतःश्रीह-रेःसुतः तस्यकर्माण्युदाराणिब्रूहिदेवर्षिसत्तम १ अहोश्रीकृष्णचंद्रस्यकृपाभक्तेषुचेदृशी पुनीता प्रश्नतःध्यातापापिनंसकुलंजनं २ श्रीनारदउवाच साधुसाधुत्वयापृष्टंसाधुतेविमलामतिः चरितंकृ-ष्णभक्तानांपुनातिभुवनत्रयं ३ तत्कालेमेघधाराश्वभूमेःसर्वरजांसिच कविश्चेद्गणयेद्राजन्नहरेःश्री मतोगुणान् ४ चतुर्योजनमात्रंहिछायायस्यप्रदृश्यते तेनश्वेतातपत्रेणशोभितोरुक्मिणीसुतः ५

जवाहागजैः सह अश्ववाहैरश्ववाहा वीरा वीरैः परस्परं १२ युयुधुस्तीक्ष्णबाणौघैश्चर्मखड्गगदर्ष्टिभिः पाशैः-
परश्वधै राजन् शतघ्नीभिर्भुशुंडिभिः १३ हन्यमानाश्च यदुभिर्गयवीरा भयातुराः सर्वे स्वंस्वं रथं त्यक्त्वा दुद्रुवुस्ते दि
शो दश १४ पलायमाने स्वबले गयो नाम महाबलः एकाकी प्रययौ योद्धुं धनुष्टंकारयन्मुहुः १५ दीप्तिमान् कृ
ष्णपुत्रस्तु धनुर्बाणै रिपोर्हयान् एकेन सारथिं जघ्ने द्वाभ्यां केतुं समुच्छ्रितं रथं च बाणविंशत्या सैकं चं पंचभिः पुनः
धनुस्तस्यापि चिच्छेद शतबाणैर्महाबलः १७ गयोन्यत्कर्मुरादाय दीप्तिमंतं हरेः सुतं जघान बाणविंशत्या जगर्ज
घनवद्बली १८ तत्प्रहारेण समरे किंचिद्व्याकुलमानसः दीप्तिमानथ जग्राह शक्तिं ज्योतिर्मयीं दृढां १९ चि
क्षेप भ्रामयित्वा तां गयाय ख्यायमहात्मने सापि तद्धृदयं भित्वा पपौ चरुधिरं महत् २० गयोपि पतितो राजन्मू
र्च्छितो भूद्रणांगणे दीप्तिमांश्च धनुः कोट्याकर्षयंस्तद्बले रिपुं २१ प्रद्युम्नस्य पुरः प्रागात् कद्रुजं गरुडो यथा
नरदुंदुभयो नेदुर्देवदुंदुभयस्तदा २२ आकाशाद्ववृषुर्देवाः पुष्पवर्षाणि पार्थिवाः तं देवतेनापि समर्चि-
तांघ्रिः श्रीकृष्णपुत्रो नृप शंबरारिः अवंतिकां संप्रययौ महात्मा श्रीकर्णिकां स्वर्णमयीमिवालिः २३ कृत्वाग
तं तं जयसेनराव समर्चयामास स मालवाधिपः आनीय वह्नांस्तु बलिं महात्मने प्रधर्षितो मैथिल तत्प्रभाववि-
त् २४ राजाधिदेवीं स्वपितुः पितुः स्वसां प्रणम्य तां कृष्णसुतो महामनाः विंदानुविंदौ परिरभ्य तत्सुतौ बभौ-
वृतो मालवदेशसंभवैः २५ प्रद्युम्नो धन्विनां श्रेष्ठः पुरीं माहिष्मतीं ययौ यादवैः स्वबलैः सार्द्धं नर्मदां सद
दर्श ह २६ राजतां मंद्रकल्लोलैः शृंगारतिलकामिव वहंतिं पुष्पनिचयं सुष्मिहं मुद्रिकामिव २७ वेतसी
वेणुतरुभिः पुष्पितैर्माधवैर्वृतैः स्फुरद्भिर्मूर्तिमद्भिश्च देवैः स्वर्गनदीमिव २८ तत्तीरे शिबिरैर्युक्तः प्रद्युम्नो

149

तद्गजंताडयामासवामहस्तेनमैथिल २५ अर्धचंद्रप्रहारेणविशीर्णोभूद्गजस्तथा इद्रवज्रप्रहारेणगंडशैलोय-
थान्नृप २६ कालिंगःपतितोभूत्वागृहीत्वामहतींगदां गदंचताडयामासकालिंगंप्रगदस्तदा २७ कालिंगगदयो-
स्तत्रघोरंयुद्धंबभूवह विस्फुलिंगान्क्षरंत्योद्वेगदेचूर्णीबभूवतुः २८ गदोगृहीत्वाकालिंगंपातयित्वारणांगणे
चकर्षस्वकरेणाशुफणिनंगरुडोयथा २९ गदाप्रहारव्यथितश्चूर्णितास्थिकलिंगराट् आययौशरणंसोपिप्रद्युम्नस्य-
महात्मनः ३० दत्वाबलिंप्राहकलिंगराजस्त्वंदेवदेवःपरमेश्वरोसि कोधावतंकःप्रसहेतकोत्वांजनोयथादंडधरंनमस्ते-
३१ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्वसंवादे कच्छकलिंगदेशविजयोनाम पंचमो ५
ध्यायः ५ श्रीनारदउवाच इत्थंजित्वाथकालिंगंप्रद्युम्नोयादवेश्वरः मरुधन्वजगामाशुजलंवैश्वानरोयथा
१ गिरिदुर्गसमायुक्तं धन्वदेशाधिपंगयं उद्धवंप्रेषयामासज्ञात्वातंयादवेश्वरः २ गिरिदुर्गगतःसाक्षादुद्धवोबु-
द्धिसत्तमः सभामेत्यगयंप्राहश्रृणुराजन्महामते ३ उग्रसेनोयादवेंद्रोराजराजेश्वरोमहान् जंबूद्वीपन्नृपाञ्जित्वा
राजसूयंकरिष्यति ४ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयं असंख्यब्रह्मांडपतिर्मंत्रीतस्याभवद्धरिः ५
तेनवैप्रेषितःसाक्षात्प्रद्युम्नोधन्विनांवरः शीघ्रंतस्मैबलिंनीत्वाकुलकौशल्यहेतवे ६ श्रीनारदउवाच श्रुत्वा-
किंचित्प्रकुपितोवीर्यशौर्यमदोद्धतः उद्धवंप्राहनृपतिर्गयोनामसहाबलः ७ गयउवाच बलिंतस्मैनदास्यामि
विनायुद्धंमहामते अल्पकालेनयदवोगतावृद्धिंभवादृशाः ८ इत्युक्तउद्धवोराजन्शंबरारिंसमेत्यसः सर्वेषांयाद-
वानांचश्रृण्वतांप्रसशंसह ९ तदैवरुक्मिणीपुत्रोगिरिदुर्गंसमाययौ तत्सैन्यैर्यादवैःसार्द्धंघोरंयुद्धंबभूवह १०
चूर्णयन्गजपादैश्चनगरान्भूजनान्द्रुमान् अक्षौहिणीभ्यांसंयुक्तोगयोयोद्धुंविनिर्ययौ ११ रथिनोरथिभिस्तत्रग

कुलात्मकस्यकलिः प्राजापत्येभविष्यति ८ कराजहंसः काकः क्व कमूर्खः क्वचपंडितः भृत्याविजिष्यंतिनृपंच-
क्रवर्तिनमीश्वरं ९ ययातिशापाद्यदवोभ्रष्टराज्यपदाःस्मृताः राज्यंस्वल्पंजलंप्राप्यप्रोन्च्छलंत्यापगाइव १० अवंश
संभवोराजासूर्यपुत्रोहिपंडितः निर्धनेनधनंप्राप्यतृणवन्मन्यतेजगत् ११ उग्रसेनः कतिदिने राज्यत्वंसमुपागतः
मंत्रिणावासुदेवेनपूजितोनबलान्नृपः १२ तस्यमंत्रीवासुदेवोजरासंधभयाद्द्रुतं मथुरांस्वपुरींत्यक्त्वासमुद्रशर-
णागतः १३ अभीरस्यापिनंदस्यपूर्वंपुत्रः प्रकीर्तितः वसुदेवोमन्यतेतंमत्पुत्रोयंगतत्रपः १४ वसुदेवा-
द्गौरवर्णाद्द्वयंश्यामः कुतोभवत् पितामहोपिगौरश्चदुःखहास्यमिदंवचः १५ प्रद्युम्नंतत्सुतंजित्वासबलंयादवैः
सह कुशस्थलींगमिष्यामिमहींकर्तुमयादवीं १६ श्रीनारदउवाच इत्युक्त्वाधनुरादायतूर्णोन्चाक्षयसायकौ
गंतुमभ्युदितंवीक्ष्यचेदिराजस्तमब्रवीत् १७ दमघोषउवाच शृणुपुत्रप्रवक्ष्यामिक्रोधंमाकुरुमाकुरु अक-
स्मादाचरेत्कार्यंनसिद्धिंविंदतेह्यसौ १८ धर्मार्थकाममोक्षाणांसाधनंनक्षमासमं तस्मात्सामप्रकर्तव्यंसाम्नोनस
दृशंसुखं १९ दानेनराजतेसामदानंसत्क्रिययापुनः सत्क्रियापियथायोग्यंगुणंसंप्रेक्ष्यराजते २० यदवश्चेदि
पाश्चैवज्ञातिसंबंधिनः स्मृताः चेदिपानांचवृष्णीनांकलिंनेच्छामितत्वतः २१ नारदउवाच शिशुपालोबोधितोपि
दमघोषेणधीमता नोवाचकिंचिद्धिमनास्तूष्णींभूतोमहाखलः २२ श्रुतिश्रवाचेदिपराजराज्ञीस्वसाशुभाशूरसुत-
स्यराजन् समेत्यपुत्रंशिशुपालसंज्ञंप्रत्याहसम्यग्विनयान्वितासा २३ श्रुतिश्रवाउवाच मापुत्रखेदंकुरुतात्कदा
चिन्माभूत्कलिश्चेदिपयादवानां तेमातुलोयंकिलसूरसूनुर्भ्रातापिचतेतत्सुतएवकृष्णः २४ तस्यात्मजायेत्रसमाग
तास्तेप्रद्युम्नमुख्याः शतशोमहांतः संपूजनीयाश्चमयाभवद्भिः संलालनीयानहियुद्धयोग्याः २५ अहंगमिष्यामि



150

यादवेश्वरः स्थितोभूद्यादवैः साकं देवैरिंद्र इवप्रभुः २९ इंद्रनीलो महाराज ज्ञानी माहिष्मतीपतिः स्वदूतंप्रेषयामास प्रद्युम्नाय महात्मने ३० प्रद्युम्नराजशिबिरे दूतोनत्वाकृतांजलिः उवाचवचनंतत्र सर्वेषांशृण्वतांनृप ३१ दूतउवाच हस्तिनापुरनाथेन धार्तराष्ट्रेणधीमता स्थापितोतिबलोवीर बलिंकस्मैनदास्यति ३२ सुयोधनाद्यैश्चछाभिर्द्रव्यंयच्छतिमाबलात् योन्दूत्वंचसबद्धश्चविफलोहिरणेत्रवै ३३ श्रीप्रद्युम्नउवाच यथागयोदूतकलिंगराट्यथातथाभिभूलोपिबलिंप्रदास्यति नृपनजानाति महोग्रसेनकं माहीष्मतीशोयमतीवराजराट् ३४ श्रीनारदउवाच उक्तोदूतःसदेवाशु गत्वामाहिष्मतीपतिं सभायांकथयामास प्रद्युम्नकथितंवचः ३५ यदूनासुदृढंसैन्यंवीक्ष्यमाहिष्मतीपतिः गजानांपंचसाहस्रं हयानांनियुतंशुभं ३६ रथानामयुतंजैत्रंनीत्वाराजाविनिर्गतः बलिंददौसमेत्याशु प्रद्युम्नायमहात्मने ३७ इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवादे मरुधन्वमालवमाहिष्मतीदेशविजयोनामषष्ठोऽध्यायः ६ श्रीनारदउवाच प्रद्युम्नोथ महावीर्योजित्वामाहीष्मतीपतिं विकर्षन्महतींसेनांगुर्जरान्समाययौ १ गुर्जराटाधिपंवीरं ऋष्यंनाममहाबलं जग्राहसेनयाकार्ष्णिःशुंडयाहिर्यथाविराट् २ सयस्तस्माद्बलिंनीत्वा यादवेंद्रोमहाबलः विकर्षन्महतींसेनांचेदिदेशांस्ततोययौ ३ दमघोषश्चेदिराजो वसुदेवस्वसुःपतिः शिशुपालस्तस्यपुत्रो कृष्णशत्रुःप्रकीर्तितः ४ अमीयायमहाबुद्धिर्दमघोषंमहाबलं नत्वाप्राहमहाबुद्धिःसुद्धवोबुद्धिसत्तमः ५ उद्धवउवाच राजन्देहिबलिंतस्मैउग्रसेनायभूभृते विजित्यनृपतीन्योसौराजसूयंकरिष्यति ६ श्रीनारदउवाच इत्थंनिशम्यवचनंदमघोषसुतःखलः स्फुरदोष्ठोमन्युपरःप्राहेदंसदसिस्थितः ७ शिशुपालउवाच दुरत्ययाकालगतिरहोचित्रमिदंजगत् विधेः

वाहिनीध्वजिनीभ्यांच द्युमच्छक्रौ विनिर्गतौ प्रतिमाक्षौहिणीभ्यां तौ रंगपिंगौ च मंत्रिणौ २ शिशुपालमहासैन्यं प्रल
याब्धिसमं नृप संवीक्ष्य यदवस्तत्तु चाजग्मुः कृष्णपोतकाः ३ वाहिनीसहितः पश्चात् प्रुमान्नाम महाबलः युयुधे-
यादवैः सार्द्धं शिशुपालप्रणोदितः ४ द्वयोश्च सैन्ययोर्बाणैरंधकारोऽभवद्रणे हयपादरजोवृंदैः प्रोत्थितैश्छादयन्न
भः ५ हयाश्च नृप धावंतः प्रोत्पतंतो द्विपाः क्षिति द्विपाश्च सक्षता युद्धे पादयंतः पदैर्द्विषः ६ शुंडादंडस्य फूत्कारै-
र्मर्दयंत इतस्ततः कस्तूरीपत्रसिंदूररक्तकंबलमंडिताः ७ बाणैर्गदाभिः परिघैः खड्गैः शूलैश्च शक्तिभिः छिन्नां
गाः पत्तयः पेतुश्छिन्नबाह्वंघ्रिजानवः ८ कश्चित्तीक्ष्णासिना राजन् हयान्युद्धे द्विधाकरोत् केचिद्दंतान्संगृहीत्वा
कुंभेषु करिणां गताः ९ आमात्यहस्तिवाहं च मर्दयंतो मृगेंद्रवत् अलंघयंतः सहयागजवृंदं महाबलाः १०
खड्गप्रहारं कुर्वंतो विदार्य परसैनिकान् हयपृष्ठान्न दृश्यंते दृश्यंते तेन टाइव ११ सैन्यवेगं च शत्रूणां दृष्ट्वाक्रूरः समा
ययौ चकार दुर्दिनं बाणैर्बाणौघैश्चापनिर्गतैः छादयामास चाक्रूरं वर्षासूर्यमिवांबुदः १२ छित्वा तद्बाणप-
टलमसिना गांदिनीसुतः शक्त्या ततताडितं वीरं द्युमंतं क्रोधमूर्छितं १३ तत्प्रहारेण भिन्नांगो मूर्छितो घटिका
द्वयं पुनरुत्थाय युयुधे शिशुपालसखा बली १४ गृहीत्वाथ गदां गुर्वीं लक्षभारविनिर्मितां तताडहृदि चाक्रूर-
ञ्जगर्ज घनवद्द्युमान् १५ अक्रूरे तत्प्रहारेण किंचिद्व्याकुलमानसे युयुधानं तदा प्रागाज्ज्याशब्दं कारयन्मु
हुः १६ शिरस्तस्याशु चिच्छेद बाणेनैकेन लीलया पतिते द्युमति व्याजो वीरास्तस्य विदुद्रुवुः १७ तदैव-
शक्तिः संप्राप्तो दृष्ट्वा सेनां पलायितां शूलं चिक्षेप सहसा युयुधानाय धीमते १८ युयुधानश्च बाणौघैस्तच्छू-
लं शतधाकरोत् शक्तो गृहीत्वा परिघं युयुधानं तताड ह १९ युयुधानोऽर्जुनसखः क्षणं मूर्च्छामवाप ह तदै

समार्द्रचित्तानेतुंत्वयातातसमागतान्स्तान् द्रष्टुंचिरोत्कंठमनामहोत्सवेनैतादृशोयंसमयःकदाचित् २६ शिशुपालउवाच ममशत्रूरामकृष्णौयदवःशत्रवश्चमे घातयिष्यामितान्सर्वान्यैरहंतुतिरस्कृतः २७ पुरावैकुंडिनपुरेयाभ्यांमेहेलनंकृतं विवाहोवारितोमेवैरामकृष्णावरीमम २८ यदितेषांयादवानांयुवांपक्षंकरिष्यथ तदात्वांसहपित्राचनिगृह्यनिगडेर्दृढैः २९ कारागारेकारयामिकंसःस्वपितरंयथा अन्यथाचिद्धधिष्यामिशपथोसेतुदुर्घटः ३० श्रीनारदउवाच तद्वचःपरुषंश्रुत्वातूष्णींयातेथचेदिपे तद्वचःस्वबलंप्राप्यप्राहसर्वंयथोदितं ३१ वाहिनीध्वजिनीचैवप्रतिमाक्षौहिणीयुता चतुर्धाशिशुपालस्यसेनायुक्ताबभूवह ३२ बहुलाश्व उवाच वाहिन्याद्याश्चयासेनास्तत्संख्यांवदमेप्रभो ऋषयोहिप्रजानंतिभूतंभव्यंभवत्परं ३३ श्रीनारदउवाच शतंद्विपानांरथिनांसहस्रशतसंयुत अयुतंतुरगाणांचपृतनालक्षमेवच ३४ सेनायालक्षणंस्वल्पंद्विगुणंचतुरंगिणीं चतुःशतंद्विपानांचरथानामयुतंतथा ३५ चतुर्लक्षंहयानांचपत्तीनामेककोटयः लोहकंचुकसंयुक्ताःसमर्थबलवाहनाः ३६ शस्त्रास्त्रज्ञायत्नभूरावाहिनीसाबुधैःस्मृता वाहिन्याद्विगुणीभूताध्वजिनीसाप्रकीर्तिता ३७ ध्वजिन्याद्विगुणीज्ञेयाकविभिःकथितापुरा ससाहसोपिशूरःस्यात्सामंतशतशूरभृत् ३८ सामंतानांशतंबिभ्रत्सगजीकथितामृधे समरेसारथिंचाश्वान्रथंरक्षेद्रथीचयः ३९ सेनांरक्षतियोबाणैःकथ्यतेसमहारथी स्वसेनांरक्षयन्शत्रून्सूदयन्रणमंडले ४० योक्षौहिण्यासमंयुद्धेत्सदासोतिरथीस्मृतः ४१ इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडेश्रीनारदबहुलाश्वसंवादे गुर्जराट्चेदिदेशगमनंनामसप्तमोध्यायः ७

श्रीनारदउवाच निर्गतःशिशुपालोसौसबलश्चंद्रकापुरात् पितरौतौतिरस्कृत्यस्वभावोह्यसतामयम् १

भूतौबभूवतुः ७ भानुःखङ्गप्रहारेणाशिरसीरंगपिंगयोः युगपत्येततुर्युद्धेतदद्भुतमिवाभवत् ८ भानुस्त-
योश्चशिरसीनीत्वाप्रद्युम्नसन्मुखे आययौविजयीवीरःश्लाघितःसैन्यनायकैः ९ दिविदुंदुभयोनेदुर्नवदुंदु-
भिभिःसमं अभूज्जयजयारावःपुष्पवर्षाःसुरैःकृताः १० रंगपिंगौमृतौश्रुत्वाशिशुपालोरुषान्वितः जैत्रंरथंस
मारुह्ययदूनांसन्मुखंययौ ११ मदच्युद्भिर्गजेर्दीर्घैरत्नकंबलमंडितैः स्वर्णनीडसमायुक्तैर्लोलघंटाक्कणत्स्व
नैः १२ रथैश्चदेवधिष्ण्याभैर्वायुवेगैस्तुरंगमैः विद्याधरसमैर्वीरैर्नादयन्वसुधातलं १३ शिशुपालबलंदृष्ट्वा
शक्रदत्तेरथेततः सर्वेषामग्रतःकार्ष्णिःप्रययौधन्विनांवरः १४ शंखंदध्मौहरेःपुत्रोदिशःखंनादयन्नृप तेन-
ननादेनशत्रूणांकंपोभूद्धृदिमानद १५ शिशुपालमहासैन्येप्रासादइवदुर्गमे चक्रेनाराचसोपानंसहसारु
क्मिणीसुतः १६ दमघोषसुतोधीमान्धनुष्टंकारयन्मुहुः ब्रह्मास्त्रंसंदधेयद्वैदत्तात्रेयेणशिक्षितं १७ प्र-
चंडंसर्वतस्तेजोदृष्ट्वाश्रीरुक्मिणीसुतः ब्रह्मास्त्रेणापितद्युद्धेसंजहारसलीलया १८ शिशुपालोमहाधीमानं
गारास्त्रंसमादधे जामदग्न्येनयद्दत्तंमहेंद्रेपर्वतेनृप १९ तस्मादंगारवर्षाभिःकार्ष्णिसेनातिविह्वला पर्जन्यास्त्रं
महादिव्यंतदाकार्ष्णिःसमादधे २० स्थूलाभिर्मेघधाराभिरंगाराःशांतिमाययुः शिशुपालस्तदाक्रुद्धोगजास्त्रं-
तत्समादधे २१ यदगस्त्येनमुनिनाशिक्षितंमलयाचले महोद्भटागजादीर्घाःकोटिशस्तद्विनिर्गताः २२ तेसे
न्यैःपातयामासुःप्रद्युम्नस्यमहात्मनः हाहाकारोमहानासीद्यदूनांवाहिनीषुच २३ प्रद्युम्नोथरणेश्लाघी-
नृसिंहास्त्रंसमादधे नृसिंहोनिर्गतस्तस्मान्नादयन्वसुधातलं २४ स्फुरत्सटोदीर्घवालोनखलांगलभीष-
णः ननादहुंकृतैःशब्दैर्भक्षयन्स्तानाजानूरणे २५ विदार्यगजकुंभांतमुत्पतन्भगवान्हरिः गजवृंदम

ववीरासंग्रामस्तःकृतवर्मामहाबलः २० शक्तस्यापिरथंसाश्वंबाणैश्चूर्णंचकारह शक्तोपिचूर्णयामास
गदयातद्रथंपरं २१ कृतवर्मारथंत्यक्त्वाशक्तंजग्राहरोषतः पातयित्वाभुजाभ्यांतंचिक्षेपनृपयो
जनम् २२ शक्तेचपतितेयुद्धेशिशुपालप्रणोदितौ रंगपिंगौमंत्रिणौतौप्रतिमाक्षौहिणीयुतौ २३
बाणवर्षंप्रकुर्वंतौमर्दयंतावरीन्मृधे आजग्मतुर्मैथिलेंद्रयथावानहुताशनौ २४ उद्भटंतद्बलंवीक्ष्य
यादवेंद्रपितुःसमः आदायचापंसदसिप्रद्युम्नोवाक्यमब्रवीत् २५ प्रद्युम्नउवाच अहंगमिष्यामि
पुर रंगपिंगमृधेजनाः रंगपिंगौचहृश्येतेमहाबलपराक्रमौ २६ श्रीनारदउवाच एतच्छ्रुत्वामहा
बाहुर्भानुःकृष्णसुतोबली सर्वेषामग्रतोभूत्वाभ्रातरंप्राहनीतिवित् २७ भानुरुवाच त्रैलोक्यंदृश्य
तेप्राप्तंयदातेसन्मुखेप्रभो तदातेचापटंकारोभविष्यतिनसंशयः २८ केवलेनापिखड्गेनशिरसीरंगपिंगयोः
छित्वाचात्रप्रवक्ष्यामिकलिंगशकलाविव २९ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसं
वादेद्युमच्छक्तवधोनामाष्टमोऽध्यायः ८ श्रीनारदउवाच इत्युक्त्वाशत्रुहाभानुर्गृहीत्वाखड्गचर्मणी प
दातिःप्रययौसैन्येवनेवन्यरिवप्रभुः १ भानुःखड्गेनशत्रून्स्तान्छिन्नबाहूंश्चकारह द्विपान्हयान्सन्मुखस्था
न्पार्श्वस्थांश्चद्विधाकरोत् २ खड्गद्वितीयोह्येकोकीरजेन्छिंदन्नरीन्मृधे नीहारमेघपटलेभानुर्भानुरिवस्फु-
रन् ३ हस्तिनांच्छिन्नकुंभानांभानुःखड्गेनमैथिल मुक्तानिपेतुश्चयथातारकाक्षीणकर्मणा ४ लक्षमात्रे
पतत्सैन्यंपातयित्वारणांगणे रंगपिंगोपरिप्रागाद्भानुर्वीरोमहाबलः ५ कृष्णाद्दत्तेनखड्गेनरथौतौरंगपिंगयोः
छित्वाहयान्सनेतृंश्चभानुर्युद्धेद्विधाकरोत् ६ खड्गोनीत्वारंगपिंगौतेडलुस्तंमहोद्भटौ भानुश्चमंगतोखड्गोभगी

हेमल्ल विष्णुमायातिदुर्गमा ४ वयंतुबहवोवीरास्त्वमेकाकीसमागतः अधर्मोयंमहामल्ल दृश्यतेयाहिसांप्रतं ५
मल्लउवाच यदायुद्धंनकुरुतभवंतोबलशालिनः मत्प्रादेधोत्रनिर्य्यातुतदायास्यामिसांप्रतं ६ श्रीनारदउवाच
एवंवदतिमल्लेवैसर्वेयादवपुंगवाः बभूवुःक्रोधसंयुक्ताःपश्यतस्तस्यमैथिल ७ गदोगदांसमादाय बलदेवानुजोब
ली तस्थौसोपिगदांनीत्वासर्वेषांपश्यतांनृप ८ गदांगरिष्ठांचिक्षेपगदायसमहाबलः गदोपरिगदांनीत्वास्वग-
दांप्राक्षिपद्गदः ९ गदस्यगदयासोपिताडितःपतितोभुवि मूर्छांनचकाराशुउद्भ्मन्रुधिरंमुखात् १० कौंक-
णस्थोथमेधावीभूत्वाप्राहहरेःसुतं परीक्षार्थंचभवतामेतत्कार्य्यंमयाकृतं ११ त्वमेवभगवान्साक्षात्कुतोहंप्राकृ
तोजनः क्षमस्वमेपराधंभोत्वामहंशरणंगतः १२ श्रीनारदउवाच इत्युक्त्वाथबलिंदत्वानमस्कृत्यहरेःसुतं -
कौंकणस्थपुरींप्रागान्मेधावीक्षत्रियोत्तमः १३ कुटकाधिपतिंमौलिंमृगयायांविनिर्गतं जग्राहसमहाबाहुःसांबोजां
बवतीसुतः १४ कार्ष्णिस्तस्माद्बलिंनीत्वादंडकाख्यंवनंययौ मुनीनामाश्रमंपश्यन्स्वसैन्यपरिवारितः १५ निर्वि
ध्यांचपयोष्णींचतापींस्नात्वाहरेःसुतः सूर्प्पारकंमहाक्षेत्रंआर्यांद्वैपायनींततः १६ ऋष्यमूकंततःपश्यन्प्रवर्ष-
णगिरिंगतः पर्जन्योभगवान्साक्षान्नित्यदायत्रवर्षति १७ गोकर्णाख्यंशिवक्षेत्रंदृष्ट्वाकार्ष्णिःस्वसैन्यकैः त्रिग-
र्तान्केरलान्देशान्ययौजेतुंमहाबलः १८ अंबष्ठःकेरलाधीशःश्रुत्वावार्तांतुमन्मुखात् ददौतस्मैबलिंशीघ्रंप्रद्यु
म्नायमहात्मने १९ कृष्णावेणींतदातीर्यतैलंगान्विषयान्ययौ सैन्यपादरजोवृंदैरंधीकुर्वन्नभःस्थलं २० तैलं-
लंगस्याधिपोराजाविशालाक्षःप्रकीर्तितः पुरस्योपवनेरेमेसुंदरीगणसंवृतः २१ मृदंगाद्यैश्ववादित्रैर्मधुरध्व-
निसंकुलैः परैरप्सरसांरागैःपीयमानस्सुराडिव २२ तंप्राहसुंदरीरामाराज्ञीमंदारमालिनी रजोव्याप्तंनभोवीक्ष्य

153

दर्शयित्वातत्रैवांतरधीयत २६ चिक्षेपपरिघंरोषाच्छिशुपालोमहाबलः चिच्छेदपरिघंतंद्वैयमदंडेनमाधवः २७ त
तश्चैद्योरुषाविष्टोगृहीत्वाखड्गचर्मणी प्रद्युम्नंतमुपाधावत्पतंगइवपावकं २८ कार्ष्णिस्तत्ताडतत्खड्गंयमदंडेनवेगतः
चूर्णीबभूवतेनापिनिस्त्रिंशश्चर्मणासह २९ पाशिदत्तेनपाशेनसहसायादवेश्वरः दमघोषसुतंबद्ध्वाविचकर्षरणांग
णे ३० शिशुपालंघातयितुंखड्गंजग्राहरोषतः तदैवतत्करौसाक्षाद्बद्धोजग्राहवेगतः ३१ गदउवाच परिपूर्ण
तमेनापिश्रीकृष्णेनमहात्मना वध्योयंदेववचनंवचनंमावृथाकुरु ३२ श्रीनारदउवाच तदाकोलाहलेजाते-
शिशुपालस्यबंधने दमघोषोबलिंनीत्वाप्रागात्प्रद्युम्नसन्मुखे ३३ कार्ष्णिस्तमागतंदृष्ट्वात्यक्त्वाशस्त्राणिशीघ्र
तः अग्रतश्चेदिपंशश्वन्ननामशिरसाभुवि ३४ मिलित्वाचाशिषंदत्वाप्रद्युम्नायमहात्मने दमघोषोमहाराजः-
प्राहगद्गदयागिरा ३५ दमघोषउवाच प्रद्युम्नत्वंतुधन्योसिश्रीयदूनांशिरोमणे मत्पुत्रेणकृतंयद्वैतत्क्षमस्व
दयानिधे ३६ श्रीप्रद्युम्नउवाच ममदोषोनतेचार्यनतेपुत्रस्यहेप्रभो सर्वंकालकृतंमन्येप्रियमप्रियमेववा
३७ श्रीनारदउवाच इत्युक्तोदमघोषोपिप्रद्युम्नेनप्रयंत्रितः शिशुपालंमोचयित्वानीत्वागाच्चंद्रकांपुरीं ३८ -
प्रद्युम्नस्यबलंश्रुत्वासाक्षाच्छ्रीकृष्णतेजसः नैकपियुयुधुस्तेनराजानश्चबलिंददुः ३९ इतिश्रीमद्गर्गाचार्यसं
हितायांविश्वजित्खंडे नारदबहुलाश्वसंवादे रंगपिंगवधे शिशुपालयुद्धेचेदिदेशविजयोनामनवमोऽध्यायः ९
श्रीनारदउवाच मत्स्यतीर्थंततःस्नात्वाप्रद्युम्नोयदुभिःसह प्रययौकोंकणान्देशान्दुंदुभीन्नादयन्मुहुः १ कों
कणस्थोथमेधावीगदायुद्धविशारदः एकाकीमल्लयुद्धेनपरीक्षन्नाययौबले २ प्रद्युम्नंसबलंप्राहशृणुमेयादवे-
श्वर गदायुद्धंदेहिमह्यंमद्बलनाशयप्रभो ३ प्रद्युम्नउवाच एकतोह्येकतोवीराबलवंतोमहीतले मानंमाकुरु

प्रद्युम्नः प्रेषयामास तस्योपरि महद्बलं अष्टादशाक्षौहिणीनां धनुष्टंकारन्मुहुः ४१ बाणैः परस्वधै राजन्शतघ्नी-
भिर्भुशुंडिभिः तत्तेद्रुर्यादवाः सर्वे सर्वतो द्विपयथागजाः ५२ दंतवक्त्रस्वगदयाकरींद्रानुत्कटान्बहून् पातयामास
राजेंद्र भिन्नकुंभस्थलान्मृधे ५३ कांश्चित्पादेषुचोन्नीय किंकिणीजालनादितान् सशृंखलान्सनीडान्स्वालोलघंटार-
णस्वनान् ५४ वातस्तूलमिवाकाशे चिक्षेप शतयोजनं शुंडादंडेषु कांश्चिद्वै गृहीत्वा दैत्यपुंगवः ५५ भ्रामयि-
त्वा गजान्दिक्षु नदत्तः प्राक्षिपद्रुषा कांश्चिद्गजावंशयोश्च कक्षयोरुभयोरपि ४६ पद्भ्यामाक्रम्य शक्रभेदैत्यः का-
लाग्निरुद्रवत् रथान्ससूतान्साश्वांश्च सध्वजान्समहारथान् ४७ चिक्षेप गगने वीरः पद्मानीव प्रभंजनः ४७
तुरगांश्च पदातींश्च प्राक्षिपद्गगने बलात् अधोमुखा दूर्द्धमुखा राजपुत्रा महाबलाः ४८ सशस्त्रारत्नकेयूरसंयुक्ता
स्तारकाइव आकाशात्सपतंतस्ते वमंतो रुधिरं मुखात् ४९ बलं विलोकयामास गदयादैत्यपुंगवः दंष्ट्रयाप्रलया-
ब्धिंश्रीवाराहइवमैथिल ५० इति श्रीमद्गर्गाचार्यसंहितायां विश्वजित्खण्डे नारदबहुलाश्वसंवादे कोंकणकु
टक त्रिगर्त केरल तैलंग महाराष्ट्र कर्णाटविजये कारूषदेशगमनंनाम दशमोऽध्यायः १० श्रीनारद उवाच
तदा श्रीकृष्णपुत्राणामष्टादशमहारथाः सक्षतं कारयामासुर्दंतवक्त्रं महाबलं १ दंतवक्त्रोतिशुशुभे सक्षतो-
रक्तधारया लाक्षयेवयथासौधं प्रहारं नानुचिंतयन् २ कृतवर्माचबाणौघैस्तं जघान रणांगणे युयुधानश्च
खड्गेनशक्त्याक्रूरो महाबलं ३ सारणस्तंकुठारेणाहनत्तं रौहिणीसुतः दंतवक्त्रोतिगदयायुयुधानंतताडह ४
करेण कृतवर्माणमक्रूरं स्वांघ्रिणाहनत् सारणं भुजवेगेन कारूषो रणदुर्मदः ५ अक्रूरः कृतवर्मा च युयुधानो-
थसारणः निपेतुर्मूर्च्छिता भूमौ मरुता पादपाइव ६ ततो गदां समादाय सांबो जांबवतीसुतः गदोपरि गदां नीत्वा





154

रुक्मिण्यहिंवाधरापरा २३ मंदारमालिन्युवाच राजन्नजानासिसदाविहारादहर्निशंकाममविशाललोलः अहंनजाना
मिकदापिदुःखंसुखंवालकालिन्भ्रमरास्तवेक्षा २४ द्वारावतीशाध्वरनागवल्लीन्चयंसमुष्णाप्यदिशोजयार्थं विजित्य
सर्वान्नृपन्चेद्विपान्ससमागतोसौयदुराजराजः २५ धुंकारशब्दंशृणुदुंदुभीनांचीत्कारफूत्कारयुतंद्विपानां कोदंडटं-
कारमयंपराणांकल्पांतसारस्वतनादकारं २६ खरंबलिंप्रेषयशंबरारयेप्रधावतीःपश्यनरेंद्रसुंदरीः च्युत प्रसूनाः
श्रमवारिवर्षिणीर्वनप्रवेशात्स्फुटकेशमंडनाः २७ पत्नीवाक्यंततःश्रुत्वाविशालाक्षोतिधर्षितः प्रद्युम्नसन्मुखेसो
पिबलिंनीत्वासमाययौ २८ तेनसंपूजितःसाक्षात्प्रद्युम्नोधन्विनांवरः स्नात्वापंचाशरस्तीर्थंमहाराष्ट्रंततोययौ
२९ महाराष्ट्राधिपोराजाविमलोनामवैष्णवः भक्त्यापरमयाकार्ष्णिंपूजयामाससर्वतः ३० तथाहिकर्णाटपतिः
सहस्रजित्स्वतःसमानीयबलिंमहात्मने संपूजयामासशुभार्थहेतवेश्रीशंबरारिंजगतःप्रभुंपरं ३१ प्रद्युम्नोभ
गवान्साक्षाद्यादवैःसहमैथिल करूषान्विषयान्प्रागाज्जेतुंयोगीवदेहजान् ३२ महारंगपुरेतत्रद्वन्द्वशर्मासहाम-
तिः भर्ताथश्रुतदेवायाःवसुदेवस्वसुर्नृप ३३ तस्यपुत्रोदंतवक्त्रःकृष्णशत्रुःप्रकीर्तितः शिशुपालइवक्रु-
द्धोयोद्धुंचक्रेमनःस्वयं ३४ मात्रापित्रावारितोपिदैत्योदैत्याननुव्रतः यादवान्घातयिष्यामिकोयमित्थंचकार
ह ३५ आदायसगदांगुर्वींलक्षभारविनिर्मितां एकाकीप्रययौयोद्धुंप्रद्युम्नबलसन्मुखे ३६ दंतवक्त्रंकृष्णव-
र्णंकज्जलाद्रिसमप्रभं ललज्जिह्वंघोररूपंतालवृक्षदशोच्छ्रितं ३७ किरीटकुंडलधरंहेमवर्मविभूषितं किं-
किणीजालसंयुक्तंचलच्चरणनूपुरं ३८ कंपयंतंभुवंवेगात्पातयंतंगिरीन्द्रुमान् घातयंतःस्वगदयाकृतांत
मिवदुर्जनान् ३९ तंदृष्ट्वायादवाःसर्वेभयंप्रापुर्मृधांगणे आगतेदंतवक्त्रेचमहान्कोलाहलोह्यभूत् ४०

भूवह २७ निरंकुशोमहामूर्खोविनिंदसिमहद्गुणं सन्नःप्रार्थयतेकिंचिद्यथासिंहःशिवारुतं २८ श्रीनारदउ०
एवंवचस्तदाश्रुत्वादंतवक्रोमदोत्कटः गदांगुर्वींसमादायप्राद्रवत्तद्रथोपरि २९ गदयापातयामाससहस्रंघोटकान्न
दन् घोटकादुद्रुवुःसर्वेहस्तारूपंभयंकरं ३० प्रद्युम्नोपिगदांनीत्वातंतताडदृढंहृदि तत्प्रहारेणदैत्येंद्रःकिंचिद्व्याकु
लमानसः ३१ तयोश्चगदयायुद्धंघोररूपंबभूवह गदाभ्यांरक्षतोतौद्वौमर्दयंतौपरस्परं ३२ नन्दंतौसगरेरा-
जन्गिरौकेसरिणौयथा ३३ दंतवक्रोभुजाभ्यांतंगृहीत्वाश्रीहरेःसुतं भूमौनिपातयामाससिंहःसिंहमिवौजसा -
३४ प्रद्युम्नोपिसमुत्थायगृहीत्वाभुजयोर्बलात् भ्रामयित्वाभुजाभ्यांतंपातयामासभूतले ३५ प्रद्युम्नस्यप्र-
हारेणसोपतद्रुधिरंवमन् चूर्णतास्थिःखिन्नगात्रोमूर्च्छितोविह्वलाकृतिः ३६ गिरींद्रइवभूपृष्ठेरेजेशक्रायुधाहतः
तत्प्रहारेणवसुधाचचालसजलाभवत् ३७ विचेलुर्दिग्गजास्ताराःसमुद्राश्चचकंपिरे पातशब्देनराजेंद्रत्रिलोकी
बधिरीकृता ३८ तदेवकारूषयतिर्महात्माश्रीवन्द्रशर्माश्रुतदेवयाच राज्ञामहारंगपुराद्यदूनांसमाययौस्कंदरसं
धिकारी ३९ दत्वाबलिंमैथिलशंबरारयेश्रुतंगृहीत्वाकृतसंधिरग्रतः तथायदूनांप्रवरैःप्रपूजितःपुनर्महारंगपु
रंसमाययौ ४० इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेदंतवक्रयुद्धेकरूषदेश-
विजयोनामैकादशोऽध्यायः ११ श्रीनारदउवाच अर्णवंदक्षिणंस्नात्वाप्रद्युम्नोयादवाधिपः उशीनरांस्त
तोजेतुमाजगामबलैःसह १ कोटिशःकोटिशोगावोयत्रदेशेचरंतिहि गोपालमंडलैर्युक्ताव्रजंत्योभव्यमूर्तयः
२ औशीनराक्षसीयानागौरवर्णमनोहराः हैयंगवीनमादायतेययुःकार्ष्णिसन्मुखे ३ तैःपूजितःशंबरारि-
र्ददौतेभ्योमहाधनं गजान्रथान्हयैरत्नवस्त्रभूषानिहर्षितः ४ चंपावतीनामपुरीमणिरत्नसमन्विता विरा-

१५३

155

गदयातंतत्ताडह ७ दंतवक्त्रोगदांत्यक्त्वासांबोजांबवतीसुतं गृहीत्वापातयामासभुजाभ्यांरणमंडले ८ सांबस्त
दासमुत्थायगृहीत्वापादयोश्चतं अयोथयद्भूमिपृष्ठेतदद्भुतमिवाभवत् ९ दंतवक्त्रःसमुत्थायसाट्टहासंतदाकरोत्
ननादतेनब्रह्मांडंसप्तलोकैर्बिलैःसह १० पताकाढ्येनदिव्येनसहस्रादित्यवर्चसा सहस्रहययुक्तेनप्रद्युम्नंधन्वि-
नांवरं ११ दंतवक्त्रोपितंवीक्ष्यप्राहेदंपरुषंवचः १२ दंतवक्त्रउवाच यूयंचयादवाःसर्वे वृष्ण्यंधकादयः अ
ल्पसत्वाजनास्तत्रचक्षाविद्रुतायुद्धभीरवः १३ ययातिशापसंप्राप्ताभ्रष्टराज्यागतनृपाः एकोहंबहवोयूयंयुष्माभिश्च
कृतंमृधं १४ अधर्मवर्तिभिस्तत्रच्छेर्धर्मशास्त्रविलोपितः पूर्वंपितातेश्रीकृष्णोनन्दस्यपशुरक्षकः १५ गोपा
लोच्छिष्टभोजीचसोद्येवयादवेश्वरः हैय्यंगवीनदध्याज्यदुग्धतक्रादिकंरसं १६ चोरयामासगोपीनांरसिकोरास
मंडले जरासंधभयात्सोपिसमुद्रंशरणंगतः १७ सोद्येवंयदुनाथोभूद्योभीरुःकालसन्मुखे तेनदत्तंविष्णुरा-
ज्यमुग्रसेनंसमेत्यसः १८ करिष्यत्यल्पसारार्थोराजसूयंक्रतूत्तमं दुरत्ययाकालगत्याजातंचित्रमहोजगत् १९
अध्यास्तेसिंहशार्दूलंशृगालोह्यतिदुर्बलः श्रीप्रद्युम्नउवाच पुरावैकुंडिनपुरेयदूनांबलमूर्जितं २० त्वयादृष्टं
नकिंतत्रपश्याद्येवविनिंदकः २१ युष्मान्संबंधिनज्ञात्वानेच्छेद्युद्धंक्रूरूषप बलात्त्वंयुद्धमाकार्षीधर्मशास्त्रंत्व-
याकृतं २२ नंदोद्रोणोवसुःसाक्षाज्जातोगोपकुलेपिसः गोपालायेचगोलोकेकृष्णारासससुद्भवाः २३ रा-
धारोमोद्भवागोप्यस्ताश्चसर्वाइहागताः काश्चित्पुण्यैःकृतैःपूर्वैःप्राप्ताःकृष्णंवरैःपरैः २४ परिपूर्णतमःसाक्षा
च्छ्रीकृष्णोभगवान्स्वयं असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्परः २५ यस्मिन्सर्वाणितेजांसिविलीयंतेस्वतेजसि
तंवदंतिपरेसाक्षात्परिपूर्णतमःस्वयं २६ उग्रसेनोथराजेंद्रोमरुत्तोनामयःपुरा श्रीकृष्णस्यवरेणासौयादवेंद्रोब

र्णो विदितो यो मुनीश्वरैः तं ब्रह्म परमात्मानं ज्ञात्वायं विचरेत्सुखी २३ अस्मिन्शयाने जागर्ति सर्वं पश्यति यः पुमान् नायं तं वेत्ति पश्यंतं न पश्यति कदाचन २४ नभोग्निपवनः कोष्टकाष्टप्रोद्भूतरेणुभिः न सज्जते गुणैर्ब्रह्म वर्णैश्च स्फटिको यथा २५ लक्षणाभिर्ध्वनिव्यंग्यैर्ज्ञायते न कदाचन कुतस्तल्लौकिकैर्वाच्यैस्तस्मैश्रीब्रह्मणे नमः २६ केचित्कर्म वदंत्येनं केचित्कालं तथापरे कर्तारं योगमपरे सांख्यं ब्रह्म वदंति के २७ केचित्तं परमात्मानं वासुदेवं वदंति के प्रत्यक्षेनानुमानेन निगमेनात्मसंविदा २८ विचार्य तद्ब्रह्म परं निःसंगो विचरेदिह यथांभसा प्रचलता तरवोपि चलाइव २९ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः तथा गुणानां भ्रमणे भ्रमता मनसायतः ३० भ्राम्यमाणः सदा राजन्करेणालातचक्रवत् करिष्यामि करोमीति ममेदं तव चाब्रुवन् त्वमहं च सुखी दुःखी सदाज्ञानविमोहितः ३१ सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः तैरिदं जगदाव्याप्तं ओतप्रोतपटं यथा ३२ ऊर्ध्वं गच्छंति सत्वस्था मध्ये तिष्ठंति राजसाः जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ३३ अंधकारे गुणात्कार्ष्णे सर्पबुद्धिर्भवेत्तिच आरान्मरीचिकां वारितथेदं मन्यते जगत् ३४ गतागतं सुखं विन्दुर्यथा मंडलवर्तिनां तथा नृणां च तद्दुःखं यथा नरकवासिनां ३५ घनावलिर्देहगुणा अहोरात्रमृतेर्यथा ३६ यथा सार्थं तथा दृश्यं न किंचित्सर्वदैव हि पक्षे जाते च नीडात्परे जाते ततोडुपात् ३७ ज्ञाने प्राप्ते तथालोकाद्दर्प्पणात्किं प्रयोजनं तथा मार्गं निधायाशु विचरेत्समदृङ्मुनिः ३८ यदेंदुरुदपात्रेषु यथाग्निः काष्ठसंचये तथैको भगवान्साक्षात्परमानेकवास्थितः ३९ घटे मठे यथाकाशो वर्ततेंतर्बहिर्महान् तथा परात्मा निर्लिप्तो देहिषु स्वकृतेषु च ४० यः कृष्णभक्तः शांतात्मा ज्ञाननिष्ठो विरागवान् तं न स्पृशंतीह गुणाः कानीव विशनीदलं ४१ ज्ञानी सदानंदमयो बालवद्विचरेत्तनुं न पश्यति धृतवासो मदिरामदमत्तवत् ४२ सूर्योदये यदा वस्तु गृहे-

जतेयत्रनृपैःसर्पैर्भोगावतीयथा ५ चंपावतीपतिर्वीरोनाम्नाहेमांगदोनृपः नीत्वाबलिंसमेत्याशुश्रीकार्ष्णिंप्र
णनामह ६ तस्मैतुष्टःशंबरारिर्मालांकिंजल्किनींददौ सहस्रदलशोभाढ्यंपद्मंदिव्यंददौपुनः ७ अथ-
कार्ष्णिर्महाबाहुःस्वसैन्यपरिवारितः विदर्भान्प्रययौधन्वीदुंदुभीन्नादयन्मुहुः ८ भीष्मकःकुंडनपतिरागतं
रुक्मिणीसुतं आनीयपूजयामाससससैन्यंबहुभिर्धनैः ९ मातामहंततोनत्वारुक्मिणीनंदनोबली कुंत
देशांश्चदरदान्प्रययौयादवेश्वरः १० मलयाचलपाटीरवायुभिःपरिसेवितः श्रीखंडकेतकीपुष्पगंधाक्तेम-
लयाचले ११ अगस्त्यमुनिशार्दूलंपीताक्षिंसददर्शह कृतांजलिपुटःकार्ष्णिर्नमस्कृत्यमहामुनिं १२ स्थि
तोभूदुटजेसाक्षादाशीर्भिरभिनंदितः श्रीप्रद्युम्नउवाच दृश्यंपदार्थंजगतःसत्यवत्वर्तुतेकथं मुक्तोब्रह्मां
शकोभूत्वाबध्यतेयंकथंगुणैः १३ एतत्प्रश्नंममब्रूहिनितरांमुनिसत्तम त्वंसर्वविद्दिव्यचक्षुःसर्वब्रह्मविदांवरः १४
अगस्त्यउवाच त्वंसाक्षात्कृष्णचंद्रस्यपरिपूर्णतमस्यच पुत्रोसिपृच्छसेमांवालीलामात्रमिदंवचः १५ लोकसं
ग्रहमेवार्थंकुर्वन्देवोहरिर्यथा तथानृणांचकल्याणंकुर्वन्विचरसिप्रभो १६ यथासत्यस्यसूर्यस्यबिंबोवारिषुसत्यव
त् दृश्यतेसत्यवद्दृश्यंप्रधानपरयोस्तथा १७ काचेसुखंगुणेसर्पंसैकतेजीवनंयथा तथायंसंदेहगुणैर्बध्यतेप्रेक्ष्य
तात्स्वयं १८ प्रद्युम्नउवाच कथंनबध्यतेदेहीयेनोपायेनतद्वद वैराग्येनदृढेनापिब्रूहिब्रह्मविदांवर १९ अग
स्त्यउवाच विवेकंयःसमाश्रित्यभजेद्ब्रह्मसनातनं मनोमयंजगन्मत्वासव्रजेत्परमंपदं २० जन्ममृत्यू शोकमो
होजराबालसुखादयः अहंमदोव्याधिभयंसुखंसोचक्षुधारतिः २१ आधिर्भयंतस्यराजन्नभवंतिकदाचन -
आत्मानिरीहोह्यतनुःसर्वतश्चानहंकृतिः शुद्धोगुणाश्रयःसाक्षात्परोनिष्कलआत्मदृक् २२ ज्ञानात्मकःसदापू-

क्षांसिप्रद्युम्नोथयदूत्तमः ११ नादयन्दुंदुभिंराजन्विजित्यजगृहेबली दक्षिणामथुरांद्दष्ट्वाचित्रकूट्यांरुरोदह १२
प्रेत्त्वकामत्रिकूटात्समैनाकशिखरोपरीं मैनाकात्सीहलंचैन्यभारतंचाययौपुनः १२ शनैःशनैर्वानरेंद्रोहिमाच-
लगिरिंगतः हिमाचलस्यशिखरात्प्राग्ज्योषपुरंययौ १४ मत्सारदेशाधिपतिंप्रद्युम्नोयादवेश्वरः महाक्षेत्रंराम
कृष्णंप्रययौसेतुबंधनं १५ शतयोजनविस्तीर्णंसमुद्रंमकरालयं वीक्ष्यकार्ष्णिर्महावीरस्तस्थौवेलांसमेत्यसः १६
सांबादीयन्समाहूयाक्रूराद्यैर्यादवान्स्वकान् सभायांमुद्धवंप्राहकार्ष्णियोगेश्वरेश्वरः १७ प्रद्युम्नउवाच विभीष-
णोद्वीपपतिर्महोज्वलोलंकापतिःकोणपद्वंदमुख्यः वदाथकिंभोजवरायमंत्रीनन्वेद्धलिंयच्छतिमेतदाशु १८ उद्ध-
वउवाच त्वंदेवदेवःपुरुषोत्तमोत्तमः श्रीकृष्णचंद्रःपरमंत्वमेवहि त्वंपृच्छसेलोकइवप्रभोमांमायापितेयोगवृ-
रैर्दुरत्यया १९ ब्रह्मादयोयस्यपरानुशासनंवहंतिमूर्ध्नासततंप्रधर्षिताः सएवसाक्षात्पुरुषोसिभूमन्दासानुदासो
स्मिवदामिकिंते २० नारदउवाच इत्युक्तःपश्यतांतेषांप्रद्युम्नोभगवान्हरिः पत्रंगृहीत्वाव्यलिखत्संदेशंमैथि-
लेश्वर २१ श्रीभोजराजायबलात्प्रयच्छबलिंनचेन्मेवचनंशृणुत्वं कोदंडमुक्तेविशिखैःप्रवसेतुबध्वागमिष्या-
मिससैन्यसंघः २२ लिखित्वेदंसमादायकोदंडंचंडविक्रमः बाणेपत्रंसमाधायकर्णांततंततानह २३ प्रस्फु-
टंस्फोटतेनैवटंकारोभूत्तडित्स्वनः ननादतेनब्रह्मांडंसप्तलोकैर्बिलैःसह २४ कोदंडमुक्तोविशिखोद्योतयन्मं-
डलंदिशां विभीषणसभामध्येसंपपाततडित्स्वनैः २५ तदैवराक्षसाःसर्वेप्रोत्थिताःशंकिताइव सकंचुका
निशस्त्राणिजगृहुर्वेगतःखलाः २६ पत्रंबाणात्समाकृष्यपठित्वाथविभीषणः विस्मितोभूत्सभामध्ये-
राक्षसेंद्रोमहाबलः २७ प्राप्तंतदेवसदसिशुक्राचार्य्यंविभीषणः पूजयामासपाद्याद्यैर्नत्वाप्राहकृतांजलिः

157

राजन्प्रदृश्यते दूरीकृत्यतथाज्ञानंसाक्षात्तत्तंततीहहत् ४३ यथेंद्रियंपृथग्द्वारैरर्थोबहुगुणाश्रयः नानेयतेतथाब्र
ह्मवाग्विभिःशास्त्रवर्त्मभिः ४४ परंपदंवदंत्यंतत्केचिद्वैवैष्णवंनृप केचिद्वैव्याप्यवैकुंठंशांतंकेपितमःपरं ४५
कैवल्यंतद्ब्रह्मकेचित्परमधामचाव्ययं अक्षरंचपरेकाष्ठांगोलोकंप्रकृतेःपरं ४६ केचिन्निकुंजंविशदंवदंतीहपुरा-
विदः ज्ञानवैराग्यभक्तिभ्यःप्राप्नोतीहनचान्यतः ४७ श्रीकृष्णचंद्रस्यहरेःपरस्यकैवल्यनाथस्यपरात्परस्य व्रजेत्सदं
श्रीपुरुषोत्तमस्ययत्प्राप्यभक्तोननिवर्ततेथ ४८ श्रीनारदउवाच इतिभागवतंज्ञानंश्रुत्वाकार्ष्णिर्महामुनिं अग-
स्त्यंपूजयामासभक्त्यानत्वाकृतांजलिः ४९ इतिश्रीमद्गर्गाचार्य्यसंहितायां विश्वजित्खण्डे नारदबहुलाश्वसं-
वादेउशीनरविदर्भकुंतदरददेशविजयेअगस्त्यकार्ष्णिज्ञानप्रस्तावोनाम द्वादशोऽध्यायः १२ नारदउवाच
कृतमालातांम्रपर्णीस्नात्वाश्रीयादवेश्वरः यदुभिःसैनकैःसार्द्धंराजन्राजपुरंययौ १ शाल्वोराजपुराधीशोश्रु-
त्वामन्मुखतोयदून् आगतान्सययौशीघ्रंद्विविदंवानराधिपं २ द्विविदोह्यतिसंक्रुद्धोवीरोमित्रसहायकृत् शं-
बरारिबलंप्रागाच्चालयन्वसुधातलं ३ विददारनखैर्दंतैःपताकाध्वजपट्टकान् काश्मीरकंबलैर्युक्तान्समुद्रान्स्वर्णभू
षितान् ४ रथानुत्सातयामासगजानारुह्यवेगतः अश्वान्विद्रावयामासभ्रूभंगैर्वानरःस्वनैः ५ इत्थंकोलाहले-
जातेप्रद्युम्नोधन्विनांवरः आजगामरथेनासौधनुष्टंकारयन्मुहुः ६ द्विविदस्तद्रथस्याराद्गच्छन्भमदोत्कटः छत्रं
ध्वजंस्वपुच्छेनकंपयन्सहयंरथं ७ प्रद्युम्नःस्वधनुःकोट्यास्तलंकंतंचकर्षह कपिस्तदातिकुपितोमुष्टिनातंतता
डह ८ प्रद्युम्नोधनुरादायसज्यंकृत्वाविधानतः आकृष्यकर्णपर्यंतंविशिखेनतताडतं ९ विशिखोभ्रामयित्वातं-
गगनेशतयोजनं प्रहारार्द्धेनराजेंद्रलंकायांसन्यपातयत् १० रक्षोभिःसहतद्युद्धंबभूवघटिकाद्वयं निपातयन्सर-

ख्यः समाययौस्कंदरशत्रुसेनां ५६ तदावतीर्याशुमहांबरात्स्फुरत्घनद्युतिर्दीर्घवपुर्जयेक्षणः प्रदक्षिणीकृत्यहरेःसु
तंपुनः कृतांजलिःसन्मुखआस्थितोभूत् ५७ विभीषणउवाच नमोभगवतेतुभ्यंवासुदेवायवेधसे प्रद्युम्नाया-
निरुद्धायनमःसंकर्षणायच ५८ नमोमत्स्यायकूर्मायवाराहायनमोनमः नमःश्रीरामचंद्रायभार्गवायनमोनमः
५९ वामनायनमस्तुभ्यंनृसिंहायनमोनमः नमोबुद्धायशुद्धायकल्कयेचार्तिहारिणे ६० नारदउवाच इत्यु
क्त्वाश्रीहरेःपुत्रंपूजयामाससमानदः उपचारैःषोडशभि भक्त्यापरमयाद्भुदाक् ५१ तस्मैतुष्टःशंबरारिर्ददौज्ञान-
विरक्तिमत् भक्तिंशांतिकरींसाक्षात्यासिद्धःप्रेमलक्षणां ५२ ब्रह्मदत्तमहादिव्यंपद्मरागशिरोमणिं पौलस्त्येन
पुरादत्तंरत्नमालास्फुरत्प्रभां ५३ चंद्रकांतिमणिंतस्मैचंद्रदत्तं ददौपुनः पीतांबरंपरंसाक्षात्प्रद्युम्नःपरमप्रभुः
५४ विभीषणोथप्रद्युम्नंनत्वादत्वाबलिंततः जगामलंकांसगणोराक्षसेंद्रोमहाबलः ५५ इतिश्रीमद्गर्गाचा-
र्य्यसंहितायां विश्वजित्खण्डे नारदबहुलाश्वसंवादे शाल्वमल्लारलंकाविजयोनामत्रयोदशोऽध्यायः १३ श्री-
नारदउवाच ऋषभाद्रिंततोद्दृष्ट्वाश्रीरंगाख्यंहरेःस्मृतः कामकोष्णींपुरींकांचींनदींप्राचींसरिद्वरां १ कावेरींच-
तदोत्तीर्यसह्याद्रिविषयंययौ यादवैःसहितःसाक्षात्प्रद्युम्नोभगवान्हरिः २ शिबिरेषुसमायांतंमुक्त केशंदिगंबरं
अवधूतप्रधावंतंपुष्टांगंरजसावृतं ३ बालास्तमनुधावंतस्तलशब्दैरितस्ततः कोलाहलंप्रकुर्वंतोहसंतोमैथिले-
श्वर ४ यंदृष्ट्वाचोद्धवंप्राहकार्ष्णिर्बुद्धिमतांवरः प्रद्युम्नउवाच कोयंपुष्टवपुर्धावज्जगन्मत्तपिशाचवत् ५ तिर-
स्कृतोपिहसतिजनैरानंदवान्महान् ६ उद्धवउवाच अयंपरमहंसाख्योवधूतोवाहरेःकला सदानंदमयःसाक्षाद्द-
त्तात्रेयोमहामुनिः ७ यस्य प्रसादात्परमांसिद्धिंप्रापुःपरेनृपाः सहस्रार्जुनमुख्यायेयदुकायादवादयः ८ नारद-



158

२८ बिभीषणउवाच भगवन्कस्यबाणोयंभोजराजस्तुकःक्षितौ किंबलंतस्यमेब्रूहित्वंसाक्षाद्दिव्यदर्शनः २९ श्री
शुकउवाच अत्रैवोदाहरंतीममितिहासंपुरातनं यस्यश्रवणमात्रेणराजन्यापंप्रशाम्यति ३० पुराहिब्रह्मणःपुत्राः
सनकाद्यादिवंगताः विष्णोर्लोकंययुर्दिव्यंचरंतोभुवनत्रयं ३१ दिगंबरान्शिशून्मत्वाजयोविजयएवतान् द्वारपा
लौरुरुधतुर्वेत्रेणांतःपुरस्थितौ ३२ अशपन्तौच्चतंक्रुद्धाः कृष्णादर्शनलालसाः भूयस्तमस्कौरौद्रदृष्टौशक्रौहिजन्म-
भिस्त्रिभिः ३३ एवंशप्तौस्वभवनात्पततौभूमिमंडले जज्ञातेदितेःपुत्रौदैत्यदानवपूजितौ ३४ हिरण्यकशि
पुर्ज्येष्ठोहिरण्याक्षोनुजस्तथा भगवान्यज्ञवाराहोभूत्वाक्ष्मासुन्द्धरज्जलात् ३५ जघानमुष्टिनादैत्यंहिरण्याक्षंम-
हाबलं हिरण्यकशिपुंसाक्षान्नृसिंहश्चंडविक्रमः ३६ ददारजठरेतंवैकायाधवसहायकृत् भ्रातरौतौपुनर्जातौकै
शिन्यांविश्रवःसुतौ ३७ रावणःकुंभकर्णश्चसर्वलोकैकतापिनौ सायकैराघवस्यापिपेततुर्युद्धमंडले ३८
राक्षसेंद्रौमहावेगौससैन्यौपश्यतस्तव तृतीयेस्मिन्भवेजातौक्षत्रियाणांकुलेकिल ३९ शिशुपालोदंतवक्त्रोवर्त्त-
मानौमहाबलौ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयं ४० असंख्यब्रह्मांडपतिर्गोलोकेशःपरात्परः जात-
स्तयोर्वधार्थाययदुवंशेहरिःस्वयं ४१ यादवेंद्रोभूरिलीलोद्वारकायांविराजते युधिष्ठिरमहायज्ञेयुद्धेशाल्वस्यमा
धवः ४२ शिशुपालंदंतवक्त्रंहनिष्यतिनसंशयः तस्यपुत्रःशंबरारिर्दिग्जयार्थंविनिर्गतः ४३ विजेष्यतिन्नृपान्स
र्वान्जंबूद्वीपस्थितान्नृपान् जितेषुसर्वदेशेषुद्वारिकायांयदूत्तमः उग्रसेनोभोजराजोराजसूयंकरिष्यति ४४ त
स्यापिकोदंडविनिर्गतोबलात्प्रचंडवेगोविशिखस्त्विहागतः तन्नामचिह्नोतितडित्स्वनोबभौ प्रद्योतयन्नाक्षसमंड-
लंदिशां ४५ नारदउवाच श्रीरामभक्तोथबिभीषणोसौविज्ञायकृष्णंनृपरामचंद्रं नीत्वाबलिंकोपपदंदसु-

स्त्वनेकधा षट्पंचाशतमश्चैवह्येते भोगाः प्रकीर्तिताः २७ एतेषां भार्गवश्रेष्ठो लानकार्षीद्योगमस्थितः सैन्येसंभोजिते तत्र हस्तस्पृष्टन्न नतेभवत् २८ वैभवं भार्गवस्यापि दृष्ट्वा सर्वे तिविस्मिताः प्रद्युम्नस्तं नमस्कृत्य यादवैः सहितस्तदा २९ सर्वेषां शृण्वतां राजन्पप्रच्छे द्दहरेः सुतः प्रद्युम्न उवाच भगवन्भवता दत्तं सर्वेभ्यो भोजनं परं ३० समृद्धय सिद्धयश्च त्वदंघ्रावस्थिता प्रभो सर्वेषां हरिभक्तानां प्रियो भक्तस्तु को हरेः ३१ एतन्मे ब्रूहि विप्रेंद्र त्वं परावरवित्तमः परशुराम उवाच त्वं प्रभो किं न जानासि लोकवत्पृच्छसे थ मां ३२ लोकसंग्रहमेवारात्कुर्वन्विचरसिक्षितौ ३२ नकिंचनो हरिपदाब्जपरागलुब्धः श्रीमत्कथाश्रवणकीर्तनमत्सरीयः तद्रूपसिंधुलहरीविनिमग्नचित्तः श्रीकृष्णचंद्रदयितः कथितः स भक्तः ३३ दांतो महानखिलजंगमवत्सलोयं शांतास्तितिक्षुरतिकारुणिकः सुहृत्सत् लोकं पुनाति निजपादरजोभिरारात्क्ष्रीकृष्णचंद्रदयितः कथितः परेशः ३४ यः पारमेष्ठ्यमखिलं न महेंद्रधिष्ण्यं नो सार्वभौममनिशं तरसाधिपत्यं नो योगसिद्धमभितो न पुनर्भवं वा वांछत्फलं परमपादरजः स भक्तः ३५ निष्किंचनाः स्वकृतकर्मफलैर्विरागा यत्तत्पदं हरिजना मुनयो महांतः भक्ता जुषंति हरिपादरजः प्रशक्ता अन्ये वदंति न सुखं किल नैरपेक्ष्यं ३६ भक्तप्रियो न विदितः पुरुषोत्तमस्य शंभुर्विधिर्न च रमा न च रोहिणेयः भक्तस्यानुव्रजति भक्तनिबद्धचित्तश्चूडामणिः सकललोकजनस्य कृष्णः ३७ गच्छन्निजं जनमनु प्रपुनाति लोकानावेदयन्हरिजनं स्वरुचिं महात्मा तस्मादतीव भजतां भगवान्मुकुंदो मुक्तिं ददाति न कदापि सुभक्तियोगम् ३८ नारद उवाच इतिश्रुत्वा यादवेंद्रो नत्वा श्रीभार्गवोत्तमं प्राच्यां दिशि ययौ राजन्गंगासागरसंगमम् ३९ इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवादे द्राविडदेशविजयोना



159

उवाच इतिश्रुत्वाशंबरारिर्नत्वासंपूज्यतंमुनिं संस्थाप्यचासनेदिव्येपप्रच्छेदंयदूत्तमः ८ प्रद्युम्नउवाच
भगवन्मेहृदिस्थंवैसंदेशंनाशयप्रभो जगतोब्रम्हमार्गाश्चहेतुंतंब्रूहितत्वतः ९ दत्तात्रेयउवाच दृश्यतेन
वस्तुर्यावत्तावदुल्काप्रयोजनं प्राप्तेवस्तौमहानंदेथोल्कायाःकिंप्रयोजनं १० तावद्दास्तेजगत्साधोयावत्तत्वं-
नविद्यते परास्मिन्ब्रम्हणिप्राप्तेजगतःकिंप्रयोजनं ११ आस्यबिंबोयथादर्शेपश्यतेनपरंवपुः प्रधानार्थेतथा
जीवोज्ञानेनासौपरात्परं १२ यथासूर्योदयेसर्वंवस्तुनेत्रेणदृश्यते तथाज्ञानोदयेब्रम्हतत्वंजीवेनसर्वतः १३
नारदउवाच इतिश्रुत्वाथतंनत्वाप्रद्युम्नोयादवेश्वरः वैकुंठाद्रिंद्राविडेषुययौसेनासमन्वितः १४ सत्यवाक्धर्मतत्व
ज्ञोराजर्षिद्राविडेश्वरः प्रद्युम्नंपूजयामासभक्त्यापरमयायुतः १५ श्रीशैलदर्शनंकृत्वागिरिशालयमद्भुतं स्कंदं-
वीक्ष्यततोराजन्ययौपंपासरोवरं १६ गोदावरींभीमरथींगतःश्रीद्वारकेश्वरः प्रदर्शयन्करेस्तीर्थंमहेंद्राद्रिंततोय-
यौ १७ महेंद्राद्रिंस्थितंरामंभार्गवंक्षत्रियांतकं नत्वाप्रदक्षिणीकृत्यतत्रतस्थौहरेःसुतः १८ रामस्तमाशिषंदत्वा
यादवानांबलायवै चतुरंगायराजेंद्रयोगेनार्हणमाहरत् १९ भक्ष्यसूपःप्रलेहश्चरुचिकादधिशाकजा शिखरिण्य-
बलेहश्चबलकाचक्षुरवेरिणी २० त्रिकोणशर्करायुक्तोपटकोमधुशीर्षकः फेणिकाचोपरिष्टश्चशतपत्रःसच्छिद्रकः
चक्राभश्चिन्हकाचेत्थंसुधाकुंडलिकास्मृताः घृतपूरोवायुपूरःस्तथाचंद्रकलास्मृताः २२ दधिस्थलश्चकर्पूरना-
डिस्थंखंडमंडलं गोधूमपूरिकाश्चैवस्फुफलाढ्यास्तथैवच २३ दधिरूपोमोदकश्चशाकसौधानएवच मंडकापाय
संयुक्तंदधिगोघृतमेवच २४ हैयंगवीनमंडूरीकूपिकापर्पटस्तथा शक्तिकालसिकाचैवस्फुटत्संधायएवहि २५
स्फुपलेश्चसितायुक्तैःफलानिविविधानिच यथामोहनभोगेश्चलवणंचतथैवच २६ कषायोमधुरस्तिक्तःकटुरम्ल-

समाययौ १९ कामरूपेश्वरः पुंड्रं ऐंद्रजालविशारद निर्गतः सेनयासार्द्धं योद्धुं प्रद्युम्नसन्मुखे २० आसीन्मानां
यदूनां च घोरं युद्धं बभूव ह बाणैः कुठारैः परिघैः शूलैः खड्गर्ष्टिशक्तिभिः २१ पुंड्रो विद्याश्च काराश्च पैशाचोरगराक्ष-
सीः ततो गुह्यकगंधर्वाः सर्वतो मैथिलेश्वर २२ प्रधावंतो रणे राजन्पिशाचाः पिशिताशनाः कोटिशः कोटिशोंगा
राक्षेपयंतो मुहुर्मुहुः २३ क्षणमात्रेण तत्सैन्यं वमंतो गरलं मुखात् फूत्कारमति कुर्वंतो दंदशूकाः समागताः २४
खरारूढा दंतवक्त्रा ललज्जिह्वा भयंकराः चर्वयंतो नरान्युद्धे धावंतो राक्षसास्ततः २५ यक्षाश्च सिंहवदनास्तुरंगव-
दनान्नृप छिंदि भिंदीति गर्जंतः शूलहस्ताद्भुतस्ततः २६ क्षणमात्रेण मेघानां समूहैश्छादितं नभः अंधकारोऽभवद्भू-
द्राजन्नूरजसा वातवेगतः २७ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकाः भयं प्रापुर्महायुद्धे न्यस्तशस्त्रा यदूत्तमाः २८
कृष्णादत्तं धनुः कार्ष्णिरादाय प्रतिकारवित् सत्वात्मिकां महाविद्यां बाणे संयुक्त मैथिल २९ बाणः पिशाचानु
रगान्सयक्षान्रक्षान्सगंधर्वघनांधकारान् बिभेद दिव्यैः प्रभवैर्यथाहि नीहारमेघान्किरणैर्विवस्वान् ३० बा-
णः स्वपुंड्रं सरथं सवाहनं तं भ्रामयित्वा घटिकाद्वयं रवे निपातयामास रणे सपत्नपद्मं पृथिव्यामिव चागतः किल ३१
सुह्मस्तदा तच्छरणं समेत्य प्रधर्षितः सद्य उपायनानि लक्षैर्हयानामयुतं गजानां युतानि दत्वा प्रणनाम कार्ष्णिं ३२
विपाशां स तदोत्तीर्य सैन्यैः शोणनदं नृप केकयानाययो धन्वी प्रद्युम्नो यदुनंदनः ३३ केकयस्याधिपो राजा धृत
केतुर्महाबलः वसुदेवस्वसुः साक्षाच्छ्रुतिकीर्तेः पतिर्महान् ३४ प्रद्युम्नं सर्हयामास धृतकेतुः स यादव भक्त्या पर
मया राजन्श्रीकृष्णस्य प्रभाववित् ३५ इति श्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवा
दे केकयविजयो नाम पंचदशोऽध्यायः १५ नारद उवाच दुंदुभीन्नादयंस्तस्मात्प्रद्युम्नो यदुनंदनः मै



160

मन्वतुर्दशोध्यायः १४ नारदउवाच दिग्जयस्यमिषेणासौभूभारंहारयन्मुहुः प्रद्युम्नोभगवान्साक्षाद्वंग-
देशंततोययौ १ अंगेशांतःपुराधीशोगृहीत्वायादवैर्वने सोपितस्मैबलिंप्रादात्प्रद्युम्नायमहात्मने २ उड्डीश
डामराधीशोमहद्बाहुर्महाबलः नददौसबलिंतस्मैप्रद्युम्नायमदोत्कटः ३ प्रद्युम्नःप्रेषितोवीरःसांबोजांबव-
तीसुतः एकाकीप्रययौधन्वीरथेनादित्यवर्चसा ३ छादयामासबाणौघैडामरंनगरंनृप गिरिंतुषारपटलै-
र्जीमूतइवसर्वतः ४ तदातुडामराधीशोधर्षितःसत्कृतांजलिः बलिंददौनमस्कृत्यप्रद्युम्नायमहात्मने ५
वंगदेशाधिपोवीरोवीरधन्वामदोत्कटः आययौसन्मुखेयोद्धुमक्षौहिण्यावृतोबली ७ चंद्रभानुर्हरेःपुत्रः
प्रद्युम्नस्यप्रपश्यतः बिभेदतद्बलंबाणैःकुवाक्यैर्मित्रताइव ८ करिणांबाणभिन्नानांशिरसोमौक्तिकानिच
प्रस्फुरंतोनिपेतुःकौरात्रौतारागणाइव ९ निपेतूरथिनोनेकागजाश्वाश्चपदातयः तद्बाणैश्छिन्नशिरसःकू-
ष्मांडशकलाइव १० क्षणमात्रेणतत्सैन्येक्षतजानांनदीह्यभूत् मनस्विनांहर्षकरीत्र स्तानांभयकारिणी ११
कुंडेकबंधैर्धावद्भिर्हारकेयूरकुंडलैः किरीटैःकंकणैःशस्त्रैर्महामारीवभूर्बभौ १२ कूष्मांडोन्मादवेतालाभैर
वाब्रह्मराक्षसाः शिरांसिजगृहुर्वेगान्रुद्रमालार्थहेतवे १३ इत्थंनिपातितेसैन्येवीरधन्वासमागतः चंद्रभानुंत
ताडाशुगदयावज्रकल्पया १४ तद्गदातिप्रहारेणानचचालहरेःसुतः चंद्रभानुर्गदांनीत्वातंतताडभुजांतरे-
१५ गदाप्रहारव्यथितोमूर्छितोधरणीतले पपातपादपइवप्रोद्गमन्रुधिरंमुखात् १६ लब्धसंज्ञोमुहूर्तेनवं-
गदेशाधिपोनृपः आययौशरणंसोपिप्रद्युम्नस्यमहात्मनः १७ यातेद्वंद्वेबलौराजन्नगरंवीरधन्विनि ब्रह्म-
पुत्रंसमुत्तीर्यप्रद्युम्नोमितविक्रमः १८ आशीमाधिपतिंबिंबंगृहीत्वायादवेश्वरः बलिमादाययदुभिःकामरूपं-

ठंतिवै १९ ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंसगारुडं नारदीयंभागवतंआग्नेयंस्कंदसंज्ञितं २० भविष्यंब्रम्हवैवर्तंमार्कंडेयंसवामनम् वाराहमत्स्यकूर्मंचब्रम्हांडाख्यंतथैवच २१ वीथ्यांवीथ्यांस्वशृण्वतिजनाःसर्वेगृहेगृहे वाल्मीककाव्यंकेचिद्वैश्रीरामचरितामृतं २२ स्मृतीःपठंतिकेचिद्वैकेचिद्वेदत्रयींद्विजाः केचित्कुर्वंतियज्ञंवैवैष्णवंमंगलायनं २३ राधाकृष्णेतिकृष्णेतियेवदंतिमुहुर्मुहुः केचिन्नृत्यंतिगायतिहरिकीर्तनतत्पराः २४ मृदंगतालवादित्रैःकांस्यवीणामनोहरैः मंदिरेमंदिरेविष्णोःकीर्तनंश्रूयतेजनैः २५ नवलक्षणसंयुक्तांभक्तिंयांप्रेमलक्षणां कुर्वंतिमैथिलाराजन्मिथिलायांगृहेगृहे २६ एवंतुनगरींदृष्ट्वाप्रद्युम्नोभगवान्हरिः राजद्वारंसमेत्याशुमैथिलेशंददर्शह २७ मैथिलेशसभायांतुवेदव्यासःशुकोमुनिः याज्ञवल्क्योवसिष्ठश्चगौतमोहबृहस्पतिः २८ अन्येचमुनयस्तत्रवेदमूर्तिधराइव दृश्यंतेधर्मवक्तारोहरिनिष्ठाइतस्ततः २९ मैथिलेंद्रधृतिस्तत्रभक्तिभावनताननः बलस्यपादुकापूजांकुरुतेविधिवन्नृप ३० जपन्मुक्तिकरंनामश्रीकृष्णबलदेवयोः दृष्ट्वोत्थायनमश्चक्रेसशिष्यंब्रम्हचारिणं ३१ तंपूजयित्वाविधिवत्पाद्यार्घैर्मैथिलेश्वरः कृतांजलिपुटोराजातदग्रेचास्थितोभवत् ३२ जनकउवाच अद्यमेसफलंजन्ममंदिरंविशदीकृतं देवर्षिपितरःसर्वेसंतुष्टाआगतेत्वयि ३३ निर्विकल्पाःसमदृशस्त्वादृशाःसाधवःक्षितौ निःश्रेयसायभगवन्दीनानांविचरंतिहि ३४ ब्रम्हचार्युवाच धन्योसिराजशार्दूलधन्यातेमिथिलापुरी धन्याःप्रजाश्चतेसर्वाविष्णुभक्तिसमन्विताः ३५ जनकउवाच ममेयंनगरीनास्तिनप्रजानगृहंधनं कलत्रपुत्रपौत्रादिसर्वंकृष्णस्यचैवहि ३६ परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्स्वयं असंख्यब्रम्हांडपतिर्गोलोकेधाम्निराजते ३७ वासुदेवःसंकर्षणःप्रद्युम्नोपुरुषः-

161

थिलानाथयौराज स्तवदेशान्सुखावृतान् १ सुवर्णसौधैरत्युच्चैः सघंटैराजतांपुरीं मिथिलांवीक्ष्यतामाराद्दुद्धवंप्राहमा-
धवः २ प्रद्युम्नउवाच कस्यैषानगरीमंत्रिन्दृश्यतेसांप्रतंमया राजतेसुधिसौधैश्चपुरीभोगावतीयथा ३ उद्ध-
वउवाच जनकस्यपुरीह्येषामिथिलानाममानद मिथिलेंद्रोधृतिस्तस्यांमहाभागवतःकविः ४ सर्वधर्मभृतांश्रेष्ठः-
श्रीकृष्णेष्टोहरिप्रियः बहुलाश्वस्तस्यसुतः अबाल्याद्भक्तिकृन्नृपः ५ तस्मैस्वंदर्शनंदातुंभगवानागमिष्यति बहु
लाश्वराजपुत्रंश्रुतदेवंद्विजंतथा ६ स्मरत्यलंद्वारिकायांश्रीकृष्णोभगवान्हरिः जेतुंनशक्योदेवेंद्रैर्मनुजैश्चकुतः
प्रभो ७ धृतिःपरमयाभक्त्याश्रीकृष्णवशकारकः नारदउवाच तच्छ्रुत्वाभगवान्कार्ष्णिरुद्धवेनसमन्वि-
तः स्वशिष्यसुद्धवंकृत्वाधृतिंद्रष्टुंसमाययौ ८ भक्तिरेवपरीक्षार्थंकर्तुंतस्यैन्नृपस्यच ददर्शमिथिलांकार्ष्णिरु-
द्धवेनसमन्वितः ९ चर्मशस्त्रधृतावीरामालातिलकशोभिताः जपंतःकृष्णनामानिसर्वेवैयत्रमालया १० लि-
खितानिचनामानिद्वारिद्वारिहरेर्नृणां तथाश्रीकृष्णचित्राणिलिखितानिशुभानिच ११ कुड्येकुड्येगृहाणांच-
गदापद्मानिमानद दशावतारचित्राणिशंखचक्राणियत्रवै १२ तुलसीमंदरापीत्थंप्रांगणेचगृहेगृहे एवंपश्य-
ससौधानिमिथिलायांजनान्बहून् १३ मालातिलकसंयुक्तान्सर्वान्भक्तान्ददर्शह तिलकैर्द्वादशाख्यैश्चसुरक्तैः
कुंकुमजैर्वृतान् १४ गोपीचंदनमुद्राभिश्चर्चितान्शांतिविग्रहान् ऊर्ध्वपुंड्रधरान्विप्रान्हरिमंदिरचिह्नितान्-
१५ गदांमुद्रांललाटेचऊर्ध्वंबाहहरिनामतः चक्रंशंखंचकमलंकूर्मंमत्स्यंभुजद्वयं १६ दधतश्चधनुर्बाणंमू-
र्ध्निश्रीनंदकंहृदि मुसलंचहलंराजन्नाथंकार्ष्णिर्ददर्शह १७ कस्यांवीथ्यांभागवतंकेचिच्छृण्वंतिमानवाः इ-
तिहासंभारतंचहरिवंशंतथापरे १८ सनत्कुमारवासिष्ठयाज्ञवल्क्यःपराशरीं गर्गपौलस्त्यधर्मादिसंहिताःकेप-

मसारूप्यं भूयात्ते मैथिलेश्वर बलमायुर्यशःकीर्तिरिहलोके भवत्सलं ५४ नारदउवाच तवपित्राचधृतिना पूजितःपश्यतांसतां प्रययोशिबिरान्राजन्प्रद्युम्नोभक्तवत्सलः ५५ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्वसंवादे जनकोपाख्यानंनामषोडशोऽध्यायः १६ श्रीनारदउवाच अथातोमागधांजेतुंप्रद्युम्नोमीनकेतनः गिरिव्रजंजगामाशु स्वसैन्यैःपरिवारितः १ श्रुत्वागतंहरेःपुत्रंदिग्जयार्थंविनिर्गतः जरासंधोमागधेंद्रोमहत्कोपंचकारह २ जरासंधउवाच तुच्छायेयादवाःसर्वेयुधिविक्लवचेतसः तेद्यवैजगतींजेतुंनिर्गतागतबुद्धयः ३ मथुरांस्वपुरींत्यक्त्वामद्भयान्माधवोपिहि समुद्रंशरणंप्रागात्पिताचास्यदुरात्मनः ४ प्रवर्षणेरामकृष्णौमयाभस्मीकृतौबलात् छलादुद्भवतुस्तौहिद्वारिकायांसमाश्रितौ ५ बध्वातौचानयिष्यामिसोग्रसेनौकुशस्थलीं अयादवींकरिष्यामिपृथ्वींसागरमेखलां ६ नारदउवाच इत्युक्त्वानिर्गतोराजागिरिव्रजपुराद्बहिः अक्षौहिणीभिर्विंशत्यातिसृभिःसंयुतोबली ७ गोमूत्रचयसिंदूरकस्तूरीपत्रभृन्मुखे स्रवन्मदेश्वतुर्दंतेमेघे दंतइवप्रभुः ८ शुंडादंडस्यफूत्कारैःक्षेपयद्भिस्तरून्बहून् बभौगजेमागधेंद्रोमेघैरिंद्रइवप्रभुः ९ रथैश्चदेवधिष्ण्याभैःसध्वजैरश्वनेतृभिः चामरैर्दोलितैराजन्लोलचक्रध्वनिद्युतिः १० तुरंगमैर्वायुवेगैश्चित्रवर्णैर्मदोत्कटैः सौवर्णपट्टहाराद्यैःशिखारश्मूर्ध्वचामरैः ११ सकंचुकैर्वीरजनैःखड्गचर्मधनुर्धरैः विद्याधरसमैःप्रागान्मागधेंद्रोमहाबलः १२ धुंकारैर्दुंदुभीनांचदिशोनेदुर्धनुःस्वनैः चचालवसुधासैन्यैरजोभिश्छादितंनभः १३ जरासंधस्यतत्सैन्यंप्रलयाब्धिमिवोल्बणं विस्मितायादवाःसर्वेबभूवुर्वीक्ष्यमैथिल १४ प्रद्युम्नोभगवान्वीक्ष्यमागधेंद्रबलार्णवं शंखंदध्मौदक्षिणाख्यंसाभे-



162

स्वयं अनिरुद्धस्तथान्यैकश्चतुर्व्यूहोभवत्क्षितौ ३८ कायेनमनसावाचाबुद्ध्यावान्यैंद्रियैः कृतं तस्मैसमर्पितं
शैल्यंमयाब्रह्मन्महामुने ३९ श्रीब्रह्मचार्युवाच हेवैदेहमहाभागविष्णुभक्तिमतांवर त्वद्भक्त्यातोषितः कृ
ष्णस्त्वंवैकत्वंप्रदास्यति ४० जनकउवाच दासोहं कृष्णभक्तानांत्वादृशानांमहात्मनां मुक्तिंनेच्छामिहेब्रह्म-
न्नेकतांहेतुवर्जितः ४१ ब्रह्मचार्युवाच करोष्यहेतुकींभक्तिंराजंस्त्वंहेतुवर्जितः निर्गुणैर्भक्तिभावैश्चप्रेमलक्षण
संयुतः ४२ प्रद्युम्नोभगवान्साक्षाद्दिग्जयार्थंविनिर्गतः नायातस्तवगेहेषुसंदेहोमेमहानभूत् ४३ जनकउवाच
प्रद्युम्नोभगवान्साक्षादंतर्यामीहरिःस्वयं सर्वगःसर्वविच्छश्वदन्नास्तिन्यर्किंप्रभो ४४ ब्रह्मचार्युवाच ज्ञानदृ-
ष्ट्यापिचेत्कार्ष्णिमन्यसेत्वंनिरंतरं तर्हिदर्शयतंदेवंप्रह्लादइवदिव्यदृक् ४५ नारदउवाच एतच्छ्रुत्वातदाराजाम-
हाभागवतोधृतिः अश्रुपूर्णमुखोभूत्वाप्राहगद्गदयागिरा ४६ जनकउवाच यदिमेश्रीहरेर्भक्तिरनिमित्ता
कृताभुवि तर्हिकार्ष्णिर्हरेःपुत्रःप्रादुर्भूयान्ममाग्रतः ४७ यदिश्रीकृष्णभक्तानांदासोहंयदितत्कृपा सर्वत्रयदि
तद्भावस्तर्हिभूयान्मनोरथः ४८ नारदउवाच प्रादुर्बभूवाशुतंदेवकार्ष्णिर्विसृज्यसद्यःकिलवर्णरूपं पश्यत्सु
सर्वेषुजनेषुशिष्यःसगद्गदोभूद्धरिभक्तनिष्टः ४९ घनप्रभंपद्मदलायतेक्षणं प्रलंबबाहुंजगतांमनोहरं पीतांबरं-
नीलगुडालकालिभिःस्वलंकृतंश्रीमुखपद्ममंडलं ५० शीतांशुबालार्ककिरीटकुंडलंकाञ्च्यंगद स्फूर्जितदिव्यवि-
ग्रहं विलोक्यतंकृष्णसुतंकृतांजलि र्नैनामसाष्टांगमलंधृतिर्नृपः ५१ जनकउवाच अद्यातिधन्यंममभू-
रिभाग्यंदत्तंत्वयामेनिजदर्शनंहि जातोद्यकायाधवतुल्यआरादहंकृतार्थोस्मिकुलेनभूमन् ५२ श्रीप्रद्यु-
म्नउवाच धन्यस्त्वंनृपशार्दूलभक्तस्त्वंमत्प्रभाववित् भक्तिभावपरिक्षार्थंप्राप्तोहंतवसांप्रतं ५३ अद्यैवम-

धनुःसांबस्यचिच्छेद्बाणैर्दशभिरग्रतः ३५ चतुर्भिश्चतुरोवाहान्द्वाभ्यांकेतुंरथंशरैः एकेनसारथिंजघ्नेमागधेंद्रो
जरासुतः ३६ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः पुनरन्यंसमास्थायरथंसांबोमहाबलः ३७ गृहीत्वा
चापमत्युग्रंसज्यंकृत्वाविधानतः तद्रथंचूर्णयामाससांबबाणशतैरपि ३८ रथंत्यक्त्वाजरासंधोगजमारुह्यवे
गतः बभौगजेमागधेंद्रोइंद्रऐरावतेयथा ३९ चित्रपत्रविचित्रांगोकालांतकयमोपमं सांबायनोदयामासम
त्तेभंक्रुद्धमानसः ४० गृहीत्वासरथंसांबंशुंडादंडेननागराट् कुर्वंचीत्कारंविकलंचिक्षेपनवयोजनं ४१ त
दाकोलाहलेजातेसांबसेनासुमैथिल प्रद्युम्नपार्श्वाच्चगदःप्राप्तोभूद्गतोबलं ४२ विनाशयन्नंधकारंयथार्क
उदयाचलात् जरासंधस्यापिगजंमुष्टिनावसुदेवजः ४३ जघानशक्रोवज्रेणयथाप्रोच्चंदरीभृतं गजोमुष्टिप्र
हारेणविह्वलोधरणींगतः ४४ जगामपंचतांराजंस्तदद्भुतमिवाभवत् जरासंधःसमुत्थायगृहीत्वामागद गदः
४५ चिक्षेपरोषतोराजन्नकाशेशतयोजन जरासंधंसमुत्थायगदामादायवेगतः ४६ गदंतताडसहसाज-
गर्जघनवद्बली तत्प्रहारेणसगदोनचचालरणांगणात् ४७ त्वरंगदांसमादायलक्षभारविनिर्मितां अताडय
ज्जरासंधंसिंहनादमथाकरोत् ४८ तत्प्रहारेणव्यथितोबृहद्रथसुतोबली जरासंधःसमुत्थायगृहीत्वासग-
दं गदं ४९ चिक्षेपरोषतोराजन्नाकाशेशतयोजनं गदोपिमागधंनीत्वाभ्रामयित्वामहाबलः ५० चिक्षेपग-
गनेतंवैयोजनानांसहस्रकं आकाशात्पतितोराजामागधोविंध्यपर्वते ५१ उत्थायसुयुधेतेनगदेनापिमहाब-
लः तदैवसांबःसंप्राप्तोगृहीत्वामागधेश्वरं ५२ भूपृष्ठेपोथयामाससिंहःसिंहमिवौजसा एकेनमुष्टिनासां
बंद्वितीयेनगदंतथा ५३ तताडमागधोराजाजगर्जाशुरणांगणे मुष्टिप्रहारव्यथितोगदःसांबश्चमूर्छितो ५४





163

ष्ठेत्यभयंददत् १५ ततःसांबोमहाबाहुःप्रद्युम्नस्यप्रपश्यतः अक्षौहिणीनांदशभिर्युयुधेमागधेनसः १६ गजा
गजैर्युयुधिरेरथिभीरथिनोमृधे हयाहयैःपत्तयश्चपत्तिभिर्मैथिलेश्वर १७ बभूवतुमुलंयुद्धंअद्भुतंरोमहर्षणं मा
गधानांयदूनांचस्फुरणांनिर्जरैर्यथा १८ अश्वारूढाःकपिवीराभल्लहस्ताइतस्ततः मर्दयंतोगजारूढाःकरिकुं
भगतार्चयः १९ केचिच्छक्तिस्त्वाडिहूर्णांगृहीत्वाचिक्षिपुर्बलात् ताःशक्तयस्त्वरीन्भित्वादंशितान्धरणींगता २०
केचिद्वीरानदंतःकोरथांगानिचचिक्षिपुः केचिदुर्वीरपटलंनीहाररवयोयथा २१ भिंडिपालैर्मुद्गरैश्चकुठारैरसिप-
ट्टिशैः अच्छुरिकार्ष्टिभिस्तीक्ष्णैर्निस्त्रिंशैर्युयुधुश्चके २२ तोमरैश्चगदाभिश्चबाणैश्छिन्नानिभूतले निपेतुर्वीरक
रिणामर्चिनांचशिरांसिच २३ कबंधास्तत्रचोत्पेतुर्पातयंतोहयान्नरान् खड्गहस्ताःप्रधावंतोसंग्रामेपुभयंकराः
२४ वीरोपरिगतावीरानिपेतुश्छिन्नबाहवः हयोपरिहयाःकेचिद्बाणैःसञ्छिन्नकंधराः २५ विद्याधर्यश्चगं
धर्व्योवव्रिरेह्यंबरेगतान् वीरान्पतीन्समिच्छसस्तासांचाभूत्कलिर्महान् २६ क्षत्रधर्मपराःकेचिद्युद्धदत्तासवान्नृ
प नचलंतःपदंपृष्ठेसदासंग्रामशालिनः २७ जग्मुःपरपदंत्वेवभित्वामार्तंडमंडलं आनर्तुःशिशुमारेवकुंडले-
चननादाइव २८ एवंसांबमहावीरैर्मर्दितंमागधंबलं दुद्रावपश्यतांतेषांकृष्णाभस्यायथाशभं २९ केचिद्धृनृवण
वर्माणिछिन्नचापास्तथापरे पलायमानाधावंतस्त्यक्तखड्गर्ष्टिपाणयः ३० पलायमानंस्वबलंवीक्ष्यतन्मागधेश्वरः
धनुष्टंकारयंप्राप्तामाभैष्ठेत्यभयंददौ ३१ स्वबलंनोदयामासजरासंधोधनुर्ज्यया महामात्यंपुनर्मत्यमंकुशेनगजो
यथा ३२ सांबस्तदैवसंप्राप्तोदशभिश्चापनिर्गतैः बाणैर्विव्याधसमरेमागधेंद्रंमहाबलं ३३ धनुर्ज्यामधिक-
लोलभीमसंघर्षनादिनीं चिच्छेददशभिर्बाणैःसांबोजांबवतीसुतः ३४ धनुरन्यंसमादायजरासंधोमहाबलः-

दान्भुक्तवालस्यबलंमहत् ४ प्रद्युम्नसैनिकैः सार्द्धं कोशलांप्रगतो बली अयोध्यानिकटेराजन्नंदिग्रामस्थितोभवत्
५ कौशलेंद्रोनग्नजिच्चतुरंगैश्चगजैरथैः महाधनैः शंबरारिमर्हयामासतत्ववित् ६ उत्तरेशोदीर्घतमोनयपाला
धिपोगजः विशालेशार्बर्हिणश्चएतेवैतद्बलिंददुः ७ नैमिषेशोहरेर्भक्तः श्रीकृष्णस्यप्रभाववित् कृतांजलिपु-
टोभूत्वाददौतस्मैबलिंनृपः ८ प्रयागंगतवान्कार्ष्णिस्त्रिवेणींपापनाशिनीं स्नात्वाददौमहादानंतीर्थराजप्रभाव
वित् ९ गजार्विंशतिसाहस्रं अश्वानांदशलक्षकं रथानांचचतुर्लक्षंगवांतत्रदशार्बुदं १० हेममालासमा-
युक्तहेमांबरसमन्वितं दशभारंसुवर्णानां मुक्तानांलक्षमेवहि ११ द्विलक्षंनवरत्नानांवस्त्राणांदशलक्षकं -
काश्मीरकंबलानांचद्विलक्षंनवकंबलं १२ ब्राह्मणेभ्योददौकार्ष्णिस्तीर्थराजेहरिप्रिये कारुषाधिपतिस्तत्र
पौंड्रकोनाममैथिल १३ कृष्णशत्रुःसोपिकार्ष्णिंपूजयामासशंकितः प्रद्युम्नंचागतंवीक्ष्यपांचालेकान्य
कुब्जके १४ भयंप्रापुर्नृपाःसर्वेदुर्गेदुर्गेकृतार्गलाः विचेलुर्यादवाःसर्वेभयार्तादुर्गमाश्रिताः १५ बिं-
दुदेशाधिपोराजादीर्घबाहुर्महाबलः शंबरारेपरेसंधिंकर्तुंसैन्येसमाययौ १६ दीर्घबाहुरुवाच यूयंस-
र्वेयादवेंद्रात्रागताजयिनोदिशां मनोरथमेकुरुतांभवेयंतुष्टमानसः १७ सजलस्यापिकाचस्यपात्रस्यसर
वेधतः नक्षरेद्बिंदुरेकोपिबाणस्तद्धितिष्ठति १८ नपात्रंशकलीभूतंतन्मध्येहस्तलाघवं येकुर्वंतिप्रति-
ज्ञामेतेभ्योदास्यामिकन्यकां १९ यूयंसर्वेयादवेंद्राधनुर्वेदविशारदाः मयापिनारदमुखाच्छ्रुताःपूर्वंमहाब-
लाः २० नारदउवाच सर्वेषांविस्मितानांचप्रद्युम्नोधन्विनांवरः तथेत्युवाचसदसि बिंदुदेशाधिपंनृप -
२१ दीर्घवंशोप्युविस्थाप्यगुणंबध्वातदंतरं गुणेबध्वाकाचकुंभंसजलंपश्यतांसतां २२ धनुर्गृहीत्वातद्वी

हाहाकारो महान्त्वासीत्तदेवाशरणांगयो रथेनातिपताकेन प्रद्युम्नो यादवेश्वरः ५५ अक्षौहिणीयुतः प्राप्तो मा भै
इत्यभयं ददौ जरासंधो गदां नीत्वा लक्षभारविनिर्मितां ५६ विवेश यदुसेनायामरण्येऽग्निरिव प्रभुः रथान्नागा-
न्सवीरांश्च तुरंगान्सैंधवान्बहून् ५७ पातयामास राजेंद्र पद्मानीव महागजः जरासंधस्य या सेना सापि सर्वा स-
मागता ५८ जघान निशितैर्बाणैर्यदूनां सर्वतो बलं प्रद्युम्नो युयुधे युद्धे निर्भयो यादवेश्वरः ५९ निपात्य
न्नरीन्बाणैर्धनुष्टंकारयन्मुहुः तदैव यदुपुर्यास्तु बलदेवः समागतः ६० प्रादुर्बभूव तत्रापि सर्वेषां पश्यतां
सतां समाकृष्य हलाग्रेण मागधेंद्रं महाबलं ६१ मुसलेनाहतः क्रुद्धो बलदेवो महाबलः शतयोजनपर्यंतं र-
थाश्वगजपत्तयः ६२ पतिता भिन्नशिरसः सर्वे वै निधनं गताः देवदुंदुभयो नेदुर्नरदुंदुभयस्तदा ६३ बलदे
वोपरि सुराः पुष्पवर्षं प्रचक्रिरे तदा जयजयारावो यदूनां स्वबले महत् ६४ प्रद्युम्नाद्यास्ततो नेमुः कामपा-
लं गतव्यथाः इत्थं जित्वा मागधेंद्रं बलदेवो महाबलः ६५ प्रययौ द्वारिकां राजन्भगवान्भक्तवत्सलः ज
रासंधस्ततो धीमान्सहदेव उपायनं ६६ नीत्वा पुरः शंबरारेर्गिरिदुर्गाद्विनिर्गतः अश्वायुतं रथानां च हि
लक्षं हस्तिनां तथा ६७ ददौ षष्टिसहस्राणि नत्वा कार्ष्णिं प्रभाववित् ६८ इति श्रीमद्गर्गाचार्यसंहिता-
यां विश्वजित्खंडे नारदबहुलाश्वसंवादे मागधदेशगमनो नाम सप्तदशोऽध्यायः १७ नारद उवाच
अथ कार्ष्णिर्गयामेत्य फल्गुं स्नात्वा ससैनिकः अन्यान्देशांस्ततो जेतुं प्रस्थानमकरोत्पुनः १ श्रुत्वा जितं
जरासंधं तदा तत्कान्नृपाः परे उपायनं ददुस्ते वै भयार्ताः शरणं गताः २ गौतमीं सरयूं पुण्यां स्नात्वा ततो गमत्
ततो भागीरथीतीरे काशीमाभिजगाम ह ३ पार्ष्णिग्राहः काशिराजो गृहीतो मृगयां गतः सोपि तस्मै बलिं प्रा

माकुलाः ववृषुःपुष्पवर्षाणि चक्रुःश्लाघांदिविस्थिताः ४२ गजान् षष्टिसहस्राणि हयानामर्बुदंतथा दशलक्षंर-
थानांचदासीनांलक्षमेवच ४३ शिबिकानांचतुर्लक्षं पारिबर्हं ददौनृपः तस्माहिणोहारवतींबभौकार्ष्णिर्यदूत्तमः
४४ दीर्घबाहुमनुप्राप्य निषधान्प्रययौततः निषधाधिपतिर्वीरसेनजिन्नाममैथिल ४५ उपायनंददौसोपिप्र-
द्युम्नायमहात्मने तथाहिभद्राधिपतिः श्रीकृष्णोहिहरिप्रियः ४६ पूजयामाससबलबृहत्सेनोहरेःसुतं माथुरां
शूरसेनांश्चमधून्प्रापःससैनिकः ४७ स्वगतेः पूजितःकार्ष्णिर्मथुरायांययौपुनः ततःप्रदक्षिणीकृत्यमथुरांस
वनांकिल ४८ गोपान्गोपीर्यशोदांचनंदराजंव्रजेश्वरं वृषभानूपनंदांश्चनत्वाकार्ष्णिर्बभौनृप ४९ बलिंच-
नंदराजायदत्वादत्वापुनःपुनः तैःपूजितःकतिदिनैःस्थितोभून्नंदगोकुले ५० इतिश्रीमद्गर्गाचार्यसंहितायां
विश्वजित्खंडे नारदबहुलाश्वसंवादे मधूरशूरसेनदेशविजयोनामाष्टादशोऽध्यायः १८ नारदउवाच अथ
कार्ष्णिर्महाबाहुर्ध्वजनीभिःसमन्वितः नादयन्दुंदुभीन्दीर्घान्दीर्घवेगकुरूनूययौ १ विंशतिर्योजनानांचमर्यादी
कृततद्धलौ तस्यौतच्छिबिराणांचविस्तारोदशयोजनं २ पंचयोजनमाश्रित्यतद्धलेराजपद्धतिः धनाढ्यानांच
वैश्यानांआपणानिसहस्रशः ३ तथारत्नपरीक्षाणांवस्त्रव्यापारकारिणां काचकारावायकाश्चरंगकाराःकुलाल
काः ४ कंदकारास्तूलकाराःपट्टकारास्तथैवच कंटकाराश्चित्रकाराःपत्रकाराश्चनापिकाः ५ पट्टकाराहेतिका-
राःपर्णकाराश्चशिल्पिनः लाक्षाकारामालिनश्चरजकास्तैलिनस्तथा ६ तांबूलशोधिनस्तत्रचित्रपाषाणकर्म-
काः अन्नभर्जकरास्तत्रकाचभेदिनएवहि ७ मुक्तादीनांचरत्नानांसूक्ष्माणांरत्नवेधिनः एतेकारुजनाःसर्वेदृ-
श्यंतेराजपद्धतौ ८ क्वचिन्भानुमतिर्लीलाऐंद्रजालविधायकाः क्वचिन्नराश्चनृत्यंतेयुद्धंभालूकयोः क्वचित् ९ -



165

क्ष्यबाणं कार्ष्णिःसमादधे कांचपात्रं सरो भित्वा तस्थौ मध्ये न्दु निःसृतः २३ एकतो मुखपुंखाभ्यां रविरश्मिरिवांबुदे कांचपात्रं बभौ बाणस्तदद्भुतमिवाभवत् २४ न पात्रं शकलीभूतं त्रिकुशस्य फलं यथा न चालनं कंपनं च बिंदुस्रावोपिनाभवत् २५ प्रद्युम्नो भगवान्बाणं द्वितीयं संदधे पुनः सोपि पूर्वं समुत्सृज्य तत्र तस्थौ विदेहराट् २६ सांबोपि धनुरादाय बाणान्पंच समादधे कांचपात्रे च ते भित्वा तस्थुस्तत्रान्दु निःसृताः २७ युयुधानो धनुर्नीत्वा बाणमेकं समाक्षिपत् सर्वेषां पश्यतां तेषां पात्रं चूर्णं बभूव ह २८ उच्चकैर्जहसुः सर्वे यादवाः परसैनिकाः त्वं महान्बाणधारी ह कार्तवीर्यार्जुनोथवा २९ अर्जुनो भरतो रामस्त्रिपुरघ्नो हि वा भवान् द्रोणो भीष्मोथवा कर्णो जामदग्न्य इवाभवत् ३० अन्ये पात्रं समाधाय निरुद्धो धन्विनां वरः अधो गत्वाथ तं दृष्ट्वा बाणं चिक्षेप लाघवात् ३१ सोपि पात्रं तलं भित्वा तस्थौ तत्रापि निःसृतः तस्मात्रान्दुस्तु पंचोर्द्धं बध्वा पाषाणमंबरे ३२ दीप्तिमान्धनुरादाय बाणमेकं समादधे सोपि पात्रं तलं भित्वा बाणमुत्सृज्य चाग्रतः ३३ ताडयित्वा च पाषाणं पुनस्तत्तन्समाश्रितः बाणवेगेन तदपि बिंदुस्रावोपिनाभवत् ३४ गतागतेन यावद्दै बिंदुस्रावोपिनाभवत् तदा वीराश्च ते सर्वे साधु साध्विति वादिनः ३५ भानुर्धनुः संगृहीत्वा वीक्ष्य मीलितलोचनः आराद्विक्षेप नाराचं सर्वेषां पश्यतां सताम् ३६ सोपि पात्रं तदा भित्वा पात्रं कृत्वा ह्यधोमुखं पुनरूर्द्धमुखं कृत्वा तस्थौ तत्रान्दु निःसृतः ३७ बाणवेगेन तदपि बिंदुस्रावोपिनाभवत् न पात्रं शकलीभूतं तदद्भुतमिवाभवत् ३८ एवं श्रीकृष्णपुत्रा ये अष्टादश महारथाः सर्वे ते विभिदुः पात्रं जलस्रावोपिनाभवत् ३९ बिंदुदेशाधिपो राजा दीर्घबाहुः सुविस्मितः तेभ्यो ददात्कन्यकाः सृष्टा अष्टादश सुलोचनाः ४० तेषां विवाहसमये शंखभेर्यानकादयः नेदुर्जगुश्च गंधर्वा ननृतुश्चाप्सरोगणाः ४१ तेषामुपरि देवास्ते जयध्वनिस-

दातॄणांप्रतिकुल्यास्कद्दातॄणांफणिनोयथा २६ वृष्णयोभीरवः सर्वेयुधिविक्लवचेतसः तथैवशासनंकर्तुंप्रवर्ता-
हिगताह्नियः २७ उग्रसेनोल्पवीर्यश्चजंबूद्वीपस्थितान्नृपान् विजित्याहोबलिंनीत्वाराजसूयंकरिष्यति २८ यत्र
भीष्मश्चकर्णश्चद्रोणोदुर्योधनादयः तत्रत्वंप्रेषितोमंत्रीप्रद्युम्नेनकुबुद्धिना २९ तस्माद्यातपुरीमध्येयूयंवैजीव
नेच्छया नचेद्यास्यथवःसर्वान्नयामोयमसादनं ३० नारदउवाच इत्थंश्रीकृष्णविमुखैःकौरवैःपरिभा-
षितं श्रुत्वोद्धवःशंबरारि मेत्यसर्वमुवाचह ३१ कौरवोक्तंवचःश्रुत्वाप्रद्युम्नोधन्विनांवरः प्रतिशार्ङ्गंसंगृही-
त्वारोषात्प्रस्फुरिताधरः ३२ प्रद्युम्नउवाच कौरवान्घातयिष्यामिबंधूनपिमदोद्धतान् बाणैस्तीक्ष्णैर्यथायो
गीनियतैर्देहजान्रुजः ३३ यदूनांसैन्यचक्रेषुबलिंयोनप्रदास्यति कौरवेष्वपिसपुमान्पितुर्मातुर्नचौर-
सः ३४ नारदउवाच तदैवयादवाःसर्वेभोजवृष्ण्यंधकादयः गजाह्वयंययुःसैन्यैराजन्संजातमन्यवः
३५ इतिश्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवादे कौरवोपाख्याननामैकोनविंशो-
ऽध्यायः १९ नारदउवाच तदैवकौरवाःसर्वेनिर्गतादीप्तमन्यवः स्वस्वैर्बलैःसमायुक्तायोद्धुंप्रद्युम्न
सन्मुखे १ विजयध्वजसंयुक्तारत्नकंबलमंडिताः गजाःषष्टिसहस्राणिनिर्ययुःस्वर्णशृंखलाः २ प्रलया-
ब्धिमहावज्रसंघर्षध्वनिकारिणाम् गजाःषष्टिसहस्राणिदुंदुभीनांविनिर्गताः ३ गजागावोवृहद्भल्लालोह
कंचुकमंडिताः सिरस्त्रमौलिसंयुक्ताद्विलक्षाणिविनिर्ययुः ४ हेमकंकणकेयूरकिरीटवलकुंडलाः ग
जस्थाश्चद्विलक्षाणिनिर्ययुःस्वर्णकंचुकाः ५ पीतकंचुकसंयुक्तास्तिर्यगुष्णीषशालिनः गजस्थाश्च-
द्विलक्षाणिसंग्रामेलब्धकीर्तयः ६ रक्तांबरधराःकेचिद्रक्तभूषणभूषिताः रक्तकंबलसंयुक्तैर्गजैरुच्चैर्वि-

166

कचित्तुवानरीलीलाडमरूवाघसंयुता गायंतिकुत्रचिद्राजन्सूतमागधवंदिनः १० वारांगनाश्चनृत्यंतिभूषेर्द्दी दृशाभिर्युताः दिव्यैःषोडशशृंगारैर्हरंत्यप्सरसांमनः ११ बन्धूनामपिसेनानांमहातंकागजाह्वये चालनंसंभ्रमोपेतविक्लवेश्चजनैरभूत् १२ विदुद्रुवुर्जनाःसर्वेगृहेष्वापातिनार्गलाः कोलाहलोमहानासीद्गेहेगेहेजनेजने १३ वीर्यशौर्य्यबलोपेताःकौरवा श्चक्रवर्तिनः आसमुद्रात्क्षितीशेंद्राजातास्तदपिशंकिताः १४ प्रद्युम्न प्रेषितः साक्षादुद्धवोबुद्धिसत्तमः कौरवेंद्रपुरंप्राप्तोधृतराष्ट्रंददर्शह १५ मदच्युतास्यनृपस्यदंतिनांकस्तूरिकाकुंकुमगंडशालिना सिंदूरशुंडास्फटकर्णताडितैःषडंघ्रिभिर्मंडितमंदिराजिरं १६ यंभीष्मकर्णगुरुशल्यकृपैश्चभूरिबाल्हीकधौम्यशकुनैःसहसंजयेन दुःशासनेनविदुरेणचलक्ष्मणेन दुर्योधनेनचकृपीकृतसोमदत्तैः १७ श्रीयज्ञकेतुसहितैःसहितंनृपेंद्रं लीलातपत्रसितचामरहेमपीठैःसंसेवितंपरिसमेत्यगजाह्वयेशं नत्वोद्धवःप्रणतआह कृतांजलिस्तं १८ उद्धवउवाच प्रद्युम्नेनप्रकथितंशृणुराजेंद्रसत्तम उग्रसेनःक्षितीशेंद्रोयादवेंद्रोमहाबलः १९ विजित्यनृपतीन्सर्वान्राजसूयंकरिष्यति प्रेषितस्तेनतेनाभिप्रद्युम्नोरुक्मिणीसुतः २० जेतुंमहोद्भटान्वीरान्जंबूद्वीपस्थितान्नृपान् चैद्यशाल्वजरासंधदंतवक्रादिभूपतीन् २१ विजित्यचागतःकार्ष्णिस्तस्मैयच्छबलिंबहु उपायनंचदातव्यंबंधूनामैक्यकाम्यया २२ याभूत्कुरूणांवृष्णीनांकलिर्नोचेद्भविष्यति तेनोदितंमेकथितंतत्क्षमस्वनृपेश्वर २३ दूतस्यहीनदोषस्यत्वयोक्तंपदूदामितत् नारदउवाच तच्छ्रुत्वाकौरवाःसर्वेराजन्संजातमन्यवः वीर्यशौर्य्यमदोन्नद्धाऊचुःप्रस्फुरिताधराः २४ कौरवाऊचुः दुरत्ययाकालगतिरहोचित्रमिदंजगत् सिंहोपरिप्रधावंतिशृगालादुर्बलावने २५ अस्मत्सकाशात्संबंधप्रस्मद्दत्तनृपासनाः

भ्रुशुण्डीभिःकुठारैश्चस्फुरत्प्रभैः २७ चिच्छिदुर्बाणपटलैःशिरांसिक्रोधमूर्च्छिताः बाणांधकारेसंजातेप्रद्युम्नोध-
न्विनांवरः २८ दुर्योधनेनयुयुधेधनुष्टंकारयन्मुहुः अनिरुद्धश्चभीष्मेणदीप्तिमांश्चक्रसेणवै २९ भानुर्द्रोणेन
सांबस्तुबाल्हीकेननृपेश्वरः मधुकर्णेनचायुध्यत्बृहद्भानुःशलेनवै ३० चित्रभानुर्हरेःपुत्रःसोमदत्तेनधीमता
अश्वत्थाम्नावृकश्चैवारुणोधौम्येनमैथिल ३१ पुष्करोलक्ष्मणेनाथदुर्योधनसुतेनवै वेदबाहुःकृष्णसुतःश
कुनेनमहामृधे ३२ दुःशासनेनसमरेश्रुतदेवोहरेःसुतः तथाहियुयुधेयुद्धे संजयेनसुनंदनः ३३ विदुरे-
णग :साक्षात्कृतवर्माचभूरिणा अक्रूरोयुयुधेराजन्नाहवेयक्षकेतुना ३४ एवंपरस्परंयुद्धंबभूवतुमुलंमह
त् कार्ष्णिर्विलोकयामासदुर्योधनबलंमहत् ३५ बाणसंघेनवाराहोदंष्ट्रयाचयथार्णवं बाणसंभिन्नकुंभा-
नांकरिणःप्रयंतंतिरवात् ३६ मुक्ताफलानिरेजुःकोरात्रौतारागणाइव बाणैःसंपातयामासरथिनःसारथीन्र-
थान् ३७ महामृधेमैथिलेंद्रवेगैर्वातोयथातरून् दुर्योधनस्तदाप्राप्तोधनुष्टंकारयन्मुहुः ३८ प्रद्युम्नंताडया
मासमायकैर्दशभिर्मृधे तान्प्रचिच्छेदभगवान्प्रद्युम्नोयादवेश्वरः ३९ दुर्योधनःपुनस्तस्यकवचेसायकान्दश
निचखान्स्वर्णपुंखान्भित्वावर्मतनौगतान् ४० सहस्रैर्बाणपटलैःसहस्राश्वान्जघानह चिच्छेदबाणशतकैःको
दंडंसगुणंपरं ४१ शंबरारेर्महावीरोधृतराष्ट्रसुतोबली प्रद्युम्नस्तंरथंत्यक्त्वाथान्यमारुह्यसत्वरं ४२ कृष्णदत्तं
धनुर्नीत्वासज्यंकृत्वाविधानतः एवंबाणंसमाधायकर्णांतंतञ्चकर्षह ४३ ऋजुदंडस्यवेगेनतद्रथंनिचकर्षह गृ
हीत्वातद्रथंबाणोभ्रामयित्वाघटीद्वयं ४४ आकाशात्पातयामासकमंडलुमिवार्भकः पतनेनरथःसद्यश्चूर्णी-
भूतोबभूवह ४५ ससूताश्वहयाःसर्वेपंचत्वंप्रापुरग्रतः अन्यंरथंसमास्थायधार्तराष्ट्रोमहाबलः ४६ प्रद्युम्नं

167

निर्गताः ७ कृष्णांबरधरानागैर्हरिवस्त्रसमावृताः केचिच्छुक्लांबराः केचिन्निर्ययुः पाटलांबराः ८ रथैश्चदेवधिष्ण्याभैर्मृगेंद्रध्वजशोभितैः पतत्पताकैरत्युच्चैर्निर्ययुः कोटिशोनृपाः ९ आंगैर्वांगैः सैंधवैश्चचंचलैस्तुरगैर्नृपाः मनोजवैः स्वर्णभूषैर्निर्ययुः शस्त्रसंवृताः १० समंतान्निर्ययुर्वीरालोहकंचुकमंडिताः विद्याधरसमाराजन्संकुलाः युद्धशालिनः ११ जगुर्यशांसि कौरवाणां सूतमागधवंदिनः भेरीमृदंगैः पटहैरानकैर्दुंदुभिनिःस्वनैः १२ मृगेंद्रध्वजसंयुक्तैः शुक्लवाहानियोजितैः व्यजनैर्वज्रदंडैश्चचामरांदोलिराजितैः १३ चतुर्योजनमात्रेणचंद्रमंडलचारुणा छत्रेणमंडितराजन्निर्दत्तेनमनोहरे १४ दुर्योधनोवभौसैन्येमहतिस्यंदनेस्थितः तथान्येधार्तराष्ट्राश्चस्यंदनस्यंदनेस्थिताः १५ चतुर्योजनमात्रैश्चछत्रैर्मुक्ताविलंबिभिः कृतवर्मनातिभीष्मेण कृपेणगुरुणासह १६ बाल्हीककर्णशैल्यैश्चसोमदत्तेनधीमता अश्वत्थामाचधौम्येनलक्ष्मणेनधनुष्मता १७ शकुनेनन्चवीरेणतथादुःशासनेनच संजयेनतथाक्षत्रीभूरिणायज्ञकेतुना १८ सुयोधनोनृपैरेजेयथाशक्रोमरुद्गणैः इंद्रप्रस्थात्पांडुपुत्रैः प्रेषितं प्रतिमाहूयं १९ तदैवचागतंराजन्कौरवाणांसहायकृत् अक्षौहिणीभिः षोडशभिः कुरूणांचलतांतदा २० चचालभूर्दिशोनेदूरजोव्याप्तंनभोभवत् तारकेवबभौसूर्योगजाश्वरथरेणुभिः २१ अंधकाराभवद्भूमौदेवाः सर्वेविशंकिताः यत्रतत्रगजानांचचोदनाभिश्चभूरुहाः २२ निपेतुस्तुरगैर्वीरैः क्षुण्णंभूखंडमंडलं सेनाकुरूणांवृष्णीनायुयुधुश्चपरस्परं २३ तीक्ष्णैः शस्त्रैर्यथासप्तसमुद्रास्तरलेलये हयाहयारिभाश्चेभैरथिनोरथिभिः सह २४ श्येनैः श्येनाइवकव्येपत्तयपत्तिभिर्मृधे महामात्यैर्महामात्याःसूतास्सूतैः नृपैर्नृपाः २५ युयुधुः क्रोधसंयुक्तासिंहैःसिंहाइवोजसा खड्गैः कुंतैः शक्तिभिश्चभल्लैः पट्टिशमुद्गरैः २६ गदाभिर्मुसलैश्चक्रैस्तोमरैर्भिंडिपालकैः शतघ्नीभिर्भु-

ग

तितं दृष्ट्वा प्रागाद्भीष्मं मृधे महान् प्रलयाब्धिमहावर्तभीमसंघर्षनादिनीं १३ धनुर्ज्यां तस्य चिच्छेद बाणेनैकेन का
र्ष्णिजः तुंडयातीक्ष्णयाराजन् गरुडः सर्पिणीं यथा १४ भीष्मोन्यद्धनुरादाय सज्यं कृत्वा तदात्मवान् सर्वेषां पश्यतां
तत्र ब्रह्मास्त्रं संदधे मृधे १५ ततः प्रादुष्कृतं तेजः प्रचंडं वीक्ष्य माधवः स्वबलस्यापि रक्षार्थं ब्रह्मास्त्रं संदधे स्वयं १६
द्वादशादित्यसंकाशे युयुधाते परस्परं त्रीन्लोकान्दहती द्वीपे निरुद्धस्तं जहार ह १७ गांगेयस्यापि कोदंडं तडिद्धूर्णं-
यदुत्तमः चिच्छेद सायकैः सूर्यो नीहारमिव रश्मिभिः १८ भीष्मो गृहीत्वाथ गदां लक्षभारमयीं दृढां प्राहिणोद नि-
रुद्धाय सिंहनादं तदाकरोत् १९ गृहीत्वा वामहस्तेन गरुत्मानिव पन्नगीं प्रद्युम्नो भगवान्साक्षात्प्राहिणोत्स्वगदा-
हृदि २० गदाप्रहारव्यथितो मूर्च्छितः पतितो रथात् बभौ सूर्यो यथाकाशात् गांगेयो मृधमंडले २१ कृपाचार्योपि त
त्रैवानिरुद्धाय महात्मने शक्तिं चिक्षेप सहसा रुषा प्रस्फुरिताधरः २२ दीप्तिमान्कृष्णपुत्रस्तु पथि चिच्छेद तां नृप-
खड्गेनासितधारेण कुवाक्येनेव मित्रतां २३ द्रोणाचार्यो महाबाहुर्भानूपरि रुषान्वितः चिक्षेप पार्वतं चास्त्रं धनुष्टंकार
यन्मुहुः २४ पतंतः पर्वताव्योम्नश्चूर्णयंतो द्विषद्बलं तेषां पातेन राजेंद्र हाहाकारो महानभूत् २५ तदा हरेः सुतो-
भानुर्वायव्यास्त्रं समाददे तद्वातेनाद्रयः सर्वे उड्डितापभवद्रूपात् २६ बाह्लिकस्तु तदा क्रुद्धो ब्रह्मास्त्रं संदधे ततः -
भस्मीभूतं बलजातं वह्निनेव महद्वनं २७ पार्जन्यमाददे तत्र सांबो जांबवतीसुतः तेन शांतिं गतो वह्निर्ज्ञानेनेव त्वहं
कृतिः २८ कर्णस्ततो मधुं हित्वा सांबोपरि रुषान्वितः जघान बाणविंशत्या जगर्ज घनवद्बली २९ तद्बाणैः सरथः
सांबो बभ्राम घटिकाद्वयं क्रोशं पुनः प्रपतितः किंचिद्व्याकुलमानसः ३० पुनर्गदां समादाय रथं त्यक्त्वा समेत्य सः
तताड गदया कर्णं सांबो जांबवतीसुतः ३१ तदा प्रहारव्यथितः पतितो धरणीतले मूर्च्छां प्राप रणे राजन् कर्णो वीरो-

ताडयामासदशभिः सायकैर्मृधे तैस्ताडितोहरेःपुत्रःमालाहतइवद्विपः ४७ कृष्णदत्तेचकोदंडेतथैकंबाणमा
दधे बाणस्तंसरथंनीत्वायावान्प्रागान्महांबरे ४८ तावद्बाणाद्वितीयोपितंगृहीत्वाययौत्वरं तावत्तृतीयःसंप्राप्तो-
नीत्वातंमंदिराजिरे ४९ धृतराष्ट्रसमीपेचसरथंशाल्वसारथिं आकाशात्पातयामासपद्मकोशमिवानिलः -
५० बाणोतंपातयित्वातुरणेकार्ष्णिःसमाययौ ५१ पतितेनविशीर्णोभूद्गारइवतद्रथः स्फयोधनोमूर्छितो-
भूदुद्वमन्रुधिरंमुखात् ५२ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे नारदबहुलाश्वसंवादे कौरव
युद्धवर्णनंनामविंशोध्यायः २० नारदउवाच दुर्योधनेगतेतत्रहाहाकारोमहानभूत् तदादेवव्रतोभीष्मो
गांगेयःप्रययौत्वरं १ यदूनांपश्यतांतेषांधनुष्टंकारयन्मुहुः भस्मीकर्तुंयदुबलंवनंवन्हिरिवज्वलन् २ सर्वध
र्मभृतांश्रेष्ठोमहाभागवतःकविः वीरयूथाग्रणीर्येनरामोपियुधितोषितः ३ शिरस्त्रीमुकुटीगौरःशितश्मश्रुःपिता
महः यथाषोडशवर्षीयोयुद्धंतंविचरन्बलात् ४ बाणैर्निपातयामासानिरुद्धस्यबलंमहत् करिणश्छिन्नशिर
सोहयास्तेभिन्नकंधराः ५ खड्गहस्ताभिन्नबाणैःपत्तयोपिद्विधाभवन् रथाश्चूर्णीकृतायेनहतसूताश्चनायकाः
६ अधोमुखाऊर्ध्वमुखाश्छिन्नपादाश्चपालजाः खड्गहस्ताधनुर्हस्ताःपतिताश्छिन्नबाहवः ७ केचिद्वैछिन्न-
कवचानिपेतुर्भूमिमंडले अश्वैर्वीरैरथैर्नागैःपतितैःस्वर्णभूषितैः ८ युद्धमंडलमारेजेवनंवृक्षैर्हतैर्य-
था शस्त्रदत्ताबाणकेशाध्वजवस्त्राकरिस्तना ९ रथांगकुशलाराजन्महामारीवबभौ क्षतजस्राव-
संकुलारथाश्वनरवाहिनी १० आपगाभून्महादुर्गानरैर्वैतरणीयथा कूष्मांडोन्मादवेतालानदंतोभैरवं
स्वनं ११ हरमालार्थमागत्यजगृहुर्नृशिरांसिच रथेनातिपताकेनानिरुद्धोधन्विनांवरः १२ स्वबलंप-

यः २१ नारदउवाच दुर्योधनंशांतयित्वासानुजेःकुरुभिःसह जग्मतुःपांडवान्द्रष्टुं इंद्रप्रस्थंयदूत्तमौ १ इं-
द्रप्रस्थात्ततोराजाजातशत्रुर्युधिष्ठिरः भ्रातृभिःस्वजनैःसार्द्धंनेतुंकृष्णंसमाययौ २ शंखदुंदुभिनादेनब्रह्मघो
षणवेणुभिः पुष्पवर्षप्रकुर्वद्भिरिंद्रप्रस्थनिवासिभिः रामकृष्णौपरिष्वज्यदोर्भ्यांराजायुधिष्ठिरः ३ परमांनिर्वृत्तिं
लेभेयोगीवानंदसंवृतः प्रद्युम्नाद्याहरिसुताःप्रणेमुःश्रीयुधिष्टिरं ४ युधिष्ठिरोनुजग्राहकराभ्यांतान्कृताशिषः
अर्जुनंभीमसेनंचपरिरभ्यहरिःस्वयं ५ पप्रच्छकुशलंतेषांयमाभ्यांचाभिवंदितः परिपूर्णतमःसाक्षात्श्रीकृ-
ष्णोन्वस्वयंहरिः ६ असंख्यब्रम्हांडपतीहरिदासेनपूजितौ प्रस्थाप्ययदुमुख्यांश्चप्रद्युम्नादीन्ससैनिकान्
७ समग्रांजगतींजेतुंचाज्ञांदत्वाविधानतः मिलित्वासानुजंधर्मंसर्वेशौभक्तवत्सलौ ८ द्वारकांजग्मतूराज
न्गौरश्यामौमनोहरौ इत्थंश्रीकृष्णचरितंमयातेकथितंनृप ९ चतुःपदार्थदंनॄणांकिंभूयःश्रोतुमिच्छसि -
बहुलाश्वउवाच कुशस्थलींगतेकृष्णेसबलेपुरुषोत्तमे १० ततश्चकारकिंसाक्षात्प्रद्युम्नोभगवान्हरिः अद्भु-
तंतस्यचरितंश्रवणीयंमनोहरं ११ मुक्तानामपिभक्तानांजिज्ञासूनांपुनःकिमु अर्थार्थीनांसर्थदंसदार्तानामा
र्तिनाशनं १२ चतुर्विधानांजीवानांसर्वेषांपापनाशनं कथंदिग्विजयंकृत्वादिग्जयार्थीहरेःसुतः १३ आज-
गामपुनःसैन्यैरेतन्मेवदतत्वतः देवर्षेत्वंब्रम्हसुतोभगवान्सर्वदर्शनः १४ श्रीकृष्णस्यमनःपूर्वंतस्मैतेहरयेन्न-
मः नारदउवाच साधुपृष्टंत्वयाराजन्धन्यस्त्वंतत्प्रभाववित् श्रीकृष्णचरितंश्रोतुंपात्रंत्वमसिभूतले १५ कृष्णे
यातेजातशत्रुरक्षार्थंस्नेहतोनृप शत्रुभ्यःशंकितःकार्ष्णिःप्रायुक्ताश्चकिरीटिनं १६ अथकार्ष्णिर्ययौश्रेष्ठःफाल्गु-
नेनसमंनृप विकर्षमहतींसेनांत्रिगर्ताप्रययौत्वरं १७ त्रिगर्ताधीश्वरोधन्वीसुशर्मातेनशंकितः उपायनंददौतस्मै



169

यातुरामहाराजययुश्चंद्रावतींपुरीम् ५१ देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा श्रीवृकस्योपरिस्फुराः पुष्पवर्षंप्रचक्रिरे ५२ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेवृष्टदैत्यवधोनामद्वात्रिंशोऽध्यायः ३२ -

नारदउवाच हृष्टंनिपतितंश्रुत्वाशकुनिःक्रोधमूर्च्छितः भ्रातॄन्संप्रेषयामासदेवानांभयकारकान् १ भूतसंतापनोनामगजमारुह्यनिर्गतः वृकः खरंसमारुह्यकालनाभोथसूकरम् २ महानाभोमत्तबुष्टंहरिश्मश्रुस्तिमिंगलम् वैजयंतंरथंचैत्रंमयदैत्यविनिर्मितम् ३ पंचयोजनविस्तीर्णंसहस्राश्वनियोजितम् मायामयंकामगंचपताकाशतसंवृतम् ४ सहस्रकलशाढ्यंचमुक्तादामविलंबितम् रत्नभूषणभूषाढ्यंशतचंद्रसमोज्वलम् ५ सहस्रचक्रसंयुक्तघंटाकारविभूषणम् आरुह्यशकुनिःपश्चात्योद्धुकामोविनिर्ययौ ६ अक्षौहिणीभिर्द्वादशभिर्दैत्यानांमैथिलेश्वरः धनुःस्वनैर्वीरशब्दैरश्वहेसारथस्वनैः ७ चीत्कारैर्हस्तिनामाशांमंडलंतुजगर्जह दैत्यसेनाप्रयाणेनचकंपेमंडलंभुवः ८ निपेतुर्गिरयोनेकाश्चिचेलुःसिंधवोनृप निपातितार्गलादेवैर्बभूवाश्वमरावती ९ तत्सैन्यंभूषणंदृष्ट्वा प्रद्युम्नोधन्विनांवरः बलीधैर्यकरःपार्ष्णिःप्राहेदंयदुपुंगवान् १० प्रद्युम्नउवाच इदंशरीरंभुविपांचभौतिकंफेनोपमंकर्मगुणादिनिर्मितम् गत्वागतंकालवशंकदापिहीबुधानशोचंतियथार्भकाकृतम् ११ गच्छंतिचोर्ध्वंकिलसात्विकाजनान्मध्येचतिष्ठंतिहिराजसानराः अधःप्रगच्छंतिहितामसापरेमुहुर्मुहुस्तेविचरंतिकर्मभिः १२ बिभेत्ययंवाकिलसर्वतोयथानेत्रभ्रमेणाचलतीवभूर्यथा तथाचसर्वंमनसाकृतंजगत्कोनेर्भकंत्वर्भकआवृतोयथा १३ यथास्फुरत्स्वंमण्डलवर्तिनांचलंतथास्तिपातालनृणांसदानहि यथामराणींक्रतुभिःकृतंस्मरेत्तुसर्वंत्यजेन्तृणवत्परोजनः १४ क्षतोगुणोदेहगुणोस्वभावलीराशिर्दिनंयातियथातथाजनाः दृश्यंचयद्यन्नहिकिंचिदस्ति

च्छृंगंगृहीत्वाभुजयोर्बलात् ५१ तताडतेनराजेंद्रभूतसंतापनेरणे भूतसंतापनोदैत्यः संपूर्णंजठरंगिरिम् ५२ गृही-
त्वासगरंतस्थौउद्भटोदैत्यपुंगवः अनेनघातयिष्यामित्वांरणेप्रवदन्मुखात् ५३ देवकूटंसमुत्पाट्यगिरिंचश्रीहरेः
सुतः अनेनघातयिष्यामित्वांरणेप्रवदन्मुखात् ५४ तस्थौतत्सन्मुखेराजंस्तदद्भुतमिवाभवत् क्षिपंतंपर्वतंदैत्यं
भूतसंतापनंनृपः ५५ तताडगिरिणास्वेनरणेसंग्रामजिद्बली जठरोबहुकूटश्चद्वौगिरीदैत्यमस्तके ५६ पति-
तौभूरिभाराढ्यौवज्रसंघर्षनादिनौ ५७ भूतसंतापनस्ताभ्यांपतितःपंचतांगतः तज्ज्योतिःसंग्रामजितिलीनंजा
तंविदेहराट् ५८ श्रीसंग्रामजितःसैन्येनेदुर्दुंभयतस्तदा भद्रात्मजोपरिसुराःपुष्पवर्षंप्रचक्रिरे ५९ इति
श्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेभूतसंतापनदैत्यवधोनामत्रयस्त्रिंशोऽध्यायः ३३-
नारदउवाच संग्रामजिन्महाबुद्धेभूतसंतापनेमृते हाहाकारोमहानासीद्दैत्यसेनासुमैथिलः १ शकुनिर्वृकःका
लनाभोमहानाभस्तथैवच हरिश्मश्रुश्चपंचैतेसंप्राप्तारणमंडले २ कार्ष्णिःशकुनिनायुयुद्धदनिरुद्धोवृकेनवै काल
नाभेनसाबस्तुमहानाभेनदीप्तिमान् ३ हरिश्मश्रुःसुरेणापिभानुःकृष्णसुतोबली सर्वेषामग्रतःप्राप्तोऽनिरुद्धोधन्वि
नांवरः ४ विभेदबाणैर्दैत्यांश्चवज्रेणेंद्रोयथागिरीन् अनिरुद्धशरैर्दैत्याश्छिन्नपादांसजानवः ५ निपेतुर्मूर्च्छि
ताभूमौवृक्षावातहताइव अनिरुद्धशरैस्तीक्ष्णैःसंछिन्नामेघडंबराः ६ छिन्नकुंभाभिन्नशुंडाःपतितारणमंडले-
रुग्णदंताश्छिन्नकक्षाःशैलावज्रहताइव ७ द्विधाभूतागजाःपेतुःस्फटकाश्मीरकंवलाः करीणांभिन्नकुंभानांमु
क्तारेजुःस्फुरत्प्रभाः ८ बाणांधकारेराजेंद्ररात्रौतारागणाइव प्रधर्षिताःकेपिवीराःअनिरुद्धशरान्विताः ९-
निपेतुर्मूर्च्छिताभूमौतदद्भुतमिवाभवत् केचित्कोरथिनःपेतुस्तेषांशून्यारथास्थिताः १० कपित्थस्यफलानीवहस्ति

३१ केचिदश्वैर्महावीराः शक्तिहस्तामदोत्कटाः जघ्नुर्गजस्थान्नृपतीन्मृगेंद्रइवयूथपान् ३२ अश्वारूढाः केपिसेनां
संविदार्य्यविनिर्गताः खड्गवेगैः पद्मवनंलीलाभिर्वायवोयथा ३३ केचित्परस्परंसाश्वैरुत्पतंतोरणांगणे खड्गैर्जघ्नुर्य
थाक्रव्येश्चंचुभिः पक्षिणांवरैः ३४ केचित्खड्गैः परशुभिः केचिच्चक्रैः पदातयः चिच्छिदुर्निशितैर्भल्लैः फलानीवशिरां-
सिच ३५ संग्रामजिद्वृहत्सेनःशूरःप्रहरणोविजित् जयः सुभद्रोवामश्चसत्यकस्यपुरेवहि ३६ भद्रायाश्चसुताह्येते-
श्रीकृष्णस्यौरसाः शुभाः सर्वेषामग्रतः प्राप्तायुयुधुर्दैत्यपुंगवैः ३७ भूतसंतापनोनामगजारूढोमहासुरः यदुसै
न्यंमहाराजचक्रेनाराचतुर्दिनम् ३८ बाणांधकारेचकृतेभूतसंतापनेनवै संग्रामजित्तदाप्राप्तःश्रीकृष्णस्यसुतोबली
३९ विव्याधबाणशतकैर्भूतसंतापनंरणे प्रलयार्णवसंघट्टभीमसंघट्टनादिनीम् ४० धनुर्ज्यांतस्यचिच्छेदभूत-
संतापनोबली संग्रामजिद्धनुश्चान्यंगृहीत्वास्वंतडिद्युभिः ४१ सज्यंकृत्वाविधानेनशतंबाणान्समादधे तेबा
णास्तद्धनुर्ज्यांचकवचंलोहनिर्मितम् ४२ भित्वाछित्वाननुंतस्यगजंभित्वाविनिर्गताः बाणप्रहारव्यथितकिंचि
द्व्याकुलमानसः ४३ गजंस्वंनोदयामासभूतसंतापनोबली कालांतकसमंनागंदृष्ट्वासंग्रामजिद्बली ४४ गृही-
त्वास्वमसिंनीत्वासंजघानरणांगणे तस्यखड्गप्रहारेणशुंडादंडोद्विधाभवत् ४५ चीत्कारमुत्कटंकुर्वन्मदस्रावय-
त्करात् भूतसंतापनंत्यक्त्वाभुवनंकंपयन्गजः ४६ निपातयन्महावीरान्घंटानादैर्नदन्मुहुः नवलात्त्वभितोदै
त्यैः पुरींचंद्रावतींययौ ४७ कोलाहलोमहानासीद्राजन्येवंगजच्युते भूतसंतापनश्चक्रंश्रीकृष्णस्यसुतायवै ४८
चिक्षेपनिशितंशीघ्रंग्रीष्ममार्तंडवत्स्फुरत् तदागतंभसंदृष्ट्वाचक्रंभद्रात्मजोबली ४९ स्वचक्रेणमहाराजलीलया
शतधाच्छिनत् जठरस्यगिरेःशृंगंसमुत्पाद्यमहासुरः ५० चिक्षेपकृष्णपुत्रायनादयन्व्योममंडलम् संग्रामजिच्चत

ततताडसहसाराजन्वृकंदैत्यंमहाबलम् ३० त्रिशूलस्तमरिभित्वारवरंभित्वाहतागदाम् चूर्णयामाससहसाचानिरुद्धर-
थंबलात् ३१ प्राद्युम्निःशतधारेणखड्गेनारिभुजद्वयम् चिच्छेदभिदुरेणाशुशैलयक्षोयथावृषा ३२ तदाभिन्नभुजो
दैत्यःपद्भ्यामाकंपयन्भुवम् ३३ विस्तीर्णवदनंकृत्वाललज्जिह्वंभयंकरम् करालदंष्ट्रःप्रपिबन्नाकाशंदैत्यपुंगवः ३४
तिमिंतिमिंगिलइवप्राग्रसत्कार्ष्णिनंदनम् दैत्योदरेकृष्णपौत्रःश्रीकृष्णस्यानुकंपया ३५ नममारमहाराजकार्ष्णिर्मी-
नोदरेयथा वृकोदरेयथाकृष्णोयथागोपाह्यघोदरे ३६ बकोदरेयथाकंसोयथावृत्रोदरेवृषा हाहाकारेतदाजाते-
यदुसैन्येविदेहराट् ३७ गदोगदांसमादायबलदेवानुजोबली ततामस्तकेदैत्यंवृकंनाममहाबलम् ३८ तदाहतशि-
रादैत्योरेजेक्षतजबिंदुभिः गरिष्टजलधाराभिर्यथाविंध्याचलोनृप ३९ फाल्गुनस्वमसिंनीत्वातत्पादौचांजसाहरन्
छिन्नांघ्रिःसपपातोर्व्यांछिन्नपक्षोयथागिरिः ४० अनिरुद्धस्तदुदरंनत्वारखड्गेननिर्गतः जहारतच्छिरश्चायंयथा
वज्रेणवृत्रहा ४१ तदाजयजयारावोयदुसैन्येबभूवहः देवदुंदुभयोनदुर्नरदुंदुभयस्तथा ४२ अनिरुद्धोपरिसुराःपु-
ष्पवर्षंप्रचक्रिरे कथितंह्यद्भुतंचैतत्किंभूयःश्रोतुमिच्छसि ४३ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहु
लाश्वसंवादेवृकदैत्यवधोनामचतुस्त्रिंशोऽध्यायः ३४ बहुलाश्वउवाच अहोअत्यद्भुतंयुद्धंमुनेप्राद्युम्निनाकृ-
तम् वृकेहतेमहादैत्येकिंबभूवरणेपुनः १ नारदउवाच वृकदैत्यंहतंवीक्ष्यकालनाभोमहासुरः क्रोडारूढोरणां-
प्रागाद्धनुष्टंकारयन्मुहुः २ अक्रूरंबाणविंशत्यागदंचदशभिःशरैः अर्जुनंदशभिर्बाणैर्युयुधानंचपंचभिः ३ दशभिः
कृतवर्माणंकार्ष्णिंबाणशतेनवै अनिरुद्धंचविंशत्यादीप्तिमंतंचपंचभिः ४ सांबंचशतबाणैश्चविव्याधसमरेसुरः-
तद्बाणैःसरथान्वीरान्बभूवुर्घटिकाद्वयम् ५ हयाश्चपंचतांप्राप्ताश्चूर्णीभूतारणांगणे तद्धस्तलाघवंदृष्ट्वाप्रसन्नोरुक्मि

त्वेडगतानिच क्षणमात्रेणराजेंद्रदैत्यानांवाहिनीषुच ११ नदीबभूवसंग्रामेभीषणाक्षतजश्रवात् द्विपग्राहाचोद्धरख
रकबंधास्यादिकच्छया १२ शिशुमाररथाकेशाशैवालाभुजसर्पणी करमीनामौलिरत्नाहारकुंडलशर्करा १३ श
स्त्रशुक्तीछत्रशंखाचामरध्वजसैकता रथांगावर्तसंयुक्तासेनाद्रुमतटावृता १४ शतयोजनविस्तीर्णाबभौवैतर-
णीयथा प्रमथाभैरवाभूतावेतालायोगिनीगणाः १५ अट्टहासंप्रकुर्वंतोनृत्यंतोरणमंडले पिबंतोरुधिरंशश्वत्क
पालेननृपेश्वरः १६ हरस्यमुंडमालार्थंजगृहुस्तेशिरांसिच सिंहारूढाभद्रकालीडाकिनीशतसंवृता १७ भक्षयं-
तीरणेदैत्यानट्टहासंचकारह विद्याधर्यस्त्ववरस्थागंधर्व्योप्सरसस्तथा १८ क्षत्रधर्मस्थितान्वीरान्वव्रिरेदेवरूपि-
णः परस्परंकलिर्भूत्वात्तासांपत्यर्थमंबरे १९ ममानुरूपोनायंवःइतिविह्वलचेतसाम् केचिद्वीराधर्मपरारणरंगा
न्नचालिताः २० ययुर्विष्णुपदंदिव्यंभित्वामार्तंडमंडलम् अनिरुद्धंसृपुंद्दष्ट्वाकेचिद्दैत्याःपलायिताः २१ केचित्स्वं-
स्वंरणंत्यक्त्वादुद्रुवुस्तेदिशोदश तदावृकोमहादैत्यःखरारूढोभयंकरः २२ आजगामनदन्युद्धेधनुष्टंकारयन्मुहुः
अनिरुद्धस्यापिचायसंजनीसहितंनृपः २३ चिच्छेददशभिर्बाणैःवृकोपिरणदुर्मदः छिन्नधन्वानिरुद्धस्तुद्वितीयं
धनुराददे २४ चिच्छेद्दशभिर्बाणैर्वृकचापंमहाबलः वृकस्त्रिशूलमुद्यम्यरुषाप्रस्फुरिताधरः २५ ललज्जिह्वःप्र-
त्युवाचानिरुद्धंधन्विनांवरः दैत्यउवाच अद्यैवत्वांहनिष्यामिक्षत्रियंस्वस्थविक्रमम् त्वयासेनाहतामेद्यपश्यविक्र
ममद्भुतम् २६ अनिरुद्धउवाच येवदंतिमुखेनेहतेकुर्वंतिनकिंचन अद्यैवत्वांहनिष्यामिपश्यमेविक्रमंपरम् २७
नचेत्त्वांघातयिष्यामिशृणुतात्शपथंमम विप्रगोभ्रूणबालानांहत्यामेस्यात्संदैवहि २८ नारदउवाच वृकोपिश
पथंकृत्वाखरारूढोमहाखलः जघानतंत्रिशूलेनानिरुद्धंधन्विनांवरः २९ तच्छूलंवामहस्तेनगृहीत्वाकार्ष्णिनंदनः-

गरक्षकाः प्रजज्वलुर्महाराजमुंजपुष्पप्रतूलवत् ३ समुद्रपट्टनभवैः पीतारुणसितासितैः हरितैश्छिन्नवर्णैश्चसू-
क्ष्मैः काश्मीरजैरपि ४ हेमरत्नखचिद्भिश्चकंबलैः सहितागजाः प्रजज्वलुर्भूधरेराजन्वृक्षोशैलाइवाग्निना ५ शि
खारत्नैश्चामरैश्चहारैर्हैमैः परिच्छदैः उत्पतंतोहयायुद्धेमृगाइवदवाग्निना ६ सैन्यंभयातुरंदृष्ट्वादीप्तिमान्कृष्णनं
दनः मायावह्निप्रशांत्यर्थंपर्जन्यास्त्रंसमादधे ७ बाणाद्विनिर्गतामेघासांवर्तकगणाइव ववृषुर्जलधाराभिर्न-
दंतोभैरवंरवम् ८ आसारेणमहाराजप्रावृट्कालोभवत्क्षितौ पुंस्कोकिलाःकोकिलाश्चमयूराःसारसादयः-
९ मंडूकाःप्रजगुर्गीर्भिरिंद्रगोपाभिरेजिरे इंद्रचापेनदामिन्यामैथिलेन्द्रबभौनभः १० इत्थंशांतिंगतेवह्नौमहाना
भोमहासुरः प्राहिणोन्निशितंशूलंरुषादीप्तमतेत्वरम् ११ शूलंसर्पमिवायांतंदीप्तिमान्रोहिणीसुतः चिच्छेद
त्वसिनायुद्धेफणिनंगरुडोयथा १२ दशतंचोद्धुरंचोष्ट्रंमहानाभस्यवाहनम् दीप्तिमान्स्वेनखड्गेनसंजघानरणांग-
णे १३ द्विधाभूतःपपातोर्व्यांखड्गसंछिन्नकंधराः जगामपंचतामुष्ट्रोमहानाभस्यपश्यतः १४ महानाभोमहादै
त्योगजमारुह्यवेगतः शूलहस्तःपुनःप्रादान्नादयन्व्योममंडलम् १५ दीप्तिमानश्वमारुह्यसैंधवंचंचलासितम्-
तडित्प्रभेनखड्गेनबभौश्रीकृष्णनंदनः १६ तुरंगपार्ष्णिघातेनप्रोत्पतन्धरणीतलात् आरुढोहेमकुंभांतंगिरिशृं
गंयथाहरिः १७ खड्गेनशितधारेणदीप्तिमान्कृष्णनंदनः महानाभस्यसहसाशिरःकायादपाहरत् १८ बाणहर्षप्र-
कुर्वंतींसेनांतस्यदुरात्मनः जघानदीप्तिमान्सिंहोगजयूथंयथासिना १९ केचित्खड्गेनाभिहताःशेषादैत्याःपलायि
ताः देवादीप्तिमतोमूर्ध्निपुष्पवर्षंप्रचक्रिरे २० जगुःकिन्नरगंधर्वाननृतुश्चाप्सरोगणाः ऋषयोमुनयोदेवास्तुष्टुवुः
श्रीहरेःसुतम् २१ इतिश्रीमद्ग॰ विश्वजित्खंडेना॰ ब॰ सं॰ महानाभवधोनामषट्त्रिंशोऽध्यायः ३६ नारदउवाच



188

णीसुतः ६ कालनाभंसाधुपदैः पूजयामाससंगरे प्रद्युम्नस्संधनुर्नीत्वाबाणमेकंसमादधे ७ कोदंडमुक्तोविशिखस्तत
क्रोडंदीर्घरूपिणम् समुन्नीयभ्रामयित्वास्वर्लोकेलक्षयोजनम् ८ आकाशात्पातयामाससमुद्रेभीमनादिनी प्रद्यु
म्नोभगवान्साक्षाद्द्वितीयंबाणमादधे ९ सोपिबाणःसमुन्नीयकालनाभंमहाबलम् भ्रामयन्पातयामासचंद्रावत्यां
बलात्पुरीं १० कालनाभःप्रपतितःकिंचिद्व्याकुलमानसः गृहीत्वाथगदांगुर्वींलक्षभारविनिर्मिताम् ११ रणप्रा
प्तोयदुबलंपोथयामासदैत्यराट् गजान्रथान्हयान्वीरान्गदयावज्रकल्पया १२ पातयामासवेगेनमहावातोयथा-
तरून् कांश्चित्कराभ्यांप्रोन्नीयचिक्षेपगगनेबलात् १३ अंबरान्तेनिपेतुःकोराजन्वर्षोपलाइव तदागदांसमादाय-
सांबोजांबवतीसुतः १४ तताडमूर्द्धितंदैत्यंकालनाभमहास्फुरम् तयोर्युद्धमभूद्घोरंगदाभ्यांरणमंडले १५ विस्फु
लिंगान्क्षरंत्योर्द्वेगदेचूर्णीबभूवतुः अन्येगदेसमादायतस्थतुःसंगरेचतौ १६ कालनाभस्तदाप्राहसांबंजांबवतीसु
तम् एकेनापिप्रहारेणहन्मित्वान्नात्रसंशयः १७ पूर्वप्रहारंकुरुमेइतिसांबोवदद्रणे कालनाभोथगदयासां
बंमूर्द्धिततारह १८ गदोपरिगदांनीत्वासांबोजांबवतीसुतः जघानगदयादैत्यंकालनाभमुरस्थले १९ गदयाभि-
न्नहृदयेउद्वमन्रुधिरंमुखात् व्यसुःपपातभूपृष्ठे वज्राहतइवाचलः २० अभूज्जयजयारावःसाधुवादःसतांनृप -
देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा २१ सांबसेनोपरिस्फुराःपुष्पवर्षंप्रचक्रिरे विद्याधर्यश्चगंधर्वाननृतुश्चजगुर्मुदा
२२ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेकालनाभदैत्यवधोनामपंचत्रिंशोऽध्यायः
३५ नारदउवाच कालनाभेथपतितेमहान्कोलाहलोभवत् उष्ट्रारूढोमहानाभोदैत्यप्राप्तोरणांगणे १ मुखा
दग्निंसमसृजन्मायावीदैत्यपुंगवः तेनाग्निनाभूमिवृक्षाजज्वलुश्चदिशोदश २ वीराणांकंचुकोष्णीषाकटिबध्वां

सोपिद्रुमंसंगृहीत्वाप्रहिणोभानुमूर्द्धनि हरिश्मश्रुर्महादैत्योरक्ताक्षःक्रोधमूर्च्छितः २० गजंगृहीत्वाशुंडायांतेन-
भानुंतताडह भानुश्चान्यंगजंनीत्वागृहीत्वानङ्गजंकरे २१ हरिश्मश्रुंमहादैत्यंगजेनाभ्यहनदृढम् महच्चीत्कार
कुर्वंतंगजंनीत्वानिपात्यतम् २२ तस्यदंतोसमुत्पाट्यताभ्यांभानुंतताडह भानुमाकाशवागाहकूर्चेमृत्युः किल
स्यच २३ वरेणशिवदत्तेनमोज्झितोहंमहासुरः इतिश्रुत्वावचोभानुर्धावन्क्रोधप्रपूरितः २४ संगृहीत्वाभुजाभ्यां
तंपादयोःप्रणदन्मुहुः भ्रामयित्वामहाराजसर्वेषांपश्यतांसताम् २५ पातयामासभूपृष्टेकमंडलुमिवार्भकः-
मुखात्कूर्चंसमुन्मीयसमुत्पाट्यकरोजसा २६ नताडमुष्टिनामूर्ध्निहरिश्मश्रुंमहासुरम् तदामृत्युंगतेदैत्येहरि-
श्मश्रौनृपेश्वर २७ देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा अभूज्जयजयारावोननृतुर्देवनायकाः २८ प्रसन्नादिवि
जाराजन्पुष्पवर्षंप्रचक्रिरे इत्थंश्रीकृष्णपुत्राणांविक्रमःपरमाद्भुतः २९ मयातेकथितःपुण्यःकिंभूयःश्रोतुमिच्छ-
सि ३० इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेहरिश्मश्रुदैत्यवधोनामसप्तत्रिंशोऽ-
ध्यायः ३७ बहुलाश्वउवाच हरिश्मश्र्वादिकान्भ्रातॄन्मृतान्ज्ञात्वामहासुरः शकुनिःकिंचकाराग्रेव
देतन्मुनिसत्तम १ नारदउवाच हरिश्मश्रौहतेराजन्शकुनिःक्रोधमूर्च्छितः रणांगणेप्राहदैत्यान्भ्रातृशोक
परिप्लुतः २ शकुनिरुवाच हेपौलोमकालकेयाःसर्वेशृणुतमद्वचः अहोदैवबलंयेनकिन्नभूयाद्विपर्ययः ३
कालनाभेनमेभ्रात्रासमुद्रमथनेयमः जितःपूर्वंसोपिदेवात्मनुष्यैरिहमारितः ४ शंबरःसूर्यजित्साक्षात्का-
र्ष्णिनाशिशुनाजितः उत्कचःशक्रजेतापिमहाबलमहाबलः ५ सोपिबालेनकृष्णेनमारितोनारदाच्छ्रुतम् समुद्र
मथनेपूर्वमसुराणांचपश्यताम् ६ वह्निर्जितोहियेनापिदृष्टःसोपिनिपातितः यस्याग्रेवरुणःपूर्वंयुद्धभीतःपलायि-

महानाभंमृतंश्रुत्वासेनांवीक्ष्यपलायिताम् दैत्यस्तिमिंगिलारूढोहरिश्मश्रुःसमाययौ १ हरिश्मश्रुस्तदादैत्योरुषाप्रस्फु-
रिताधरः उवाचपुरुषंवास्येयादवानांचशृण्वताम् २ हरिश्मश्रुरुवाच यूयंसर्वेपिमेभक्त्यामनुष्याःस्वस्थविक्रमाः
शस्त्रैर्जयथयदीन्वान्वैपौरुषंकिंभवादृशे ३ भवतांबलवान्कोपिविनाशस्त्रंमयासह करोतिमल्लयुद्धंवैपौरुषंयेनदृ
श्यते ४ नारदउवाच इत्थंदैत्यवचःश्रुत्वाहृष्टालक्ष्मोद्भवपुः सर्वेबभूवुस्तेतूष्णींप्रशशंसतःपरस्परम् ५ सर्वेषां
पश्यतांभानुःसत्यभामात्मजोबली त्यक्त्वाशस्त्राणिसहसातस्थौकृष्णंस्मरन्रणे ६ तिमिंगिलात्समुत्तीर्य्यहरिश्म
श्रुर्महाबलः तस्थौतत्सन्मुखेराजन्भुजमास्फोटयन्बलतः ७ भुजाभ्यांचभुजौबध्वानोदनंचक्रतुर्बलात् दंतैर्ग
जाविववनेप्रहरंतौपरस्परम् ८ नोदयामासतंभानुंसदैत्यःशतयोजनम् भुजाभ्यांराजराजेंद्रसिंहःसिंहमिवौजसा
९ ततःपुनःकृष्णसुतोहरिश्मश्रुंमहासुरम् नोदयामाससहसासहस्रयोजनंबलात् १० कंधरेस्वभुजांकृत्वा
कटौचविनिधायतम् भानुजानौसंगृहीत्वापातयामासदैत्यराट् ११ भानुस्तंपृष्ठदेशेपिसंनिधायभुजौजसा गृ-
हीत्वाजंघयोर्दैत्यंपातयामासभूतले १२ अथतौपुनरुत्थायभुजावास्फोटयन्तस्थतुः त्वरंतंबलिनंराजन्सुप
र्णंफणिनामिव १३ दैत्योभुजौजसानीत्वाभानुंश्रीकृष्णनंदनम् चिक्षेपस्वोदनंवायुराकाशेलक्षयोजनम् १४
आकाशात्पतितोभानुःकिंचिद्व्याकुलमानसः प्रह्लादइवशैलांगाद्रक्षितःकृपयाहरेः १५ हरिश्मश्रुंसंगृहीत्वा
दीर्घश्मश्रौहरेःसुतः भ्रामयित्वाथचिक्षेपव्योम्नितंलक्षयोजनम् १६ आकाशात्पतितःसोपिकिंचिद्व्याकुलमा
नसः मुखेकृत्वास्वकंकूर्चंमुष्टिनातंतताडह १७ मुष्टामुष्टिरणेराजन्बभूवघटिकाद्वयम् निपिष्टांगोहरिश्मश्रु
चूर्णताभानुमूर्द्धनि १८ हरिश्मश्रुंमहादैत्यौरक्ताक्षःक्रोधमूर्च्छितः भानुर्दृढंसंगृहीत्वाप्राक्षिपत्तस्यमस्तके १९

२७ द्वात्रिंशद्योजनंमार्गंनिपपातविदेहराट् कार्ष्णिंसमागतंदृष्ट्वाशकुनिःक्रोधपूरितः २८ सहस्रैर्बाणपटलैःसं-
जघानरणांगणे प्रद्युम्नस्यरथोराजन्संभ्रमन्घटिकाद्वयम् २९ शतक्रोशेपपातोर्व्यांशकमंडरिवाहतः सर्वेविसि-
ष्णुःशकुनेर्बलंदृष्ट्वाथयादवाः ३० जघ्नुर्नानाविधैःशस्त्रैर्दैत्यमद्रियथागजाः गदोर्जुनोनिरुद्धस्कसांबोजांब
वतीसुतः ३१ धनुष्टंकारयंतस्थेपुनर्युद्धेसमागताः अथकार्ष्णिर्महाबाहुर्वायुवेगरथंस्थितः ३२ धनुष्टंकार-
यन्राजन्प्राप्तोभूद्रणमंडले प्रलयार्णवसंघट्टभीमसंघर्षनादिनीम् ३३ धनुर्ज्यांशकुनेःकार्ष्णिश्छिच्छेददः
शभिःशरैः सहस्रेश्चसहस्राश्वान्रथंचविशिखैःशतैः ३४ सारथिंबाणविंशत्यापातयामासभूतले त-
तोरथंसमुत्थाप्यहयैरन्यैर्नियोजितम् ३५ अन्यंसूतंरथंकृत्वारथमारुह्यदैत्यराट् संदधेजननीराजन्कोद
डेचंडविक्रमे ३६ शतंबाणान्समाकृष्यनिषंगात्पृष्ठतोगतान् चापेनिधायकर्णांतमाकृष्यप्राहमन्मथम् ३७
शकुनिरुवाच सर्वेषांघातयिष्यामिशत्रुमुख्यंमदोत्कटम् पश्चात्सेनांहनिष्यामियदूनांस्वस्थतेजसाम् ३८
प्रद्युम्नउवाच सदावयःकालबलेनदेहिनांप्रयातिछायेवसुखेमुहुर्मुहुः तथाचदुःखचसुखंगतागतंघनाबलेवायु
बलेमरवर्यथा ३९ कृताकृषिंसिंचितियासर्वतः छिनत्तिदात्रेणयथाकृषीबलः तथाब्धिकालःस्वकृतांजनाव-
लीत्थरुत्स्ययंयातित्रिगुणैर्विलुंपति ४० इदंकरिष्यामिकरोबभूममममेदमस्तीतितदेवमाब्रुवन् अहंस्कृर्वीदुःखयु-
तःकृहज्जनोलोकस्त्वहंकारविनीहितोसुरः ४१ धन्यस्त्वंराजशार्दूलमुनीन्वाग्भिर्विडंबयन् स्वभावोदुस्त्तजो-
नृणांपृथग्भूतस्त्रिभिर्गुणैः ४२ नारदउवाच एवंब्रुवाणमन्योन्यंप्रद्युम्नशकुनीमृधे युयुधातेमैथिलेंद्रशक्रवृ-
त्राविवस्थितौ ४३ इतितोधनुषोमुक्तान्विशिखान्सूर्यरश्मिवत् चिच्छेदकार्ष्णिर्बाणेनकुवाक्यनेवमित्रताम् ४४-

१९०

नः ७ भूतसंतापितःसोपिमारितस्तुच्छविक्रमैः येनपूर्वंमहाबुद्धेविक्रमैस्तोषितःशिवः ८ सद्वकोवृष्णिभि
स्तुच्छैर्मारितःसंगरेत्ववै महानाभेनसेभ्रात्राद्दिविवायुर्विनिर्जितः ९ मानुषैर्यादवैरत्रमारितःसोपिसांप्रतम् हा
देवयेनस्वर्लोकेजितःशक्रसुतोबली १० निपातितःसोपिचात्रहरिश्मश्रुश्चमानवैः तस्मादयादवींपृथ्वींकरिष्येशप
थंमम ११ जरासंधेनशाल्वेनदंतवक्त्रेणधीमता शिशुपालेनमित्रेणयुष्माभिःसहितोत्यहम् १२ सुतलाच्चसमाहूतै
र्दानवैश्चंडविक्रमैः देवान्जेतुंगमिष्यामिबाणासुरसमन्वितः १३ काष्ण्र्यादीनुद्धतान्सर्वान्वृष्णीन्जित्वादुरात्मनः से
न्द्रीकानमरान्बध्वाक्षिप्सेमेरुगुहासुखे १४ गोविप्रसुरसाधूंश्चछंदांसिविप्रमेवच यज्ञंश्चाद्भुतितिक्षांश्चनानातीर्थद
यांपुनः १५ हनिष्यामिनसंदेहःकरिष्यामिस्फुरवंततः धन्यःकंसोमहावीर्योदेवानांविजयीबली १६ नविद्यतेभूमि
तलेमित्रंमेपरमःसुहृत् नारदउवाच इत्युक्तःशकुनिर्युद्धेदानवेंद्रोमहाबलः १७ आययौदैत्यसहस्राप्रद्युम्नस्या-
पिसन्मुखे महाधनुःसमादायलक्षभारसमंदृढम् १८ मयेननिर्मितंतज्जाटंकारंसचकारह धनुष्टंकारशब्देनदिग्ग
जावधरीकृताः १९ निपेतुर्गिरयोनेकाविचेलुःसिंधवोनृप ननादसर्वंब्रह्मांडंचकंपेमंडलंभुवः २० वीरोपरिगतावी
राज्याघोषेणातिविह्वलाः रणाविदुद्रुवुर्नागाउत्पतंतोहयामृधे २१ एवंपलायितंसर्वंअकस्माद्भयविह्वलाः तदा
गदादयोवीरामाजग्मुःस्यंदनेस्थिताः २२ धनुष्टंकारयंतस्तेमहाबलपराक्रमाः शकुनिर्दशभिर्बाणैर्विव्याधार्जुनमा-
दधे २३ गांडीवीसरथस्तस्माच्चतुःकोशेपपातह गदंचबाणविंशत्याशकुनिर्युद्धदुर्मदः २४ चिक्षेपसरथंराजन्ना
दयन्व्योममंडलम् चत्वारिंशाच्छरैर्वीरोनिरुद्धंधन्विनांवरम् २५ विव्याधचरथंराजन्नादयन्व्योममंडलम् साम्बोरथो
निरुद्धस्यषोडशक्रोशमास्थितः २६ सांबंचशीतबाणैश्चततताडशकुनिर्मृधे सांबोपिसरथोराजन्नंबरेसमरेरणात्-

हियेनापित्वंतंशक्रभाशुभमनरेषुतिष्ठत्सुतमेवगच्छति ४ ततोविजेष्यामिदृढेनकर्मणारिपुंभवंतंशपथःकृतोमया स
द्यःकुरुत्वंप्रतिकारमेवतत्येनापिनस्याद्भुवितेपराजयः ५ प्रद्युम्नउवाच कर्मप्रधानंयदिमन्यसेभवान्कालंवि-
नानहिफलंनविद्यते कृत्तेचपाकेयदिविघ्नताक्वचित्सदाबलिष्ठंसमयंविदुःपरे ६ पाकप्रकारेसतिपाकसाधनंक
दापिकर्त्तारमृतेनजायते नदंतिकर्त्तारमतःपरंपरेनकर्मकालंशृणुदैत्यपुंगव ७ योगंविदुःकेपियदात्मयोगतःक
थंभवेत्क्वोकिलपाकसाधनम् सर्वंहिवायोगमृतेवृथाभवेत्कालेतथाकर्मणिभर्तरिस्थिते ८ योगंतथाकर्मणिक
र्तरिस्थितेकालेविधिःसांख्यमृतेवृथाभवेत् पाकप्रकाराद्यविचारकृद्यदानतर्हिपाकस्ययथाप्रसाधनम् ९ योगक
र्मविधिकारकसंख्यैर्ब्रह्मपूरुषमृतेनहिकिंचित् तन्नमामिपरिपूर्णतमंशंयेनविश्वमखिलंविदितंरवे १० शकुनि
रुवाच हेप्रद्युम्नमहाबाहोत्वंसाक्षाज्ज्ञानसेवधिः तवदर्शनमात्रेणनरोयातिकृतार्थताम् ११ येत्वत्संगंसमा
साद्यवार्ताकुर्वन्तिनित्यशः तेषांतुमहिमानंहिवक्तुंनालंचतुर्मुखः १२ नारदउवाच इत्युक्त्वाशकुनिर्दैत्योमा
यावीदैत्यराड्बली शिक्षितंमयदैत्येनरौरवास्त्रंसमादधे १३ महोरगादंतशूकावृश्चिकाश्चवृषोत्कटाः कोटि-
शोनिर्गताराजन्करालारौद्ररूपिणः १४ तद्दंशितंबलंसर्वंफूत्कारैर्मत्ततांगतम् वीक्ष्यकार्ष्णिर्महाबुद्धिर्गरुडा
स्त्रंसमादधे १५ कोटिशोगरुडाबाणान्नीलकंठाकलापिनः अन्येचपक्षिणोभीमानिर्गतास्तस्यपश्यतः १६
अग्रसन्नुरगान्युद्धेदंडशूकान्सवृश्चिकान् तीक्ष्णतुंडावृहत्पक्षाःक्षणान्तेदृश्यतांगताः १७ दैत्येपिराक्षसीमा-
यांगांधर्वींगौह्यकींपुनः पैशाचींसंदधेराजन्शकुनिर्युद्धदुर्मदः १८ तद्बाणनिर्गताभूतास्तथाप्रेताश्चकोटिशः
अंगारान्समुमुचुस्तेवैकरालाःकृष्णारूपिणः १९ ज्ञात्वाथतामसींमायांपैशाचींमनिकेतनम् सत्वास्त्रंसंदधेबाणेषु

लक्षभारमयींगुर्वींगृहीत्वामहतींगदाम् जघानमूर्ध्निप्रद्युम्नंशकुनिर्युद्धदुर्मदः ४५ प्रद्युम्नोभगवान्साक्षाद्गदयाव
ज्रकल्पया काचपात्रंयथादंडस्तद्गदांशतधाकरोत् ४६ अथदैत्योरुषाविष्टोत्रिशूलंनस्फुरद्दृचा प्रद्युम्नस्यमहन्मू
र्ध्निशब्दमुच्चैःसमुच्चरन् ४७ त्रिशूलेनहरेःपुत्रस्त्रिशूलंशतधाछिनत् कुंतंतीक्ष्णंशकुनयेप्राहिणोद्रुक्मिणीसुतः ४८
कुंतेनविद्धहृदयःकिंचिद्व्याकुलमानसः परिघेणहरेःपुत्रंसंतताडरणांगणे ४९ यमदंडनतेनीत्वारुक्मिणीनंदनो-
बली चूर्णीचकारदैत्यस्यपरिघंपरमाद्भुतम् ५० चचलाश्वाश्चसहसायमदंडेनभारतः सारथिस्यंदनंदिव्यंपातया
मासभूतले ५१ सूतेमृत्युंगतेसाश्वेचूर्णीभूतेरथेनृप परिघेनमहादैत्यःखड्गंजग्राहरोषतः ५२ प्रद्युम्नोपिमहावी
रोयमदण्डेनमैथिल द्विधाचकारतत्खड्गंपन्नगंगरुडोयथा ५३ यमदंडेनतंदैत्यंस्कंधेकार्ष्णिस्तताड ह तस्याघ
तेनशकुनिःसद्योमूर्च्छामवापह ५४ दैत्यसेनांविवेशाशुश्रीकृष्णःक्रोधमूर्च्छितः निपातयन्महावीरान्वनेवैश्वान-
रोयथा ५५ गजांस्तुरंगांश्चरथान्दैत्यांस्तानाततायिनः पातयामासयमवत्यमदंडेनमाधवः ५६ छिन्नपादा-
श्छिन्नमुखाश्छिन्नांगाश्छिन्नबाहवः दैत्यादनुजायुद्धेमूर्च्छितानिधनंगताः ५७ यमरूपधरंदृष्ट्वाप्रद्युम्नंभीमवि
क्रमम् त्यक्त्वास्वंस्वंरणंकेचित्दुद्रुवुस्तेदिशोदश ५८ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुला
श्वसंवादेशकुनियुद्धवर्णननामाष्टत्रिंशोऽध्यायः ३८ नारदउवाच शकुनिःपुनरुत्थायस्वबलंवीक्ष्यपीडि-
तम् जग्राहसस्मराजन्लक्षभारसमंधनुः १ विधायबाणंविशिखंकोदंडेचंडविक्रमे कार्ष्णिमाहरणेराजन्श
कुनिर्दैत्यराड्बली २ शकुनिरुवाच कर्मप्रधानंजगतीतलेमहत्कर्मैवसाक्षाद्गुरुरीश्वरःप्रभुः उच्चावचत्वंभव-
तीहकर्मणातेनैवराजन्विजयःपराजयः ३ गवांसहस्रेषुयथाहिवत्सकःस्वमातरंविंदतिपश्यतांसताम् तथा

३८ चलद्घाणोभीषणास्योहुंकारेणातिभीषणं सिंहनादंचकारोच्चैरास्थितोरणमंडले ३९ ननादतेनब्रह्मांडंस-
सप्तलोकैर्बिलैःसह चिचेलुर्दिग्गजास्तारााराजद्भूखंडमंडलम् ४० गृहीत्वात्स्ववरेशैलान्सरक्षान्नखरैःखरैः पात
यामासभूपृष्ठेदैत्यानांचप्रपश्यताम् ४१ रक्षोगणान्संगृहीतोपातयामासवेगतः यातुधानगणान्पश्चात्ससमर्द
हरीन्मृधे ४२ सिंहान्व्याघ्रान्वराहांश्चसंविदार्यनखैःखरैः चिक्षेपगगनेविष्णुस्तत्रैवांतर्दधेपुनः ४३ नाशंगता
यामायायांराक्षसस्यारुक्मिणीसुतः शंखंदध्मौविजयदंमौलेंद्रंचरणांगणे ४४ अभूज्जयजयारावोदुंदुभिध्व
निमिश्रितः प्रद्युम्नस्योपरिस्फुराःपुष्पवर्षंप्रचक्रिरे ४५ स्वमायांनिर्गतायांचशकुनिर्दैत्यपुंगवः सरथःसैनिकैः
सार्द्धंतत्रैवांतर्हितोभवत् ४६ मायांचकारदैतेयीमयदैत्यप्रदर्शिताम् हस्तिशुंडासमाधारावर्षंतोतितडित्स्वनः
४७ सांवर्तकगणामेघाआजग्मुःपश्यतांसताम् क्षणात्सदासमुद्रास्तेचंडवातेनवेपिताः ४८ ग्रुधितारु
क्मिसंधर्षावर्तैर्ताविततभूरुजाः भूमंडलंसजनितंस्ताविततंचात्मभिःसमम् ४९ दृष्ट्वाथयादवाःसर्वेप्रापुस्तत्रभयं
करम् वदंतोरामकृष्णोतिविस्मृत्यस्वपराक्रमाः ५० क्षणमात्रेणराजेंद्रतूष्णींभूताःपराजिताः तदाकार्ष्णिर्म
हाबाहुःकोदंडेचंडविक्रमे ५१ बाणंनिधायसहसाश्रीकृष्णास्त्रंसमादधे नवार्ककोटिद्युतिमन्महामहोविरं
जयन्मैथिलपट्टिशोदशः समागतंयत्रकुशस्थलीदृशःस्वयंपरंस्वार्थमिवात्मवांछितम् ५२ तस्मिन्परेतेजसि
नूतनांबुदश्च्छविंसुवर्णांबुजरेणुवाससम् भृंगावलीकूजितकुंतलावलीस्रजंदधानंनववैजयंतीं ५३ श्रीवत्सरत्नो
त्तमचारुवक्षसंचतुर्भुजपद्मविशालवीक्षणम् स्फुरत्किरीटीवरहारनूपुरंलसन्नवार्कस्फुतिहेमकुंडलम् ५४ विलो
क्यदेवंयदवोतिहर्षिताःपरंप्रणेमुःकृतहस्तसंपुटाः प्रचक्रिरेमैथिलपुष्पवर्षिणोमराजयारावमतीवसर्वतः ५५ त

द्धाकार्ष्णीहरेः सुतः २० तस्माद्विनिर्गताराजन्कोटिशोविष्णुपार्षदाः जघ्नेपिशाचींतांमायांपन्नगींगरुडोयथा २१ मयांदैत्योपिमायावीगौत्यकींसंदधेपुनः संभूताःकोटिशोमेघागर्जंतोभीमरूपिणः २२ विष्टामूत्रंच-रुधिरंमेदोमज्जास्थिवर्षिणः ज्ञात्वाथगौह्यकींमायांप्रद्युम्नोभगवान्हरिः २३ तन्नाशार्थंमहाराजब्रा शास्त्रंसंदधेत्विषा तद्बाणाद्यज्ञवाराहोनिर्गतोघर्घरस्वनः २४ सद्योविश्वायवालेनदंष्ट्रयातीक्ष्णयाघना न् विदारयन्रणेरेजेवेणून्मत्तगजोयथा २५ छित्वाथगौह्यकींमायांचकाररणमंडले युद्धंनदृश्यतेतत्रहेमसौं धानिकोटिशः २६ वस्त्रालंकारयुक्तानिबभूवुःपश्यतांसताम् विद्याधर्य्यश्चगन्धर्वागायंतोनृत्यतत्पराः २७ मृदंगतालवादित्रैर्मोहनैरागमिश्रितैः हावभावकटाक्षैश्चतोषयंत्योजनान्नृप २८ मोहितास्सुंदरीरामाश्या माकमललोचनाः तासांलावण्यरागाभ्यांमोहंयातेषुवृष्णिषु २९ गांधर्वींमोहिनींमायांज्ञात्वाकार्ष्णिर्महाब लः संदधेतत्संहारार्थंज्ञात्वास्त्रंरणमंडले ३० ज्ञानोदयेतदायातेमोहनाशोनृपेश्वर नाशंगतायांमायायां-शकुनिःक्रोधमूर्च्छितः ३१ राक्षसींसंदधेमायांमायावीदैत्यपुंगवः सपक्षैःपर्वतैराजन्क्षणाच्चछादितंनभः ३२ महांधकारोभूत्पृथ्व्यांपराद्धैंचयनैरिव दुग्धवृक्षशिलास्थानिकबंधरुधिराणिच ३३ गदापरिघनिस्त्रिं शमुसलादीनिसर्वतः अंबराद्ववृषुःशैलामेघाइवविदेहराट् ३४ रक्षोगणाःशूलहस्ताश्छिंदिभिंधीति वादिनः यातुधानाश्चशतशोभक्षयंत्योद्विपान्हयान् ३५ सिंहव्याघ्रवराहाश्चदृश्यंतेरणमंडले मर्दयंतो नरवैर्नागाश्चवंर्द्धंतोतनूनिवै ३६ पलायमानंस्वबलंदृष्ट्वाकार्ष्णिर्महाबलः जेतुंतांराक्षसींमायांनृसिंहास्त्रं समादधे ३७ आविर्भूतोहरिःसाक्षान्नृसिंहोरौद्ररूपधृक् स्फुटत्सटोललज्जिह्वोनखलांगूलभूषितः

कूलाभ्रातरस्तव मारितासंगरेभर्तुः प्रोद्धदादैत्यपुंगवाः १६ मांपाहियोद्धुंयदुभिरागतोभगवान्हरिः देहि-
तस्मैबलिंसद्योयेनश्रेयोह्यवाप्स्यसि १७ शकुनिरुवाच हनिष्यामियदून्सैन्यैर्मेघातेभ्रातरोबलात् मृ-
त्युर्मेनास्तिभूमध्येशिवस्यापिवरेणमे १८ उपद्वीपेचंद्रनाम्निपतंगेवर्ततेसुभे मेजीवरूपीतुशुकोवर्ततेसांप्र
तंप्रिये १९ शंखचूडेनसर्पेणरक्षितोहर्निशंशुकः एतत्कोपिनजानातिकथंमृत्युश्चमेभवेत् २० नारदउवाच
शुकवार्तांततःश्रुत्वागरुडोदिव्यवाहनः उपद्वीपंतुचंद्राख्यंगंतुंतस्मान्मनोदधे २१ उत्पतन्गरुडोवेगात्समुद्रस्य
तटेगतः विचिन्वन्द्वीपचंद्राख्यमाकाशेविचरन्खगः २२ शतयोजनविस्तीर्णेसमुद्रेभीमनादिनी पक्षिराट्सिं
हलंप्रापलतावृंदमनोहरम् २३ तत्रपप्रच्छगरुडःकिंनामास्यजनान्प्रति सिंहलोयमितिश्रुत्वागरुडंप्रोत्य
तन्खगः २४ लंकांप्राप्तोमहावेगात्रिकूटशिखरेनृप लंकांप्राप्यततोवेगात्पांचजन्यंजगाम्ह २५ पांचजन्या-
ब्धिनिकटेक्षुधितःपक्षिराड्बली प्रसत्यमीनान्जग्राहतीक्ष्णयातुंडयाभृशम् २६ तत्रचैकोमहानक्रोलंबितो
योजनद्वयम् पादेगृहीत्वागरुडंविचकर्षजलांतरे २७ बलेनगरुडस्तस्यचकाराकर्षणंतटे तयाराकर्षणराज
न्मिथोभूत्घटिकाद्वयम् २८ प्रचंडवेगोगरुडस्तीक्ष्णयातुंडयाचतम् तताडपृष्ठेधृष्टांगंदंडेनयमराड्यथा २९
नक्ररूपंविहायाशुसोभूद्विद्याधरोमहान् नत्वाश्रीगरुडंसाक्षात्प्राहप्रहसिताननः ३० विद्याधरउवाच .
अहंविद्याधरःपूर्वंनाम्नावैहेमकुंडलः आकाशगंगायांस्नातुंगतोदिविजमंडले ३१ तत्रस्नानंप्रकुर्वंतंककुत्स्थमु
निसत्तमम् पादेगृहीत्वाहास्येनजलांतेगतवानहम् ३२ मांशशापककुत्स्थोपित्वंनक्रोभवदुर्मते मयाप्रसादि-
तःशीघ्रंप्रसन्नःसन्वरंददौ ३३ तार्क्ष्यतुंडप्रहारेणनक्रत्वात्त्वंविमुच्यसे तस्यशापादद्यमुक्तःकृपयातवसुव्रत -

दैत्यशकुनेः सज्यंकोदंडंप्राच्छिनद्रुषा शार्ङ्गमुक्तेनतच्छार्ङ्गिबाणेनैकेनलीलया ५६ सञ्छिन्नधन्वाशकुनिस्त्य-
क्तासुद्धप्रधर्षितः हेतिंसंहेतिमानेतुंययौचन्द्रावतीपुरीम् ५७ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडे
नारदबहुलाश्वसंवादेश्रीकृष्णागमननामैकोनचत्वारिंशोऽध्यायः ३९ नारदउवाच दैत्येगतेथशकुनिर्भंग-
वान्कमलेक्षणः कार्ष्ण्यादियादवान्सर्वानाहूयेत्थमुवाचह १ श्रीभगवानुवाच दैत्योयंशकुनिः पूर्वंसुमेरोः
पार्श्वमुत्तरे चतुर्युगंनिर्जितान्नस्तपसातोषयच्छिवम् २ चतुर्युगेव्यतीतेषुसाक्षाद्देवोमहेश्वरः प्रसन्नोदर्शनं
दातुंवरंब्रूहीत्युवाचह ३ नत्वाथशकुनिर्दैत्यः कृतांजलिपुटः शनैः हृष्टरोमाश्रुपूर्णाक्षः प्राहगद्गदयागिरा ४-
मृतः सन्भूमिसंस्पर्शात्भूयात्संजीवितप्रभो आकाशेमेमृतिर्देवमाभूयाद्धृदिकाह्वयम् ५ दैत्येनोक्तोहरः सा-
क्षाद्दत्वातस्मैवरद्वयम् पंजरस्थंशुकंदत्वाप्राहदैत्यंनतान्ननम् ६ जीवंक्षुपंशुकंचैनंरक्षदैत्यसुदानव अस्मि-
न्मृतेवेज्ञातव्यंनिधनंस्वंत्वयासुर ७ इतिदत्वावरंतस्मैरुद्रश्चांतरधीयत तस्मात्तस्यवधोदुर्गेभविष्यतिशुकेमृ-
ते ८ नारदउवाच इत्युक्त्वाविष्णुसद्दासिभगवान्देवकीसुतः सुपर्णंशीघ्रमारुह्यप्राहप्रहसिताननः ९ श्रीभ-
गवानुवाच शृणुताक्ष्र्यंमहाबुद्धेगच्छचंद्रावतींपुरीं शतयोजनविस्तीर्णांदैत्यसेनासमाकुलाम् १० प्रासादैग-
गनस्पर्शैर्हैमरत्नमनोहरैः विचित्रोपवनैराजंशोभितांदैत्यपुंगवैः ११ दुर्गैर्दुर्गैर्द्वारदेशेरक्षितांदैत्यपुंगवैः तानुद्र-
ष्टुंगरुडोराजन्सूक्ष्मरूपंदधारह १२ अरक्षितोदैत्यवृंदैः पश्यन्प्रासादतोलिकाः तेषूत्स्तन्मूलपतंछकुनेर्मंदि-
रंगतम् १३ प्रेक्षन्शुकंदैत्यजीवंक्षणंतत्रस्थितोभवत् शुद्धार्थदंशितंलब्धशकुनिर्दैत्यपुंगवम् १४ नानाशस्त्र-
धरंवीरंक्रोधपूरितमानसम् गृहीत्वातंपरिकरेप्राहराजन्मदालसा १५ मदालसोवाच राजन्सर्वोपिसुहृदोन-

नोदधे पलायितानांदैत्यानांतावत्कोलाहलोमहान् ५३ शुकोनीतःशुकोनीतव्रदतामंबरेनृप तच्छब्दोदिक्षुसैन्या
नांगतशब्दस्त्वश्रृण्वताम् ५४ दिविभूमौसर्वतोपिब्रह्मांडेपिप्रपूरितः शुकोनीतइतिश्रुत्वाशकुनिःशंकितोसुरैः ५५
शूलंनीत्वाततःसद्यश्चंद्रावत्यांसमुत्थितः गरुडेनशुकंनीतंश्रुत्वाक्रुद्धःसमन्वयात् ५६ तच्छूलताडितस्तार्क्ष्योन-
जहौमुखतःशुकम् सप्तद्वीपान्सप्तसिंधून्निरीक्षन्सगतःखगः ५७ तमन्वधावद्दैत्येंद्रोदिक्षोदिक्षुदिशांतरे भ्रम
न्नागातकोराजन्नाकाशेकोटियोजनम् ५८ दैत्यत्रिशूलक्षतभृन्नजहौमुखतःशुकम् सपंजरःशुकोराजन्नाकाशे
लक्षयोजनम् ५९ पपातोपलवद्वेगात्सुमेरोगिरिमूर्द्धनि पंजरोगात्स्वगस्तत्रव्यशीर्णोभूद्व्यसुःशुकः ६० गरुडो
थमहायुद्धेकृष्णपार्श्वंसमागतः दैत्यःखिन्नमनाराजन्पुरीचंद्रावतींययौ ६१ इतिश्रीमद्गर्गाचार्यसंहितायांवि
श्वजित्खंडेनारदबहुलाश्वसंवादेगरुडागमनेनामचत्वारिंशोऽध्यायः ४० नारदउवाच दैत्यान्शेषान्समा-
नीयनानायुद्धधरोबली उच्चैःश्रवसमाहूयहयंदिव्यंमनोहरम् १ धनुष्टंकारयन्वीरःशकुनिःक्रोधमूर्च्छितः आ
ययौसन्मुखेयोद्धुंश्रीकृष्णस्यापिसन्मुखे २ पुनःप्राप्तंदैत्यसैन्यंशकुनिंयुद्धदुर्मदम् तंवीक्ष्ययादवाःसर्वेजगृहुः
स्वायुधानिच ३ दैत्यानांयदुभिःसार्द्धंघोरंयुद्धंबभूवह वीरैःसंयुयुधुर्वीराःसिंहाःसिंहैरिवाहवे ४ सर्वेषामग्र-
तःप्राप्तःकोदंडंनादयन्मुहुः शकुनिर्मेघवद्राजंश्चक्रेनाराचतुर्दिनम् ५ बाणांधकारेसंजातेभगवान्गरुडध्वजः-
शार्ङ्गीःशार्ङ्गेणधनुषायथार्द्रेणघनोबभौ ६ श्रीकृष्णोभगवान्साक्षाच्छकुनेरसुरस्यच चिक्षेपबाणपटलंबाणेनै
केनलीलया ७ आकृष्यकर्णपर्यंतंकोदंडेशकुनिर्मृधे तताडदशभिर्बाणैःश्रीकृष्णंहृदिमैथिल ८ प्रलयाब्धि
महावर्तभीमसंघर्षनादिनीम् धनुर्ज्यांशकुनेःशौरिश्चिच्छेददशभिःशरैः ९ मायावीशकुनिर्दैत्यःशतरूपीबभूवह-

३४ नारदउवाच इत्युक्त्वाचगतेस्वर्गेविद्याध्रेहेमकुंडले उड्डितोगरुडस्तस्मात्पक्षाभ्यांव्योममंडले ३५ हरिणाख्यंचोपद्वीपंप्राप्तवान्वेगतःखगः अपांतरतमस्तत्रकरोतिविपुलंतपः ३६ तस्याश्रमेखगेशस्यपक्षचंद्रंपपातह तंदृष्ट्वाप्राहगरुडंअपांतरतमोमुनिः ३७ पक्षंनिधायमेमूर्ध्निगच्छपक्षिन्यथासुखम् पक्षंनीत्वागतस्ताक्ष्येधृत्वातन्मस्तकेचतम् ३८ तत्समानापक्षिचन्द्रान्नेकान्सददर्शह प्राहातिविस्मितंतंताक्ष्यमपांतरतमोमुनिः ३९ यदायदाहिश्रीकृष्णावतारोभूत्तदातदा पक्षोपिगरुडस्यात्रपतत्येकःसदाखग ४० कल्पेकल्पेश्रीकृष्णचंद्रावतारेपक्षोपक्षोमूर्ध्निमेसोपिसोपि आनंत्यह्यंनतवंतंवदंतिपक्षिन्मूर्ध्निनोमिकृष्णायतस्मै ४१ नारदउवाच तच्छ्रुत्वाविस्मितस्ताक्ष्योनत्वातंमुनिपुंगवम् द्वीपरमणकंप्रागादुत्पतव्द्योममंडलात् ४२ सर्पेयेपिबलिंनीत्वाद्वीपंप्रावर्तकंगतः तत्रदिव्येसुधाकुंडेसुधांपीत्वाविराड्बली ४३ शुक्रद्वीपंतुसंप्राप्तःपप्रच्छकवचंद्रभाक् मयाप्रणोदितःपक्षीप्रययावुत्तरांदिशम् ४४ चन्द्रद्वीपंतुसंप्राप्तापर्वतेयतवेगतः जलदुर्गंवन्हिदुर्गंवैनतेयोददर्शह ४५ जलदुर्गेचंचुपुटेसर्वंपीत्वाविराड्बली वह्निदुर्गंचतेनापिसांत्वयामास मैथिल ४६ दरीमुखेशयानायेदैत्यलक्षंसमुत्थिताः तैःसार्द्धंसमभूद्युद्धंबभूवघटिकाद्वयम् ४७ कांश्चित्पादनखैर्युद्धेविददारखगेश्वरः कांश्चिद्दैत्यान्स्वपक्षाभ्यांपातयामासभूतले ४८ कांश्चिच्चंचुपुटेनापिगृहीत्वापक्षराड्बली पातयित्वागिरेःपृष्टेचिक्षेपगगनेबलात् ४९ केचिन्मृतास्तथाशेषादुद्रुवुस्तेदिशोदश इत्थंदैत्यवधंश्रुत्वादद्रीमध्येगतःखगः ५० चकारपादविक्षेपंशंखचूडोपरिस्फुरन् शंखचूडोपिगरुडंदृष्ट्वासोपिप्रधर्षितः ५१ शुकंजलेपंजरस्थंशीघ्रंत्यक्त्वापलायितः चंचुदेशेनतंनीत्वाशुकंसद्यःसपंजरम् ५२ प्रोत्पतन्नंबरेराजन्युद्धेगंतुम

कीयादवकुलंसंहारंकर्तुमुद्यतः ३० विवेशाशुमहादैत्योवनेवह्निरिवप्रभुः सतुरंगान्महावीरान्सशस्त्रांश्चातु
त्करान्गजान् ३१ संगृहीत्वाभुजाभ्यांस्वेप्राक्षिपल्लक्षयोजने कांश्चिद्गजान्मुखेधृत्वास्कंदयोरुभयोरपि ३२
कक्षयोरुभयोर्दैत्योबभौकालाग्निरुद्रवत् पद्भ्यांकराभ्यांदैत्यस्यत्रासंयातेमहामृधे ३३ हाहाकारोमहानासी
च्छ्रीकृष्णस्यमहात्मनः तदैवभगवान्साक्षाच्छ्रीकृष्णोविश्वरक्षकः ३४ सुदर्शनास्त्रंप्रायुंक्तसाधूनांरक्षणा
यवै बद्धस्कमुक्तंनिशितंसुदर्शनंलयार्ककोटिद्युतिमुज्ज्वलप्रभम् जहारसद्यःशकुनेर्दृढंशिरोयथाचवृत्रस्यप
विर्महामृधे ३५ तावद्गृहीत्वाशकुनिर्महामृधेचिक्षेपसद्योमृतमंबरेबलात् उत्क्षेपणंभोकुरुतेषुभिर्दिवियदून्
गिराश्रीपतिरित्युवाच ३६ नारदउवाच इत्थंहरेर्वचःश्रुत्वासर्वेयादवपुंगवा अंबरात्प्रपतंतंतंदुर्वर्णेश्चस्फुर
त्प्रभैः ३७ दैत्योदीप्तिमतोबाणैरंबरेशतयोजनम् गतःकंदुकवद्राजन्सर्वलोकस्यपश्यतः ३८ सांबस्यापिसबा
णेनसहस्रंयोजनंगतः पुनस्तमायतंतंरवाज्जघानत्रिषुणार्जुनः ३९ तेनबाणेनदैत्येंद्रोयोजनंचायुतंगतः -
अनिरुद्धस्यबाणेनलक्षयोजनमास्थितम् ४० प्रद्युम्नस्यापिबाणेननियुतंयोजनंगतः पुनस्तमायतंतंरवा
द्दृक्ष्ययोगेश्वरेश्वरः ४१ बाणंसमादधेतेनगतःखेकोटियोजनम् एवंखेसंस्थितेदैत्येव्यतीतेप्रहरद्वये ४२
द्वितीयेनापिबाणेनतंजघानहरिःस्वयम् सबाणस्तंभ्रामयित्वादिक्षुवैकोटियोजनम् ४३ समुद्रेपातयामास
वातपद्ममिवप्रभुः एवंमृतेतदादैत्येतज्ज्योतिर्निर्गतंस्फुरत् ४४ सर्वतोपिभ्रमन्राजन्श्रीकृष्णेलीनतांगतम्
तदाजयजयारावोदिविभूमौपपातह ४५ विद्याधर्यश्चगंधर्वोननृतुःखेसुरवान्विताः जगुःकिन्नरगंधर्वास्तु
ष्टुवुःसिद्धचारणाः ४६ ऋषयोमुनयःसर्वेप्रसशंसुर्हरिंपरम् ब्रह्मरुद्रेंद्रसूर्याद्याः सर्वेतत्रसमागताः ४७



195

युयोधहरिणायुद्धेसर्वेषांपश्यतांनृप १० सहस्राणिस्वरूपाणिधृत्वासाक्षाद्धरिःस्वयम् युयुधेतेनदैत्येनत-
दद्भुतमिवाभवत् ११ मयूदैत्येनरचितंत्रिशूलंनिर्ज्वलप्रभम् भ्रामयित्वाथहरयेप्राहिणोद्दैत्यराड्बली १२ त
तः क्रुद्धोमहाबाहुः परिपूर्णतमोहरिः चिच्छेदतंतीक्ष्णतुंडंपन्नगंगरुडोयथा १३ ततः क्रुद्धोमहाबाहुर्गदां-
विक्षेपमूर्द्धनि हयान्तंपातयामासगदयावज्रकल्पया १४ गदाप्रहारव्यथितः क्षणमूर्च्छांगतोसुरः गृही
त्वास्वांगदांयुद्धेयुयुधेमाधवेनवै १५ तयोर्युद्धमभूद्घोरंगदाभ्यांरणमंडले अभूच्चटच्चटारावोवज्रनिष्पेषवत्कि
कः १६ श्रीकृष्णगदयातस्यचूर्णीभूतागदाभुवि विरेजेंगारवत्तस्यसर्वेषांपश्यतांमृधे १७ गिरिदर्यांयथासिं
होवनेमत्तोगजाविव रणमध्येतथातौद्वौयुयुधातेपरस्परम् १८ श्रीकृष्णंनोदयामासशकुनिःशतयोजनम् ह
रिस्तंप्रेषयामाससहस्रंयोजनंभुवि १९ गृहीत्वाभुजयोस्तंवैजंघाभ्यांभुवनेश्वरः पातयामासभूपृष्ठेकमंडलु
मिवार्भकः २० किंचिद्व्यथांगतोदैत्योगृहीत्वाजारुधिंगिरिम् प्राहिणोच्चदुराचारःशकुनिर्युद्धदुर्मदः २१ स
मागतंगिरिंवीक्ष्यभगवान्कमलेक्षणः जयशब्दंप्रकुर्वंतावन्योन्यंताडितौगिरिः २३ चूर्णयामासतूराजन्नर्द्धंच
द्रावतींपुरीम् तदादैत्योतिसंक्रुद्धोगृहीत्वाखड्गचर्मणी २४ आययौसन्मुखेराजंश्रीकृष्णस्यमहात्मनः -
शार्ङ्गीःशार्ङ्गंसंगृहीत्वाथार्द्धचंद्रमुखंशरम् २५ संदधेसहसायुद्धेग्रीष्ममार्तंडसंनिभम् शार्ङ्गमुक्तोदिव्यबा-
णोद्योतयन्मंडलंदिशाम् २६ शकुनेर्मस्तकंछित्वाभूमिंभित्वातलंगतः व्यसुर्भूत्वातदादैत्यःपतितोरणमंडले
२७ भूमिस्पर्शात्सजीवोभूत्क्षणमात्रेणमैथिल करेणादायमुंडंस्वंस्वकबंधेनिधायसः २८ युद्धंकर्तुंसमुत्तस्थौत
दद्भुतमिवाभवत् इत्थंकृष्णेननिहतःसप्तवारंमहासुरः २९ भूमिस्पर्शात्सजीवोभूद्बाहुवत्पुनरुत्थितः एका-

जहूरुस्तेस्वमनसिपुरावरूसुताश्रये १६ सुरज्येष्ठापराधेनगतायोनिंचतामसीम् वाराहोथहिरण्याक्षः प
ल्यांतेपक्षिरेनव १७ शकुनिः शंबरोहृष्टोभूतसंतापनोवृकः कालनाभोमहानाभोहरिश्मश्रुस्तथोत्कचः १८
एकदागृहमायांतं अपांतरतमंमुनिम् नत्वासंपूज्यविधिवत्पप्रच्छुरिदमादरात् १९ दैत्याऊचुः शृणुत्वंस्वसु
खाद्ब्रह्मन्केवल्येशोहरिः स्वयम् ददातिमोक्षंभगवान्भक्तानांभक्तवत्सलः २० अस्माभिर्नकृताभक्तिरा
सुरींयोनिमास्थिताः दुःसंगनिरतैर्दुष्टैः कथंमोक्षंभवेदिह २१ उपायंवदनोब्रह्मन्कल्याणस्यपरस्यच कल्या-
णार्थंविचरसिदीनानांजगतिप्रभो २२ अपांतरतमउवाच गुणानामपृथग्भावैर्येभजंतिहरिंपरम् तेस्तेप्रा
पुः परंदैत्यानिर्गुणंमोक्षनायकम् २३ ऐक्यंचसौहृदंस्नेहंभयंक्रोधंस्मरंतथा विधायपूर्वंसततंश्रीकृष्णेलीः-
नतांगताः २४ पृश्निगर्भस्यसंबंधात्प्रजानांपतयोयथा कायाधवःसौहृदाच्चस्नेहाच्चसुतपामुनिः २५ भ-
याद्धिरण्यकशिपुः क्रोधाद्दश्श्रपितास्फरः स्मराच्चश्रुतयःप्रापुर्योगीनांदुर्लभंपरम् २६ येनकेनापिभावेनश्री
कृष्णेधारयेन्मनः भक्तियोगेनतद्धामयदेभिःप्राप्यतेस्फुराः २७ नारदउवाच इत्युक्तांतर्हिनेराजन्नपां-
तरतमेमुनौ चक्रुर्वैरंशकुनाद्याः परिपूर्णतमेहरौ २८ तेप्रापुर्वैरभावेनश्रीकृष्णंपरमेश्वरम् नचित्रंविद्धिराजें
द्रकीटःस्पर्शात्कृतंयथा २९ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेशकुनिवधोना
मद्विचत्वारिंशोऽध्यायः ४२ नारदउवाच इत्थंखंडंतुभद्राश्वंजित्वाश्रीयादवेश्वरः यदुभिःसैन्यकैःसा
र्द्धइलावृतमथाययौ १ विभातियत्रैकगिरींद्रराजोभूपद्मगोलस्यचकर्णिकेव स्फुरद्द्युतिःस्वर्णमयःसुमेरुःस्फ
रालयोमेथिलरत्नसानुः २ तंसर्वतोमंदरमेरुमंदरौसुपार्श्वएवंकुमुदश्चतुर्थकः विभातिसैकोगिरिभिर्नरेश्वर



196

श्रीकृष्णस्योपरिस्फुराः पुष्पवर्षंप्रचक्रिरे ४८ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्व
संवादे शकुनिदैत्यवधोनामैकचत्वारिंशोऽध्यायः ४१ नारदउवाच पलायितेषुशेषेषुदैत्येषुरणमंडलात्
वीणावेणुमृदंगादीन्नादयन्दुंदुभीन्हरिः १ गीयमानोयादवेंद्रसूतमागधबंदिभिः स्वपुत्रैर्यादवैःसार्द्धंस्वसैन्य
परिवारितः २ शंखचक्रगदापद्मशार्ङ्गःशङ्खविराजितः प्रविवेशसुरैःसार्द्धंपुरींचंद्रावतींप्रभुः ३ दुः-
खार्ताभर्तरिमृधेरुदंतीकरुणाबहुः अंकंगृहीत्वाशकुनेस्तत्तराज्ञिमदालसा ४ श्रीकृष्णाचरणेबालंनि-
धायाशक्कृतांजलिः अश्रुपूर्णमुखादीनाहरिंनत्वाजगादह ५ मदालसोवाच भारावतारायभुविप्रभोत्वं
जातोयदूनांकुलआदिदेव प्रसिध्यसेयानिभवंनिधायगुणैर्नलिप्तोसिनमामितुभ्यम् ६ मदात्मजंपालय
भीतभीतं अमुष्यहस्तंकुरुशीर्ष्णिदेव भर्ताकृतंमेकिलतेपराधंक्षमस्वदेवेशजगन्निवास ७ नारदउवा-
इत्युक्तोभगवांस्तस्यमूर्ध्निकृत्वाकरद्वयम् सर्वंचंद्रावतीराज्यंददौतस्मैमहामुनिः ८ कल्पांतआयुषंदत्वा
भक्तिज्ञानविरक्तिमत् शकुनेःशिशवेकृष्णःस्वमालाप्रददौशुभाम् ९ उच्चैश्रवाहयोरत्नंकामधेनुंस्फुरद्रुमं
आहृतायेशकुनिनापुरायुद्धेपुरंदरात् १० पुरंदरायताप्रादात्स्थलात्श्रीजनार्दनः गोविप्रसुरसाधूनांछंदसां
पालकः स्वयम् ११ बहुलाश्वउवाच केसंदैत्याःपूर्वकालेशकुन्याद्यामहाबलाः देवर्षेमेपरंचित्रंकस्मान्मो
क्षमुपागताः १२ नारदउवाच ब्रह्मकल्पेपुराराजन्गंधर्वेशःपुरावसुः आसीत्तस्यशताःपुत्रावभूवुर्नवचोर-
साः १३ कंदर्पसमलावण्यादिव्यभूषणभूषिताः नित्यंजगुर्ब्रह्मलोकेगीतवाद्यविशारदाः १४ मंदारोमंदरो-
मंदोमंदहासोमहाबलः सुदेवःसुधनःसौधःश्रीभानुरितिविश्रुतः १५ एकदामोहतेपुत्रिंवाग्देवींवीक्ष्यवेधसीं

उद्धवउवाच कस्येयंसुतपोभूमिर्मंदिराचलसंनिधौ मूर्तिमंत्योविराजंत्यः कास्त्रियोवदहेप्रभो १९ श्रीभगवा
नुवाच स्वायंभुवेनमनुनातपश्चात्रकृतंपुरा तस्येयंसुतपोभूमिरद्यापिश्रेयसीबहुः २० सदात्रैवहिवर्तंतेना-
र्य्योरूपाष्टसिद्धयः अत्रप्रासस्यकस्यापिततस्ताश्चभवंतिहि २१ अत्रक्षणेनतपसादेवत्वंयातिमानवः त
पोभूमेश्चमाहात्म्यंवक्तुंनालंचतुर्मुखः २२ नारदउवाच इत्युक्त्वाभगवान्कृष्णःस्वसैन्यपरिवारितः जगाम-
प्रोत्कटान्देशान्दुंदुभिर्नादयन्मुहुः २३ हिरण्यकशिपुर्दैत्यस्तपस्तेपेत्रयःपुरा यत्रलीलावतीनामवर्त्ततेकांचनीपु
री २४ लीलावतीश्वरःसाक्षाद्दीप्तहोत्रोहुताशनः नित्यंराज्यंप्रकुरुतेमूर्तिमान्नाभुविव्रतः २५ सोपिश्रीकृ
ष्णचंद्रायपुरुषायमहात्मने बलिंदत्वापराशुम्भस्तुतिंचक्रेधनंजयः २६ इत्थंपश्यन्देवदेवःसर्ववर्षमिलावृतं
जगामवेदनगरंजंबूद्वीपंमनोरमम् २७ मूर्तिमान्यत्रनिगमोदृश्यतेसर्वदेवहि तत्सभायांसदावाणीवीणापुस्त
कधारिणी २८ गायंतिकृष्णचरितंसुभगंमंगलायनम् उर्वशीपूर्वचित्तीचनृत्यंतंकूरसोनृप २९ हावभाव
कटाक्षैश्चस्तोषयंत्योश्रुतीश्वरम् अहंविश्वावसुश्चैवतुंबरुश्चसुदर्शकः ३० तथाचित्ररथोत्थेतेवादित्रा
णिमुहुर्मुहुः वेणुवीणामृदंगानिसुरुयष्टियुतानिच ३१ तालदुंदुभिभिःसार्द्धंनदंतिविधिपूर्वकम् ह्रस्वदी
र्घस्फुतोदात्तोनुदात्तस्वरितोनृपः ३२ सानुनासिकभेदश्चतथानिरनुनासिकः एतैरष्टादशभिर्भेदैर्गीयंतेश्रुत
यःपुरैः ३३ मूर्तिमंतोविराजंतेतत्रवेदपुरेनृपः अष्टौतालास्वरासप्ततथाग्रामत्रयंनृप ३४ वदंतिवेदनगरे
मूर्तिमंतोसदैवहि भैरवोमेघमल्लारोदीपकोमालकौशकः ३५ श्रीरागश्चापिहिंडोलोरागाःषट्संप्रकी-
र्तिताः पंचभिश्चप्रियाभिश्चतनुजैरष्टभिःपृथक् ३६ मूर्तितमतस्तेतत्रविचरंतिनृपेश्वरः भैरवोवध्रुव-

श्चतुः पदार्थैश्चमनोरथाइव ३ जांबूनदंजंबुभवाह्वियत्रयतःस्वतःसिद्धिभवंसुवर्णम् यत्रारुणोदाकिलयत्रजाताय
द्वारिपानाद्युतिचामयत्वम् ४ कदंबजातानवपंचजातायासांतुपानेननृणांकदापि शीतोष्णयवैवर्णपरिश्रमाद्यादौर्गंध
भावानभवंतिराजन् ५ वयेद्भवाकामदुधानदाश्चरत्नान्नवासःशुभभूषणानि शय्यासनादीनिफलानियानिदिव्या
नितानित्वयवाहयंति ६ एवंचरित्रोद्भवनंप्रसिद्धंसंकर्षणोयत्रविराजतेथ शिवःसदासौरमतेप्रियाभिस्त्रिभास
तांयानिजनास्कृतत्र ७ हेमांबुजार्पीतवसंतवायुभिरेतेघ्याणैलादिलवंगजालैः देवद्रुमामोदमदांधषट्पदैरिला
वृतंखंडमतीवरेजे ८ पश्यन्भुवंस्वर्णमयींमनोहरांवैडूर्यरत्नांकुरवृंदचित्रताम् इलावृतंस्वर्णमलंकृतैःसुरैर्विजि
त्यखंडजगृहेबलिंहरिम् ९ श्रीशोभनोनामपुराकृतेनजोमातृकोभून्मुचकुंदभूभृतः एकादशीयःसमुपोष्यभारते
प्रातःसदेवैःकिलमंदराचले १० अद्यापिराज्यंकुरुतेकुबेरवत्राज्ञःकृतोसौकिलचंद्रभागया ११ नीत्वावनिंदेववर-
स्यसन्मुखेसमाययौमैथिलसुंदरःपरः प्रदक्षिणीकृत्यहरिंयदूत्तमंपादारविंदेपतितोथशोभनम् १२ कृत्वाप्रणं-
म्याशुबलिंमहात्मनेदत्वाययौमैथिलमंदराचलम् बहुलाश्वउवाच शोभनेननृपेजातेभगवान्मधुसूदनः अग्रेचका
रकिंदेवोवददेवर्षिसत्तम १३ नारदउवाच सरोवरंपरंदिव्यंतस्मिन्मंदरसानुनि सौवर्णपंकजंवीक्ष्यकिरीटीप्रा-
हमाधवम् १४ अर्जुनउवाच कांचनीभिर्लताभिश्चसौवर्णैःपंकजैर्वृतम् वदमांदेवकीपुत्रकस्येदंकुंडमद्भुतम्
१५ श्रीभगवानुवाच पृथुःपूर्वोराजराजस्वायंभुवकुलोद्भवः तत्रापसतपोदिव्यंतस्येदंकुंडमद्भुतम् १६ अस्य
पीत्वाजलंसद्यःसर्वपापैःप्रमुच्यते स्नात्वासद्धामपरमंयातिपार्थनरोत्तरः १७ नारदउवाच अत्रैवभगवान्सा
क्षात्तपोभूमिंजगामह सरूपास्तत्रनृत्यंतिसर्वास्ताश्चाष्टसिद्धयः १८ तावीक्ष्यचोद्धवःप्राहभगवंतंसनातनम्

त्यष्टपुत्राः कथिताःपूर्वसूरिभिः ९ मेघमल्लाररागस्यरागिण्यः पंचभिः श्रुता कल्याणसुभकामश्चगौडक-
ल्याणमेवच १० कामरूपः कान्हरेतिरामसंजीवनस्तथा स्फरवनामामन्दहासः पुत्रायेष्टौविदेहराट् ११ रा
गस्यदीपकस्यापिकथितारागपंडितैः गांधारीदेवगांधारोधनाश्रीस्वर्मणिस्तथा १२ गुणागरीतिरागिण्यः
पंचैतामैथिलेश्वर मालकौशस्यरागस्यचाष्टपुत्राः प्रकीर्तिताः १३ चंद्रहारोघुंघुरश्चविहारोनंदएवच-
वैराटीवेककर्णाटीगौरीगौरावटीतथा १४ चतुश्चैवकलाश्चंद्ररागिण्यः पंचभिः श्रुताः श्रीरागस्यापिराजें
द्रकथितापूर्वसूरिभिः १५ सारंगःसागरोगौरोमरुत्पंचशरस्तथा गोविंदश्चहमीरश्चगंभीरश्चतथैवच
१६ श्रीरागस्यापिराजेंद्रअष्टपुत्रमनोहराः वसतीएरजोहेरीतैलंगीसंदरीतथा १७ हिंडोलस्यापिरागे
पारागिण्यःपंचभिःश्रुताः मंगलस्यवसंतश्चविनोदःकुमुदस्तथा १८ एवंचविहितोनामविभासःस्वरमंडलः
पुत्राश्चाष्टौसमारव्याताःमैथिलेंद्रपृथक्पृथक् १९ बहुलाश्वउवाच शब्दब्रह्महरेःसाक्षान्निगमस्यमहात्म-
नः रासमंडलइत्येवंहिंडोलस्यपृथक्पृथक् २० अंगानिवदमेदेवकानिकानिमहीतले नारदउवाच सुखं
व्याकरणंप्रोक्तंपिंगलःपादउच्यते २१ मिमांसाशास्त्रंहस्तोचज्योतिर्नेत्रंप्रकीर्तितम् आयुर्वेदंपृष्टिदेशाधनु
र्वेदमुरस्थलम् गांधर्वंरसनंविद्धिमनोवैशेषिकंस्मृतम् २२ सांख्यंबुद्धिरहंकारोन्यायवादप्रकीर्तिताः वेदां
तंतस्यचित्तंहिवेदस्यापिमहात्मनः २३ रागरूपमिदंराजन्विहारंविद्धिमैथिल एतत्तेकथितंराजन्किंभूयः-
श्रोतुमिच्छसि २४ बहुलाश्वउवाच तस्मिन्वेदपुरेरम्येकिंचकारहरिःस्वयम् एतन्मेवददेवर्षेत्वंसाक्षात्-
दिव्यदर्शनः २५ नारदउवाच आयांतंवेदनगरंश्रीकृष्णंयादवेश्वरम् निगमोपिबलिंनीत्वासरस्वत्यातयासह

भुवर्णञ्चमालकोशश्शुकद्युतिः ३७ मयूरद्युतिसंयुक्तोमेघमल्लारएवहि सुवर्णाभोदीपकाख्यश्श्रीरागोऽ-
रुणवर्णभृत् ३८ हिंडोलोदिव्यहंसाभोराजतेमैथिलेश्वरः बहुलाश्वउवाच तालानाञ्चस्वराणाञ्चग्रामा
णांमुनिसत्तम नृत्यानाकृतिभेदांश्चनामभिःसहितान्वद ३९ नारदउवाच रूपकश्चर्चरीकश्चताल:
परमठस्मृतः विराडकमठश्चैवमल्लकश्चझञ्झटिर्जटा ४० निषादर्षभगांधारषड्जमध्यमधैवताः पंचमश्चे
त्यमीराजन्स्वराःसप्तप्रकीर्तिताः ४१ माधुर्यमथगांधार्यश्चौव्यग्रामत्रयंस्मृतम् रासञ्चतांडवंनाट्यंगां
धर्वकैन्नरंतथा ४२ वैद्याधरंगौह्यकंचनृत्यमष्टरसंनृपः हावभावानुभावैश्चदशाभिश्चाष्टभेदमत् ४३
सारंगमयथान्यानिस्वरगम्यपदस्मृतम् एतत्तेकथितंराजन्किंभूयःश्रोतुमिच्छसि ४४ इतिश्रीमद्गर्गाचा
र्यसंहितायांविश्वजित्खण्डेनारदबहुलाश्वसंवादेवेदनगरवर्णनंनामचत्वारिंशोऽध्यायः ४३ बहुलाश्वउ
वाच रागिणीनांचनामानिवददेवऋषेमम तथावैरागपुत्राणांत्वपरावरवित्तमः १ नारदउवाच कालेन
देशभेदेनकृपयास्वरमिश्रया भेदा षट्पंचाशत्कोटिगीतस्यकीर्तिताः २ अंतर्भेदाअनंताहितेषांसंतिनृ
पेश्वरः विष्णोनरागमानंदंशब्दब्रह्ममयंहरिम् ३ तस्मान्मुख्याश्चभेदात्कोवदिष्यामितवाग्रतः भैरवीपिंग-
लाशंकीलीलावत्यगरीतथा ४ भैरवस्यापिरागस्यरागिण्यःपंचकीर्तिताः महर्षिश्चसमृद्धश्चपिंगलोमा
गधस्तथा ५ बलाबलंचवैशाखोललितःपंचमस्तथा भैरवाष्टस्यपुत्राश्चगीयन्तेचपृथक्पृथक् ६ चि
त्राजयजयावंतीविचित्राकथितापुनः वृजल्लाब्धंधिकाकारीरागिण्योपिमनोहरा ७ मेघमल्लाररागस्यक
थितापंचमैथिलः श्यामाकारंसोरठश्चनटोडायनएवच ८ केदारोऽजरहस्योजलधारस्तथैवच विहागरो-

जम् ४३ स्वराऊचुः शरद्विकचपंकजश्रियमतीवविद्वेषकम् मिलिंदमुनिलेडितंकुलिशकंजचिन्हारतम् स्फु
रत्कनकनूपुरंदलितभक्ततापत्रयम् चलद्द्युतिपदद्वयंहृदिदधामिराधापतिम् ४४ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेवेदादिस्तुतिवर्णनंनामचतुश्चत्वारिंशोऽध्यायः ४४ नारदउवाच भैर
वाद्यारागगणाः पुरःप्राप्ताहरेःप्रभो रूपानुरूपावयवांतनुंदृष्ट्वातिहर्षिताः १ पश्यन्त्वयेषांदृष्टिंप्राप्ताहरेस्तनौ
तत्रस्थिताचतेगंतुंलावण्यान्नशशाकह २ अहोश्रीकृष्णचन्द्रस्यरूपमत्यद्भुतंहरेः दृष्ट्वोपवर्णनंतस्यचक्रुस्तेपिपृ
थक्पृथक् ३ भैरवउवाच भजहरिजानुद्वयमितिभजतिसदाकेकमलकराभ्याम् ४ मेघमल्लारउवाच ऊ
रूविंधौरंभारवंडौहेमस्तंभौध्यायेवद्यौ ओजपूर्णौशोभायुक्तौवस्त्रापीतौकृष्णस्योभौ ५ दीपकउवाच सकल
सुखकरंकनकरुचिधरंप्रथितंहरिपदंभजतकटितले ६ मालकोशउवाच कटिकेशवधाहरेरस्तितत्रनृणांनेत्रयोर्दृ
ष्टिमानहरंती परंकंपिताधरंमंदगच्छत्समीरैःस्फजघेणसावर्तचेतोहरित्थम् ७ श्रीरागउवाच नाभेस्फुरःपुष्क
रकुंडवच्चतंलसत्त्रिवल्यूर्मिमनोहरंपदम् रोमावलिःप्रोज्झितकामकाननंभजामिनित्यंहृदिराधिकापतेः ८ हिंडोलउ
वाच अक्षरपंक्तिःकिंत्वलिपंक्तिःपिप्पलपत्रेमोहनमायाकिंकमलेयच्छामलरेषा ९ भैरवरागिण्यऊचुः पीत
कटिंपतकृष्णाहरेरिंद्रधनुर्वादसियुतम् कंचनशिल्पैश्चारुरुचितद्भजनृणांदुःखहरम् १० भैरवपुत्राऊचुः -
चतुःसमुद्राइवविश्वपूरका आनंददादेवचतुःपदार्थवित् तेबाहवोलोकवितानदंडवत्जयंतभूधारणादिग्गजाइव -
११ मेघमल्लाररागिण्युवाच अरुणबिंबफलद्युतिमंडितंभजहरेरधरंमधुरमनः नवजयादलमल्लद्युतिग्रहंस-
कलवल्लभभूमिपतेप्रभो १२ मेघमल्लारपुत्राऊचुः कर्पूरकेतकीसमौक्तिकहीरकाणांश्रीखंडचंद्रचपलामृतम

गंधर्वैरप्सरोभिश्चग्रामतालैः स्वरैःसह रागैःसभेदैःसहितः प्रणनामकृतांजलिः २७ प्रसन्नोभगवान्सा-
क्षाद्देवदेवोजनार्दनः वेदंप्राहयदूनांचसर्वेषांशृण्वतांसताम् २८ नारदउवाच निगमस्त्वंवरंब्रूहियत्तेम
नसिवर्त्तते दुर्लभंकिंत्रिलोकेषु भक्तानांहर्षितेमयि २९ वेदव्यासउवाच यदिदेवप्रसन्नोसिसर्वेयमेस्कपार्ष
दाः तेषांदेवनिजंरूपंदर्शयात्रपरेश्वर ३० यद्रूपंतेचगोलोकेस्वधाम्निप्रस्फुरद्धत्तौ वृंदावनेचतद्द्रासेतस्यद
र्शनकांक्षिणः ३१ नारदउवाच श्रुत्वावेदवचःकृष्णःपरिपूर्णतमःस्वयम् स्वरूपंदर्शयामासराधायाःसहि-
तंपरम् ३२ तद्रूपस्फुरद्दृष्ट्वासर्वेवैमूर्च्छितांगताः पूरितासात्त्विकैर्भावैर्विस्मृत्यस्वतनुंसुरवम् ३३ तदा-
पिहर्षिताःसर्वेवादित्रैर्मधुरस्वनैः जगुस्तत्सुरुतोराजन्ननृतुःपश्यतांसताम् ३४ यथाश्रुतंतथादृष्टंमाधुर्यं
रूपमद्भुतम् तथैवचक्रुर्वेदाद्यावर्णनंमैथिलेश्वर ३५ वेदव्यासउवाच सज्ज्ञानमात्रंसदसत्परंमहत्शश्वत्
प्रशांतंविभवंसमंमहत् ३६ त्वांब्रह्मवेदेवस्कदुर्गमंपरमसदास्वधाम्नापरिभूतकेतवम् ३७ सरस्वत्युवाच
महःपरंत्वांकिलयोगिनोविदुःसविग्रहंतन्नवदंतिसात्वतः इदंतुयत्तेपदयोर्द्वयंतमेवासभूयान्सहसामधीश्व
रम् ३८ गंधर्वाऊचुः श्यामंचगौरंविदितंस्वधाम्निकृतंत्वयाधाम्निविजेन्द्रयाहि विराजसेनित्यमलंचताभ्यां
घनोघयामेचकदामनिभ्याम् ३९ अप्सरोवाच यथातमालःकलधौतवल्याघनोयथाचंचलयाचकांत्ति निलो
द्रिराजोनिकरवाश्मस्वन्याश्रीराधयाद्यस्कतथारमण्या ४० ग्रामाऊचुः यस्यपदस्यपरागंशंभुमारमाकविदेवैः
इच्छंतिचेतसिराधातंभजमाधवपादम् ४१ तालाऊचुः येनबलिःसद्दिहरेतहलिमेवहरेत तंभजपादंतुहरे-
श्वेतसिसत्सेकुहरे ४२ मानाऊचुः उत्क्षिपंतिबहिर्दुःखंसंतोयच्छरणंगताः राधामाधवयोर्दिव्यंदधामपादपक-

नियोजितैर्मैथिलदारुकेन २६ युतेनसद्रत्नमलश्रुतिस्वनैःप्रभंजनैर्जदुजद्दरुणध्वजेन विहाययावेदपुरापरात्मायंयौ
पुरींयादवचंडमंडिताम् २७ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेश्रीकृष्णाध्यानवर्णनं
नामपंचचत्वारिंशोऽध्यायः ४५ नारदउवाच अथकृष्णोभगवतींपुरींद्वारावतींगते प्रद्युम्नःसैनकैःसार्द्धंनं
दान्कामदुघोययौ १ शतयोजनविस्तीर्णांगंधर्वाणांमनोहराम् वसंतमालतीनाम्नाहेमरत्नमयीशुभा २ लवं
गतिलकाजालैरेलाकाश्मीरदेशकैः जातीफलादिजाविन्नीश्रीखंडवारिजातकैः ३ मत्तालिनादिताभृंगैः शब्दि
ताचित्रपक्षिभिः गंधर्वैराजिताभव्यैर्नगैर्भोगवतीयथा ४ पतंगोनामतत्रैवगंधर्वेशोमहाबलः करोतिराज्यं
सुकृतीशक्रवद्बलपौरुषम् ५ श्रुत्वाप्रद्युम्नमायातंदिग्जयार्थंविनिर्गतम् गंधर्वैरुद्भटैर्युक्तोयुद्धंकर्तुंमनोदधे
६ रथाश्वगजवीरैश्चगंधर्वैर्दशकोटिभिः पतंगआगतोयोद्धुंप्रद्युम्नस्यापिसन्मुखे ७ गंधर्वैर्यदुभिःसार्द्धंघो
रंयुद्धंबभूवह भल्लैर्गदाभिःपरिघैर्मुद्गरैस्तोमरष्टिभिः ८ बाणांधकारेसंजातेपतंगोतिरथोबली धनुष्टंकार
यन्नासोजगर्ज्जघनवद्बली ९ गदोगदांसमादायबलदेवानुजोबली तद्बलंपोथयामासवज्रेणेंद्रोयथागिरी
न् १० गदस्यगदयाकेचिद्गंधर्वाःपतितारणे रथाश्चूर्णिकृताःसर्वेमातंगाभिन्नमस्तकाः ११ अश्वारूढाःकेपि
वीराःपतितारणमूर्द्धनि अधोमुखाऊर्द्धमुखागंधर्वाश्छिन्नबाहवः १२ क्षणमात्रेणतत्सैन्यैरुधिराणांनदीत्वभूत
प्रमाथहस्मालार्थेशिरांसिजगृहुर्मृधे १३ सिंहारूढाभद्रकालीडाकिनीशतसंवृता कपालेनापिरुधिरंपिबंतीदृश्य
तेमृधे १४ एवंयुद्धेगदकृतेगन्धर्वाणांपलायिताम् गंधर्वेशस्तदाप्रासोहस्तिलक्षबलान्वितः १५ गदंतताडग
दयापतंगोहृदिमैथिल गदोपितंस्वगदयापतंगंहृदिवोजसा १६ तयोश्चगदयायुद्धंबभूवघटिकाद्वयम् विस्फु-



200

ल्लिकानाम् तेषांरुचेश्चपरिभामिनि कारिपूर्वंपादांतपंक्तिरमलास्मरतापसस्यं १३ दीपकरागिण्यूचुः नयन युगलजातंपातुनोहर्निशंतेमदनशरपरोक्षंसर्वलावण्यदीक्षं परिहृतसुरवृक्षंकोटिशोलक्षलक्षंनिजजनकृत रक्षदानदक्षंकृटाक्षम् १४ दीपकपुत्राऊचुः किंबाहुलिंगयुगलंनवपद्ममध्येदुःखक्षयायवसतांनिशिता युग्मम् गजैवंधनुजयितकिंमकरध्वजस्यभूमंडलंकिमथचंद्रमुखेपरस्य १५ मालकोशरागिण्यूचुः - परिनृत्यतिइंद्रमंडलेफणिपत्न्याविवलोककुंडले कमलेमकरंदनिर्भरेभ्रमरालीवस्फगंडमंडले १६ माल कोशपुत्राऊचुः रविरेवहिमंडलः किमुपययदुर्भर्तुः त्वथवाघनेतडित् अधितिष्ठतिगंडमंडलंद्युतिरखंडकलधौ तकुंडलम् १७ श्रीरागिण्यूचुः कलिंगयोरवंजनयोकिलारादापश्यतांयुद्धमभूदलीनाम् तेषांगतःकीर ड्षप्रफुलेनचकास्तिपद्मेरुणोविवलिस्फः १८ रागपुत्राऊचुः परिकरिकृतपीतपटंहरिंशिखिकिरीटनतीकृत कंधरम् लकुटवेणुकरंचलकुंडलपटुतरंनटवेषधरंभजे १९ हिंडोलरागिण्युवाच अतसीकुसुमोपमेय कांतियमुनाकूलकदंबमध्यवर्ती नवगोपवधूविशालशालीवनमालीवितनोतुमंगलानि २० हिंडोलपु- त्राऊचुः हरेर्मत्समः पातकीनास्तिभूमौतथात्वत्समोनास्तिपापापहारी इतित्वानमत्वाजगन्नाथदेवंयथेच्छा भवेत्तेतथामांकुरुत्वम् २१ नारदउवाच इतिरागकृतंध्यानंयःशृणोतिपठेत्सदा तन्नेत्रगोचरोयातिभ गवान्भक्तवत्सलः २२ इत्थंस्वदर्शनंदत्वाविद्यादिभ्योहरिःस्वयम् बभूवपश्यतांतेषांशार्ङ्गपाणिश्चतुर्भुजः २३ कृत्वातुदर्शनंविष्णोर्गतिदेवगणैःसह सैन्येस्फतंशंबरारिस्थापयित्वायदूत्तमम् २४ द्वारिकांस्वांपुरींगंतु मऽथचक्रेपरात्परम् २५ मंजीरधराकलकिंकिणीकलंस्फकांस्यपात्रध्वनिनारथेन स्फग्रीवमुखेतिचंचलाश्वे

लः प्रसन्नचेतागंधर्वैर्मामैत्यभयंददौ ३५ स्थापयित्वाबलेकार्ष्णिःप्रणनंयादवेश्वरः यादवैःप्रस्कन्नःशी
घ्रंपुरींद्वारावतींययौ ३६ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेवसंतमानती
कर्षणंनामषट्चत्वारिंशोऽध्यायः ४६ नारदउवाच प्रद्युम्नोथमहावीरोनादयन्जयदुंदुभिं यदुभिःसैनकैः
सार्द्धंमधुधारातटंययौ १ सुवर्णाद्रितटीभूतेवनेवैरसवकेशुके सुवर्णवर्णहंसाढेकांचनीलतिकावृते २ हे
मावतीषुद्रोणीषुदेवदुर्गासुमैथिल दानवानामरम्यासुगंगावेत्रवतीषुच ३ दानवेभ्यःप्रभीतानांकवित्स्वर्गास्य
लायिनां अष्टानांलोकपालानानिधयोयत्रसंतिहि ४ तत्रशक्रसखोदेवआधिपत्याभिरक्षकः श्रुत्वागतंचप्र
द्युम्नंयुद्धंकर्तुंमनोदधे ५ प्रद्युम्नप्रेषितःसाक्षादुद्धवोबुद्धिसत्तमः पप्रच्छदृष्टमार्गैश्चजनैस्तस्यपुरंय
यौ ६ नत्वादेवंशक्रसखंसभायामुद्धवःप्रभुः प्रद्युम्नकथितंप्राहविस्तरान्मंत्रिणांवरः ७ उद्धवउ
वाच उग्रसेनोयादवेंद्रोद्वारकेशोनृपेश्वरः जंबूद्वीपनृपान्जित्वाराजसूयंकरिष्यति ८ तेनप्रणोदितं
जेतुंरुक्मिणीनंदनोबली जित्वासभारतादीनिखंडानिस्वस्यतेजसा ९ अद्यैवेलावृतंप्राप्तोजेतुंकार्ष्णिर्महा
बलः तस्मैयच्छबलिंशीघ्रंकुलकौशल्यहेतवे १० नचयुद्धंहिभवताराजन्सर्वविदांवरः शक्रसखउवाच
शृणुदूतसदादेवैःपूजितोहंनरैःकिमु सिद्धोहंवैमहावीरोनागलक्षसमोबले ११ अष्टानांलोकपालानांआधि
व्याधिषुरक्षकः कुबेरइवकोशाढ्यःपुरंदरइवोद्भटः १२ उग्रसेनेनदातव्यंमह्यंचोपायनंपरम् पराक्रमेण
दास्यामियदुराजायभूभृते १३ उद्धवउवाच यथातिरस्कृतःप्राप्तःकुबेरोयदुतेजसा यथाश्रृंगारतिलक
श्चेत्रदेशाधिपोबली १४ शुभांगोहरिवर्षेशउत्तरेशोगुणाकरः यथादैत्यसखोराजालंकेशोराक्षसेश्वरः

लिंगाक्षरंत्यौद्वेगदेचूर्णीबभूवतुः १७ लक्षभारमयींगुर्वींगदामादायसत्वरम् गदंतताडशिरसिपतंगोरणदु
र्मदः १८ गदाप्रहारेणगदःक्षणंमूर्च्छामवापह एवंकृतेघोरमृधेपतंगेनमहात्मना १९ तदैवद्वारिकापु
र्य्यास्तेजःसंघट्टमागतम् ददृशुर्यादवाःसर्वेकोटिमार्तंडसन्निभम् २० तस्मिन्तेजसिगौरांगोबलदेवोमहा
बलः आविर्बभूवसहसाभगवान्भक्तवत्सलः २१ गंधर्वाणांबलंसर्वंसमाकृष्यहलेन तताडमुसलंक्रुद्धो
बलीनीलांबरोवली २२ रथान्गजान्तुरंगांश्चवीराःशस्त्रभृतावराः निपेतुर्युगपत्सर्वेचूर्णिताश्चोपलाइव२३
पतंगोविरथस्तस्माद्भयभीतःपुरींययौ पुनर्योद्धुंयादवैश्चसेनाव्यूहंचकारह २४ शतयोजनविस्तीर्णांगं
धर्वाणांमहापुरीम् वसंतमालतींसर्वांउद्विदार्यहलेनवै २५ विचकर्षबलःक्रुद्धोनदेकामदुघेनृप हाहाका
रस्तदैवासीन्नगर्य्यांपतितैर्गृहैः २६ तिर्यक्पोतमिवाघूर्णनगरींवीक्ष्यसत्वरम् पतंगःसर्वगंधर्वैर्हर्षितःसन्
कृतांजलिः २७ स्वचिद्धेमसवर्णानांमुक्तातोरणशालिनाम् दशयोजनविस्तीर्णांकृतानांविश्वकर्मणाम् २८
कामगाणांपताकाभिर्युतानांकुंभकोटिभिः सहस्रार्कप्रकाशानांविमानानांद्विलक्षकम् २९ चतुर्लक्षंगवा
नांचतुरंगानांदशार्बुदम् एलालवंगकाश्मीरजातीफलफलैःसह ३० सुधाफलानांदिव्यानांकोटिशोभाज-
नानिच नीत्वाबलिंसमादायदत्वानत्वाप्रधर्षितः ३१ कृतांजलिःप्राहबलंबलभद्रंप्रसादवित् पतंगउवा
च रामरामहावीर्यनजानेतवविक्रमम् यस्यैकमूर्ध्नितिलकंदृश्यतेभुविमंडलम् ३२ देवाधिदेवभगवन्का
मपालनमोस्तुते नमोनंतायशेषायसाक्षाद्रामायतेनमः ३३ जयजयाच्युतदेवपरात्परस्वयमनंतदिगंतगतश्रु-
तः सुरमुनींद्रफणींद्रवरायतेमुसलिनेबलिनेहलिनेनमः ३४ नारदउवाच एवंस्तुतःपतंगेनबलभद्रोमहाब-

बलंदृष्ट्वाशक्रसखोबली धनुष्टंकारयन्प्राप्तोजगर्ज्जघनवद्बली ३४ अर्द्धनंदशभिर्बाणैर्विंशत्याभानुमेव-
च सांबंबाणशतैर्युद्धेनिरुद्धंचशतैःशरैः ३५ द्विशतैश्चगदंवीरंसहस्रंसारणंतथा ततादसमरेवीरोधन्वीश
क्रसखोबली ३६ तद्बाणैःसरथावीरावभ्रमुर्घटिकाद्वयम् चक्रवत्कुंभकारस्यतदद्भुतमिवाभवत् ३७ ह-
याश्चपंचतांप्राप्ताःश्लथद्वधारथाभ्रमात् रथिनश्छिन्नमनसःसुतामूर्च्छांगतोमृधे ३८ सचान्यंरथमारुह्य-
धनुष्टंकारयन्बलात् धनुःशक्रसखस्यापिचिच्छेददशभिःशरैः ३९ द्वाभ्यांसूतंशतैरश्वान्सहस्रैस्तद्रथंश
रैः चूर्णयामासराजेंद्रसांबोजांबवतीसुतः ४० सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः नागेंद्रंम-
त्तमारुह्यशूलंजग्राहरोषतः ४१ विव्याधसांबंशूलेनहृदिशक्रसखोबली तेनघातेनसांबोपिकिंचिद्व्या
कुलमानसः ४२ योजनेपादविच्छेपंकज्जलाद्रिसमप्रभम् चतुर्योजनमुच्चांगंयोजनार्द्धरदद्वयम् ४३-
महच्चीत्कारकुर्वंतंभिशुंडादंडमंडलैः शृंखलेपातयंतंतंचतुर्योजनविस्तृतैः ४४ गजान्वीरान्मर्दयंतंरथानश्वा
नितस्ततः दंतैःपादैर्घातयंतंकालांतकयमोपमम् ४५ आगतंवीक्ष्यनागेंद्रंशत्रूणांनोदितंपरम् विचरंतंमृधा
द्भीतायदुसेनाविदुद्रुवुः ४६ गदोगदांसमादायबलदेवानुजोबली जघानतद्गजंकुंभेगदयावज्रकल्पया-
४७ गदयाभिन्नकुंभोपिगजोयुद्धेपपातह छिन्नपक्षोयथाशैलस्तदद्भुतमिवाभवत् ४८ अथशक्रसखो
यावत्गदांजग्राहरोषतः तावत्तताडगदयागदोशक्रसखंहृदि ४९ तेनघातेनसगजोपतितोमूर्च्छितो
भवत् पुनरुत्थायसगदंभुजाभ्यांजगृहेमृधे ५० गदशक्रसखौयुद्धेयुयुधातेपरस्परम् रंगेमल्लाविवचनं
चन्यौतौवारणाइव ५१ भुजाभ्यांतंसमुत्थायबलदेवानुजोबली चिक्षेपतत्पुरेवीरबलान्तशतयोजनात्

१५ संवत्सरः केतुमालः शकुन्याद्यामहास्फुराः तथापिभूतस्त्वंराजन्बलिंतस्मैप्रदास्यसि १६ नारदउवाच इत्युक्तवचनःश्रुत्वाक्रुद्धःशक्रसखोबली उद्धवंप्रत्युवाचाथशृणुभागवतोत्तम १७ यावद्बलिंप्रदास्यामि तावत्त्वंसंस्थितोभव अन्यथातेगतोनास्तिसत्यंसत्यंमहामते १८ उद्धवउवाच वयंतुमंत्रिप्रवराःपूर्णज्ञानप्रदावरा मत्सीक्षणंनमन्यंतेतेषांयन्मंडलभृशम् १९ नारदउवाच एवंसहृष्टरोधेनरोधयामासनोद्धवम् उद्धवंनागतंराजन्यदूनामनुशोचताम् २० दिनानिकतिचित्तत्रव्यतीयुस्तमपश्यताम् मन्मुखात्तदुपाकर्ण्यप्रद्युम्नोभगवान्हरिः २१ जेतुंशक्रसखंप्रागात्त्रिपुरंत्र्यंबकोयथा यदुभिर्भ्रातृभिःसार्द्धंससैन्यपरिवारितः २२ स्फुवर्णाद्रिगुहाद्वारात्संप्राप्तोमकरध्वजः वीरकोदंडटंकारैर्दुंदुभिध्वनिमिश्रितैः २३ अश्वहेषैर्हस्तिनादैर्विनेदुश्चदिशोदश सैन्यपादरजोभिश्चयुयुधेयादवैःसह २४ बभूवतुमुलंयुद्धंछादितंव्योममंडलम् वीक्ष्यसर्वैमेरुदेवाभयंप्रापुर्नृपेश्वर २५ अथशक्रसखःक्रुद्धोरथारूढोमहाबलः अक्षौहिणीभिर्दशभिर्युयुधेयादवैःसह २६ बभूवतुमुलंयुद्धंदेवानांयदुभिःसह प्राकृतःप्रलयेराजन्नब्धीनामब्धिभिर्यथा २७ शस्त्रांधकारेसंजातेसारणोरोहिणीसुतः बलदेवानुजोवीरोदंसितोगजसंस्थितः २८ सर्वेषामग्रतःप्राप्तोधनुष्टंकारयन्मुहुः तद्बलंपोथयामासबाणैःकोदंडनिर्गतैः २९ श्रीसारणस्यबाणौघैःकेचिद्वीराद्विधाकृताः तिर्यग्भूतारथायुद्धेनिपेतुःपादपाइव ३० गजानांभिन्नकुंभानांमौक्तिकानिपतंतितरात् बाणांधकारेसंजातेरात्रौतारागणाइव ३१ संछिद्यमानैरश्वैश्चवीरैर्नागैरणांगणे बभौभूतगणैर्युक्तंयथाक्रीडामुपायते ३२ सारणस्यबलंदृष्ट्वासर्वेदेवाःपलायिताः सेछिन्नभिन्नकोदंडाअभिताःशीर्णकंचुकाः ३३ पलायमानंस्त्र

वैपद्मरागाणांभारंविद्युर्बुदंनृप १५ जांबूनदसुवर्णानां हाटकानांतथैवच सुवर्णाद्रिसुवर्णानांकोटिभा-
राश्चकोटिशः १६ राज्यंनवनिधीन्सर्वान्देवानांमैथिलेश्वर अष्टानालोकपालानामधिपत्याधिरक्षकः-
१७ नीत्वोद्ध्वंशक्रसखोदत्त्वेवंबलिमद्भुतम् कौशल्यहेतवेकार्ष्णिंप्रणनामकृतांजलिः १८ तस्मैतुष्टः
शंबरारिःप्रददौरत्नमालिकाम् संस्थाप्यराज्येतराजन्तेषांहिप्रकृतिःसताम् १९ इत्थंशक्रसखंजित्वा
प्रद्युम्नायबलिंददुः शिबिराणांसमूहोभूदरुणोदानवीमनुः २० महाधनखचिद्भिश्चवितानैःशतयोजन-
म् पतत्पताकैर्दिव्याभैर्भून्यस्तविजयध्वजैः २१ विरेजेशिबिरव्यूहोलहरीभिःपयोदधिः आकाशा-
दागतंतत्रगजारूढंपुरंदरम् २२ ससैन्यंसहसाराजन्दुंदुभिध्वनिसंयुतम् संवीक्ष्यवेगतोवीराजगृहुः-
शस्त्रसंहतिम् २३ पुनरिंद्रंचतंज्ञात्वाबभूवुर्हर्षितोनृपाः श्रीप्रद्युम्नसभामध्येकथितंचमघसखात् २४
शृणुराजन्महाबाहोत्त्वंपरावरवित्तमः लीलावतीनामपुरीसुमाहेमाद्रिसानुषु २५ विद्याधरेशःसुकृतिस्त-
त्रराज्यंकरोतिहि तत्कन्यासुंदरीनामशतचन्द्रनिभाशुभा २६ आगतादेवताःसर्वेतस्याराजन्स्वयंव-
रे लोकपालास्तथासर्वेसंप्राप्तादिव्यविग्रहा २७ यंदृष्ट्वामूर्छितनाहंस्यासमेभर्ताभविष्यति गिरेत्येवंस्म
जल्पंतिसुंदरंवरमिच्छती २८ तत्रापिगच्छसहसाभ्रातृभिःसहकौतुके स्वयंवरेपश्यवरंदेवलोकेश्वमं-
डितम् २९ नारदउवाच तच्छ्रुत्वाभगवान्कार्ष्णिर्यादवैर्भ्रातृभिःसह पुरंदरेणसहसापुरींलीलावतीं-
ययौ ३० विशालाजिरसंयुक्तेखर्विद्रत्नमनोहरे चंदनागरुकस्तूरीकुंकुमद्रवचर्चिते ३१ मुक्तामुक्तेस्तो-
रणैश्चवितानैःसुमहाधनैः जांबूनदाशनैःसाक्षादिंद्रलोकेशयापरे ३२ तस्मिन्स्वयंवरेतस्थोप्रद्युम्नोदिव्य-



203

५२ तदाजयजयारावोयदुसैन्येबभूवह जयदुंदुभयोनेदुःशासशंखमुर्हुर्जना: ५३ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादे शक्रसखयुद्धेनामसप्तचत्वारिंशोऽध्यायः ४७
नारदउवाच स्वपुरेपतितोमूर्छांगतःशक्रसखोभृशम् उत्तस्थौचक्षणत्तत्रकिंचिद्व्याकुलमानसः १
अथकार्ष्णिंपरंब्रह्मज्ञात्वाशक्रसखस्त्वरन् स्वसकाशाद्बलंनीत्वायदूनांचबलंययुः २ ऐरावतकुलेभैश्चत्रिदंडीस्कंडसत्तिनः चतुर्दंताःश्वेतवर्णाःसहस्राणिमदच्युतः ३ हेमाद्रिप्रभवानागोयोजनद्वयविग्रहाः कोटिशःपर्वताकाराउन्मत्तादिग्गजाइव ४ दिव्यास्वादिव्यगतायःकोटिशःकोटिशोनृपः शतार्बुदारथादिव्याशातकौंभमयापराः ५ अयुतानिविमानानियोजनद्वयशालिनाम् नियुतंकामधेनूनांपारिजातसहस्रकम् ६ करिदंतखचिद्दंताहेमरत्नखचित्पदाः मुक्तास्तवकसंयुक्तागुणायत्रस्फुरत्प्रभाः ७ मल्लिकामकरंदाढ्याशिरीषकुसुमाकुलाः पयःफेननिभाःशय्याःकोटिशःसोपबर्हणाः ८ वितानानिविचित्राणिभित्तिवस्त्राणिकोटिशः आसनानिमृदुस्पर्शचित्रवर्णानिसर्वशः ९ दीर्घाणिचोपबर्हाणिविश्वकर्मकृतानिच मुक्तास्तबकहेमर्षिःस्वचित्तानिसहस्रशः १०
सहस्रयोजवनिकाःशिबिकानांचकोटिशः छत्राणांचामराणांचदिव्यसिंहासनैःसह ११ व्यजनानांतथाकोटिराज्यश्रीभूषणानिच पीयूषाणांद्रोणकोटीस्रुधर्मंचसभांतथा १२ एवंचसर्वतोभद्रोपद्मानीतिसहस्रकः हीरकानांचहरितांमुक्तानांचतथानिच १३ गोमेदानांकोटिभारांनीलकानांतथैवच आदित्यचंद्रकांतीनांवैडूर्याणांसहस्रशः १४ स्यमंतकमणीनांचकोटिभारासमागतः तथा

४८ श्रीकृष्णबलदेवाभ्यांसर्वैर्वृद्धजनैः सह प्रद्युम्नंतंसमानेतुंउग्रसेनोविनिर्गतः ४९ गीतवादित्रघो
षेणब्रह्मघोषेणभूयसा मुक्तावर्षैर्लाजपुष्पैःपाठैरावैःसुमंगलैः ५० वानरेंद्रंपुरस्कृत्यसौवर्णैःकल-
शैर्नृप गंधर्वैर्वारमुख्याभिःशंखदुंदुभिवेणुभिः ५१ गंधाक्षतैर्हैमपात्रैःपुष्पधूपैर्यवांकुरैः उग्रसे
नशंबरारेः सन्मुखंचागजामह ५२ खड्गंनीत्वोग्रसेनस्यपुरोधृत्वाकृतांजलिः ननामकार्ष्णिर्यदुभि-
र्भ्रातृभिः सहमैथिलः ५३ श्रीकृष्णंसबलंनत्वासर्वान्वृद्धान्प्रणम्यच गर्गाचार्यंननामाथप्रद्युम्नोमी-
नकेतनः ५४ संश्लाघ्याप्यर्च्यविधिवत्ब्राह्मणैर्वेदसूक्तिभिः आरोप्यवारणेकार्ष्णिंउग्रसेनपुरींययौ ५५
द्वारिकायांमंगलोभूत्यदूनांचगृहेगृहे इत्थंनृपस्तेकथितः किंभूयःश्रोतुमिच्छसि ५६ इतिश्रीमद्गर्गा
चार्य्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेप्रद्युम्नद्वारिकागमनंनामाष्टचत्वारिंशोऽध्यायः ४८

नारदउवाच अथोग्रसेनोनृपतिःसर्वधर्मभृतांवरः श्रीकृष्णेनसहायेनक्रतुराजंचकारह १ गर्गाद्यदुकुला
चार्य्यान्मुहूर्तंबोध्ययत्नतः बंधुभ्यः प्रददौराजन्स्फुरद्दोपिनिमंत्रियन् २ भक्त्यापरमयाहूताऋषयोमुन
योद्विजाः आजग्मुर्द्वारकांसर्वेपुत्रशिष्यैःसमावृताः ३ वेदव्यासःशुकःसाक्षान्मैत्रेयोथपराशरः पौल
स्त्यसुमंतदुर्वासावैशंपायनइत्यपि ४ जैमिनिर्भार्गवोरामोदत्तात्रेयोसितोमुनिः अंगिरावामदेवोत्रिर्वसिष्ठः
कण्वएवच ५ विश्वामित्रःशतानंदोभारद्वाजोथगोतमः कपिलःसनकाद्याश्चविभांडश्चपतंजलिः ६-
द्रोणःकृपःप्राड्विपाकः शांडिल्योमुनिसत्तमः अन्येचमुनयोराजन्सशिष्याश्चसमागताः ७ ब्रह्माशिवो
जंभभेदीदेवारुद्रगणास्तथा आदित्यामरुतःसर्वेवसवोत्र्यग्नयोश्विनौ ८ यमोथवरुणःसोमोधनदोग-

आसने गिरिशृंगेयथाशृंगसर्वेषांपश्यतांनृप ३३ व्रजेशामुनयस्तत्रदेवारुद्रगणास्तथा मारुतोरवयश्चै
ववसवोह्यश्वयोश्विनौ ३४ यमोथवरुणः सोमोधनदः शक्रएवहि सिद्धविद्याधराश्चैवगंधर्वाः किन्नरा-
स्तथा ३५ अन्येतमागताः सर्वेरत्नाभरणभूषिताः जह्नवैर्वाहिकीमाशाप्रद्युम्नवीक्ष्यमैथिलः ३६-
सास्कंदरीतत्रसुरत्नमालयारतिंवरंमाक्षिपतीवनिर्गता वाणीरमारूपवतीस्फलोमजांविदुवरंतीवबभौवरांगे
नाम् ३७ यांवीक्ष्यसर्वेस्फसुदुःसुसर्वतोमोहंभयानेषुतथैवमैथिल श्रीःसर्वलोकस्यचपश्यतांवरम्विनिन्व-
तीसाचपलेवचांबुदम् ३८ दिव्यांबरंपद्मदलायतेक्षणंप्रद्युम्नवीरंनरलोकसुंदरम् समेत्यमूर्च्छांसमवापस्कं
दरीविद्याधरीशाशमवापस्कंदरम् ३९ समुत्थितासात्वतहर्षविह्वला तस्यौसुमालांविविधायतद्गले विद्या-
धरेशः सुकृतीश्वसुंदरीसुतांददौमैथिलशंबरारय ४० नदत्स्फतुर्व्येषुतदेवनिर्जरानसेहिरेवीक्ष्यविवाहमंग
लम् नृसर्वतः संरुरुधुः स्वयंवरंप्रचंडमेघाइवभास्करंपरम् ४१ क्रोधवृत्तान्वृतानमराधनुर्द्धरान्मदोद्धता-
न्वीक्ष्यहरेः स्वयंवरम् श्रीकृष्णदत्तंस्वफलंधनुःस्वयंत्वरंगृहीत्वायदुभिर्जगर्जह ४२ नृच्चापमुक्तैर्विशिखैः
स्फुरत्प्रभैश्छित्वायुधामैथिलशीर्णकंचुका विदुद्रुवुस्तेचदिशोदशामरानीहारमेघाइवसूर्यरश्मिभिः ४३-
प्रद्युम्नोभगवान्साक्षादित्थंजित्वास्वयंवरम् विजेत्वेलावृतखंडभारतगलुमुद्यतः ४४ भ्रातृभिर्यदुभिः-
सैन्यैःसर्वैर्मंत्रजनैःसह आययौभारतखंडनादयन्जयदुंदुभीन् ४५ पश्यन्देशाननेकांश्चजंबूद्वीपजयावली-
आवर्तान्द्वारकान्देशान्प्राप्तोमूर्च्छिहरेःस्फतः ४६ प्रद्युम्नःप्रेषितःसाक्षादुद्धवोबुद्धिसत्तमः प्रणनामोग्र
सेनंतंसभायांश्रीहरिंबली ४७ वर्षेवर्षेपियज्जातंजंबूद्वीपजयंतथा तत्सर्वंहियथायोग्याकथयामासचोद्धवः

अन्येपितत्रराजानःसुहृत्संबंधिबांधवाः सकान्स्मृतिभिःपौत्रैःपुत्रैराजग्मुरध्वरम् २७ इतिश्रीमद्गर्गाचार्यसंहितायांविश्वजित्खंडेनारदबहुलाश्वसंवादेस्वजननिमंत्रणंनामैकोनपंचाशत्तमोऽध्यायः ४९

नारदउवाच अथसिद्धेरथद्वारेरैवताद्रिसमुद्रयोः मध्येपिंडारकेक्षेत्रेयज्ञारंभोबभूवह १ पंचयोजनविस्तीर्णःकुंडोभूद्यस्यचाध्वरे योजनंब्रह्मकुंडस्तुगव्यूतिःपंचकुंडकाः २ मेखलागर्तविस्तारोवेदीभिर्निर्मिताहृशः सहस्रहस्तमुच्चांगोयज्ञस्तंभोबभौमहान् ३ पंचयोजनविस्तीर्णःसौवर्णोयज्ञमंडपः वितानतोरणैरेजेकदलीखंडमंडितः ४ भोजवृष्ण्यंधकमधुशूरसेनादशार्हकाः देवैश्चसहितोराजाबभौशक्रइवाध्वरे ५ यज्ञावतारःश्रीकृष्णःपरिपूर्णतमोध्वरे बभौपुत्रैश्चपौत्रैश्चपरमात्मैवभूतिभिः ६ महासंभृतसंभारेराजसूयेध्वरेवरे गर्गाचार्यंगुरुंकृत्वायदुराजोत्यदीक्षितः ७ होतारोदशलक्षाणिदशलक्षाणिदीक्षिताः अध्वर्य्यवःपंचलक्षमुद्गातारस्तथापरे ८ हस्तिशुंडासमाधाराभुक्ताज्यस्यहुताशनः अजीर्णंप्रापतद्यज्ञेचित्रंविविधमैथिलः ९ केपिजीवास्त्रिलोक्यांतुनबभूवुर्बुभुक्षिताः सर्वेदेवास्तुसोमेनत्वजीर्णत्वमुपागताः १० रुक्मिमत्याधर्मपत्न्योग्रसेनोयदुराड्बली अध्वरावभृथस्नानेतीर्थेपिंडारकेकरोत् ११ व्यासाद्यैर्मुनिभिःस्नातोविधिवद्वेदसूक्तिभिः यथादक्षिणयायज्ञोरुक्मिमात्माबभौनृप १२ देवदुंदुभयोनेदुर्नरदुंदुभयस्तदा उग्रसेनोपरिसुराःपुष्पवर्षंप्रचक्रिरे १३ गजानांहेमभाराणांनियुतानिचतुर्दश शतार्बुदंहयानांतुयज्ञांतेदक्षिणांपराम् १४ कोटिशोनवरत्नानांमहाहाराम्बरैःसह गर्गाचार्यायमुनयेगृहोपस्करसंयुताम् १५ उग्रसेनोददौराजायादवेंद्रोमहामना गजानांतत्रसाहस्रंहयानामयुतंतथा १६ विं

णनायकः सिद्धविद्याधराश्चैवगंधर्वाः किन्नरादयः ९ गंधर्वास्सरसःसर्वाविद्याधर्य्यःसमागताः वेताळादानवादैत्याः प्रन्हादोबलिनासह १० रक्षोविभीषणैःसार्द्धंलंकाधीशोविभीषणः सर्वैश्चवानरैःसार्द्धंहनूमान्वायुनंदनः ११ ऋक्षैश्चदंष्ट्रिभिःसार्द्धंजांबवानृक्षराड्बली सर्वैश्चपक्षिभिःसार्द्धंगरुडःपक्षिराड्बली १२ सर्वैःसरीसृपैःसार्द्धंवासुकिर्नागराड्बली गोरूपधारिणीपृथ्वीसर्वाभिः कामधेनुभिः १३ सर्वैःशैलैर्मूर्तिमद्भिः सुमेरुश्चहिमाचलः गुल्मवृक्षलताभिश्चवटःसाक्षात्प्रयागराट् १४ महानदीभिःसहिताश्रीगंगायमुनानदी पारावारास्सरथारत्नोपायनसंयुताः १५ आजग्मुरुग्रसेनस्यराजसूयस्यचाध्वरे सप्तसूर्यस्त्रियोग्रामानवारिण्यानवोरवला १६ चतुर्दशैवगुह्यानिविख्यातानिमहीतले तीर्थराजःप्रयागश्चपुष्करंबद्रिकाश्रमम् १७ सिद्धाश्रमोविनसनकुंडैःसर्वैःसरोवरैः वनानिदंडकादीनिसर्वैश्चोपवनैःसह १८ क्षत्रैःसमग्रैर्विमलैरेतेतत्रसमाययुः श्रीमद्गोवर्द्धनोनामगिरिराजोव्रजेश्वरिः १९ वृंदावनैर्व्रजवनैःसरत्कुंडैःसमाययौ कीर्तिर्यशोमतिःसाक्षाद्गोपीभिर्गोपिकेश्वरी २० श्रीराधाशिबिकारूढासखीसंघैश्चकोटिभिः शतयूथश्चगोपीनांद्वारकांप्रययौमुदा २१ नासांवासोयत्रयत्रगोपीभूमिश्चसाभवत् तदंगरागसंजातंगोपीचंदनमेवहि २२ गोपीचंदनलिप्तांगोनरोनारायणोभवत् चतुर्वर्णास्तथासर्वेआजग्मुस्तस्यचाध्वरे २३ धृतराष्ट्रोबुद्धिचक्षुः साक्षात्दुर्योधनःकलिः शाल्वोभीष्मश्चकर्णश्चकुंतीपुत्रोयुधिष्ठिरः २४ भीमोर्जुनोथनकुलःसहदेवस्तथापरे दमघोषोवृहद्धर्माजयसेनोमहानृपः २५ धृष्टकेतुर्भीष्मकश्चनाग्नजित्कोशलेश्वरः वृहत्सेनोधृतिःसाक्षान्मैथिलेशःपितामहः २६

शाङ्गारं सुवर्णानां ब्राह्मणे ब्राह्मणो ददौ मरुतस्य महायज्ञे त्यक्तया त्राय यथा द्विजा १७ तथोग्रसेनस्य क्रतो संतुष्टा हर्षिता गताः संतुष्टा देवताः सर्वाः प्राप्तभागा दिवं गताः १८ भूमिद्रव्या वंदिनश्च जयारावा गृहं गताः - रक्षोदैत्या वानराश्च दंष्ट्रिणः पक्षिणस्तथा १९ नागाः संतुष्टमनसः सर्वे स्वं स्वं गृहं ययुः गावः शैलावृक्ष-संघा नदी तीर्थाश्च सिंधवः २० संतुष्टाः प्राप्तभागा ये ते सर्वे स्वगृहं ययुः राजानो ये समाहूताः पारिबर्हेण भूयसा २१ पूजिता दानमानाभ्यां तेपि स्वस्वगृहं गताः नंदाद्या गोपमुख्या ये श्रीकृष्णेन प्रपूजिताः २२ हर्षिताः प्रेमदानाभ्यां तेपि सर्वे व्रजं ययुः एतत्ते कथितं राजन्महायज्ञस्य मंडलम् २३ यत्र श्रीकृष्णचंद्रोस्ति तत्र किं सफलं नहि ये शृण्वंति कथामेतां पठंति सततं नराः २४ धर्ममर्थं च कामं च मोक्षं तेषां प्रजायते २५ पूर्णः परेशः परमेश्वरः प्रभुः पुनातु वो यः पुरुषः पुराणः शृण्वंति ये तस्य कथां विचित्रां कुर्वंति तीर्थं स्वकुलं नरास्ते २६ छलेन यज्ञस्य हरिः परेन्द्रो भारं विदेहे शभुवोवतारयत् योभूच्चतुर्व्यूहधरो यदोः-कुले तस्मै नमोऽनंतगुणाय भूभृते २७ इति श्रीमद्गर्गाचार्यसंहितायां विश्वजित्खंडे नारदबहुलाश्वसंवादे उग्रसेनमहोदये राजसूययज्ञोत्सववर्णनं नाम पंचाशत्तमोऽध्यायः ५० श्रीगोपालकृष्णार्पणमस्तु -

श्रीगणेशायनमः बहुलाश्वउवाच श्रुतंतवमुखाद्ब्रह्मन्मंगलंपरमाद्भुतं सुधाखंडात्परंमिष्टंखंडंविश्वजितंप
रं १ परिपूर्णतमस्यापिश्रीकृष्णस्यमहात्मनः षोडशस्त्रीसहस्राणांपुत्रादशदशाभवन् २ तेषांपुत्राश्चपौत्राश्च
बभूवुःकोटिशोमुने रजांसिभूमेर्गणयेन्नकविश्वेद्धरेःकुलं ३ रेवत्यांबलदेवस्य रामस्यापिमहात्मनः पुत्रोदयः
कथंनस्यादेतन्मेब्रूहितत्वतः ४ श्रीनारदउवाच बाढमुक्तंभगवतःसंकर्षणस्याच्युताग्रजस्यबलभद्रस्यरामस्य
कामपालस्यकथांसर्वथातवाग्रेकथयिष्यामि ५ अथकदाचित्प्राड्विपाकोनाममुनींद्रोयोगींद्रोदुर्योधनगुरुर्ग
जाह्वयंनामपुरंप्राजगाम ६ सुयोधनेनसंपूतःपरमादरेणसोपचारेणमहार्हसिंहासनेस्थितोभूत् ७ तंप्रदक्षि
णीकृत्यप्रणिपत्यकृतांजलिः पुरःस्थितोमनसंदेहंस्मृत्वा धार्तराष्ट्रइतिहोवाच ८ संकर्षणःसाक्षाद्बलभद्रःकिं
कारणात्कस्माल्लोकात्केनप्रार्थितो भूलोकानाजगामयेनेदंपुरंतिर्यग्भूतमभवत् तस्यममगुरोर्गदाशिक्षाकर
स्याहोतत्प्रभावंनितरांवदात् ९ प्राड्विपाकउवाच युवराजकुरूद्वहेयदुवरस्यप्रभावंशृणुयच्छ्रवणेपाप
हानिःपरंभूयात् १० अस्मिन्द्वापरांतेनृपव्याजदैत्यानीककोटिभिर्भूरिभराक्रांताभूर्गौर्भूत्वास्वयंभुवंशरणं
जगाम ११ तदुपच्चर्यसुरश्रेष्ठःसर्वसुरगणैः समृद्धोवैकुंठनाथंपुरस्कृत्यश्रीवामनवामपादांगुष्ठनखनिर्भिन्ना
ण्डकटाहविवरमार्गेणबहिर्निर्गत्यकोटिशोंडनिचयं ब्रह्मद्रवेसंप्रेक्षन्विरजातीरंप्राप्तवान् १२ अथाग्रे सं
ख्यकोटिमार्तंडज्योतिषांमंडलमवेक्ष्यधातानत्वाध्यात्वातत्रानंतंसहस्रवदनंसंकर्षणंसर्वगुणलक्षणलक्षितं-
देवैःसहददर्श १३ तद्भोगकुंडलीभूतोत्संगेवृंदारण्यकालिंदीगोवर्द्धनाद्रिकुंजनिकुंजलतातरुपुंजगोपालगो
पीगोकुलसंकुलंललितगोलोकंसर्वलोकनमस्कृतं समेत्यतत्रनिजनिकुंजेनिजाज्ञांनीत्वांतःप्राप्यसाक्षात्परिपू

नमौलिमंडलमंडितः प्रस्फुरत्किरीटकटकांगदः सभामेत्यानंतविग्रहे संप्रलीनोभूत् ७ अथपातालस्याधस्तात् द्वा
त्रिंशद्योजनसहस्रांतरात्समागतोभगवतस्तामसी कलःसाक्षात्सहस्रवदनकिरीटमार्तंडमंडलमंडितो वेदव्यासपराश
रसनकसनंदनसनातनसनत्कुमार नारदसांख्यायनपुलस्त्यबृहस्पतिमैत्रेयादिमहर्षिभिः संशोभितो वासुकीम
हाशंखश्वेतधनंजयधृतराष्ट्रकुहककालियतक्षककंबलाश्वतरदेवदत्तादिभिः नागेंद्रैश्चामरपाणिभिः संसेव्यमा
नोमृगमदागुरुकुंकुमचंदनपंकावलिप्यमानाभिर्नागकन्याभिः संस्तूयमानः सिद्धचारणगंधर्वविद्याधरगणैरुपगी
यमानो हाटकेश्वरत्रिपुरबलकालकेयकलिनिवातकवचैरनुपायिभिः पुरःसरैः रुद्रैकादशव्यूहैर्नाभिकामधेनुवर
णैः पश्चात्प्रयायिभिर्वीणावेणुमृदंगतालदुंदुभिध्वानशब्दायमानः फणींद्रोनागेंद्र इवतूर्व्यगतिर्विराजतय-
स्यैकफणेन्चेदं क्षितिमंडलंसिद्धार्थइवलक्ष्यतेसोप्यागत्यमहानंतविग्रहे संलीनोभूत् ८ तच्चित्रंदृष्ट्वातत्सभापा
र्षदाः सर्वेतंपरिपूर्णतमंज्ञात्वावनताविस्मिताबभूवुः ९ अथानंतवदनोमहानंतः संकर्षणोभगवान् पार्षदा
न् १० सिद्धानुवाच अहंभूरिभारहरणार्थंभुविगमिष्यामि तस्माद्यूयंयादवेषुभविष्यथ ११ भोप्रबलोद्भ
टसुमतेसारथेभवतान्नैवस्थीयतांशोचंमाकुरुतात् यदायुद्धार्थीत्वत्स्मरणंकरिष्यामितदात्वंदिव्यंतालांकंरथं-
नीत्वामत्समीपमागमिष्यसि १२ हेहलमुशलेयदायदायुवयोःस्मरणंकरिष्यामितदातदामत्पुरराविर्भूतंभवतं
१३ भोचर्मत्वमपिन्चाविर्भवहेमुनयः पाणिन्याद्योहेव्यासादयो हे कुमुदाद्यो हे कोटिकरुद्राहेभवानीनाथहेको
टिशोरुद्राहेभवानीनाथहे एकादशरुद्राहेगंधर्वाहे वासुक्यादिनागेंद्राहेनिवातकवचाहेवरुणहे कामधेनोभूभ्यां
भरतखंडेयदुकुलेऽवतारंमांयूयंसर्वेसर्वदाएत्यममदर्शनंकुरुत प्राड्विपाकउवाच इत्याज्ञप्ताः सर्वेस्वं धाम समाज

र्णतमं स्वयंश्रीकृष्णचंद्रमसंख्यब्रह्मांडपतिंश्रीराधापतिंश्यामलक्ष्विपीतांबरवनमालावंशीधरं क्कणत्कनक
नूपुरकिंकिणीकटकांगदहारस्फुरत्कौस्तुभांगुलीयकैः सर्वतः परिस्फुरत्कोटिबालमार्तंडमंडलकिरीटकुंडलमंडित
गंडस्थलमलकालिभिर्विभ्राजमानमुखारविंदंनमस्कृत्यविधिः सर्वैः सर्वभूभारवृत्तांतंकथयांबभूव १४ तेषांवि
ज्ञप्तिंविज्ञायभूरिभारहरणार्थंभगवान्स्वजनान् सर्वदेवान्यथातथ माज्ञांदत्वा ऽनंतंसहस्रवदनमितिहोवाच
१५ अंगपुरस्त्वमपिवसुदेवस्यदेवक्यांभूत्वारोहिण्युदरादाविर्भवपश्चाद्देवक्याःपुत्रतामहंप्राप्स्यामि १६ इति
श्रीमद्गर्गाचार्यसंहितायां बलभद्रखंडे दुर्योधनप्राड्विपाकसंवादेऽवतारकारणं नामप्रथमोध्यायः १ प्राड्वि-
पाकउवाच इत्युक्तः सहस्रवदनोगंतुमभ्युदितःस्वसभायांस्थितोभूत् तंदेवसिद्धचारणगन्धर्वाः सर्वतस्तं नत
कंधराबभूवुः १ अथसुगतिः सारथिर्दिव्यरथतालांकं साश्वंसमानीयसन्मुखः स्थितोभूत् २ परसैन्यविदा
रणंमुसलंदैत्यदमनंहलंतेतूर्णंपुरस्तादुपतस्थतुः ब्रह्ममयंनामवर्मचोपतस्थे ३ अथतत्रश्रीबलभद्रसभायां
सर्वेषांपश्यतांरमावैकुंठात्समागतः पाणिनिपतंजलिभिर्मुनिभिः स्तूयमान सहस्रफणमौलिविराजमानः सिद्ध-
चारणचामरसंसेव्यमानः शेषस्तमनंतंसंकर्षणंस्तुत्वातद्विग्रहेसंलीनोभूत ४ अथाजितवैकुंठात्समागतो ऽ
जैकपादहिर्बुध्न्यबहुरूपमहदादिभिः संवेष्टितः घोरैः प्रेतविनायकैः संचेष्टितः शेषः सहस्रवदनः समागत्यससभा
यामनंतस्तुत्वातस्मिन्संलीनोभूत् ५ अथश्वेतद्वीपात्समागतः कुमुदकुमुदाक्षादिभिः पार्षदप्रवरैः संसेव्यमानः
सहस्रफणमौलिविराजमानः सिताचलाभोनीलांबरोनीलकुंतलाभोभीमाभः सर्वेषांपश्यतांअनंतविग्रहेसो-
पिसंलीनोभूत ६ अथतद्वेलावृतखंडात्समागतः स्त्रीगणार्बुदसहस्रैर्भवानीनाथैः समावृतः शेषः सहस्रवद-

भूखंडमंडलेषुमंडलपतिभिर्घृष्टपादपुंडरीकः पुरंदराभिर्लंघितचंडशासनः प्रचंडदोर्दंडविखंडितारिदोर्दंडः सर्वगु
णगणमंडितस्तस्माद्बभूव ७ तस्यपुरुषसुद्युम्नाद्याःपुत्राबभूवुः तस्ययज्ञकुंडलसमुद्भवाकन्याज्योतिष्मतीजाता ८
एकदास्नेहाच्चाक्षुषःपुत्रींपप्रच्छकीदृशंवरमिच्छसीतिवदसातदोवाचयःसर्वेषांबलवान्समेवरोभूयात् ९ तच्छ्रु
त्वाराजाशक्रंबलवंतंज्ञात्वातमाजुहावतदैवसद्यःसमागतंवज्रिणंपुरःस्थितंसादरेणासनंदत्वामनुःप्राह १० त्वत्तः
कोपिबलवान्वर्ततेनवातत्सत्यंवदनचेत्स्मृतिः सत्यसत्यात्परोधर्मः इतिहोवाचभूरियंसर्वंवोढुमलंमन्येऽतःतलोक
पंनरं इंद्रउवाच अहंबलवान्नास्मिमत्तोबलवान्वायुरस्तियेनसहायेनकार्यंकारयिष्यामि इत्युक्त्वागतेशक्रेराजावायु-
माजुहावत्वत्तःकोपिबलवान्वर्ततेसत्यंवदतात् १२ वायुरुवाच मत्तोबलवंतःपर्वताःसंतिमद्वेगेननोद्रीयमा
नाः इत्युक्त्वागतेवायौराजापर्वतानाजुहावाहभवन्थः कोपिकोबलवान्वर्ततेसत्यंवदत १३ पर्वताःप्राहुरस्म
द्धारणाद्भूखंडंबलवद्वर्ततेयत्रवयंस्थिताःस्मः पर्वतेषुगतेषुभूखंडमंडलंसमाहूयराजाप्राहत्वत्तःकोपिबलवान्वर्त
तेनवासत्यंवद १४ तच्छ्रुत्वाभूखंडउवाच मत्तोबलवान्संकर्षणोभगवान्वर्ततेसोयंसदानंतोनंतगुणार्णव-
आदिदेवोवासुदेवःसहस्रवदनोनागेंद्र इवभव्यवपुः कैलासइवशुक्लप्रकाशःकोटिसूर्यप्रतिभासःकोटिकंदर्पदर्पहारि-
लावण्येनविभ्राजमानःकमलपत्राक्षः कमलकर्णिकादिव्यविमलमालानिर्मलपरिमलपरिलोभितमधुकरनि
करसंगीयमानःसिद्धचारणगंधर्वविद्याधरवरगणैरुपगीयमानःसुरासुरोरगमुनिगणैःसंध्यायमानःसर्वोप
रिविराजमानआस्ते १५ यस्यैकस्मिन्मूर्द्धिसगिरिसरित्समुद्रवनजीवकोटिमंडितंभूखंडमंडलमहंदृश्येयन्ना-
मानुकीर्तयेत् त्रिलोक्यांत्रैलोक्यघात्यपिकैवल्यंप्राप्नोति १६ एवंप्रभावोभगवान्सर्वतोबलवान्सर्वकारण

ग्मुः तेषुगतेषुनागकन्यायूथं भगवाननंतःप्राहयुष्माकमभिप्रायोमयाज्ञातस्तपसागोपालानांगृहेषु जन्मानिप्राप्य मम
दर्शनंकुरुत १५ कदाचित्कलिंदनंदिनीकूलेविहारमाधुर्य्यमूलेयुष्माभिः सहरासमंडलंकरिष्यामि युष्माकंमनोरथः स-
फलोभवति १६ अथनिवातकवचानांराजा कलिः स्वामिपादकृतमस्तकांजलिःप्रदत्तपुष्पावलिः श्रीभगवंतंप्रत्युवाच
१७ अहंकिंकरिष्यामिमय्याज्ञांकुरुभगवन्पुनस्त्वंगमिष्यसितत्राप्यहंगमिष्यामि हवावत्वद्वियोगेनमहान्खेदोभविष्यत् स
हैवमानयत्वंभक्तवत्सलोसि १८ एवंसंप्रार्थितोभगवाननंतः कलिंराजानंस्वभक्तंप्रसन्नःप्रत्युवाचसुखेनत्वंमत्सहैवाग-
च्छभरतखंडेकौरवेंद्राणांकुले धृतराष्ट्रस्य पुत्रोभूत्वा दुर्योधनोनामचक्रवर्तीभविष्यसित्वत्सहायमहंकरिष्यामि गदाशि
क्षांदास्यामि १९ इत्युक्तः कलिस्तंनमस्कृत्य स्वसकाशंगतवान् सैषकलिस्त्वमेवजातोसि विष्णुमाययास्वात्मानंनस्म
रसि २० इतिश्रीमद्गर्गाचार्यसंहितायांबलभद्रखंडे प्राड्विपाकदुर्योधनसंवादे संकर्षणागमनतंत्रोनाम द्वितीयो-
ध्यायः २ प्राड्विपाकउवाच अथागताकोटिशरच्चंद्रमंडलप्रतीकाशानागलक्ष्मीमहारथस्थासखीकोटिमंडल-
मंडितासंकर्षणंमहानंतंभर्तारंसभायांप्राह १ अहमपित्वयासहैव भगवन्भुवंगमिष्यामित्वद्वियोगातुराप्राणा
न्नधारयामि २ इतिवाक्यकंठींप्रियांसंप्रेक्ष्यभगवाननंतः सर्वजगत्कारणकारणः सर्वभक्तदुःखनिवारणोमहेंद्रवार-
ण इवभोगवारणइतिहोवाच ३ रंभोरुत्वंरेवतीविग्रहेसंलीनाभूत्वाभूलोकंभजतात् माशोचंकुरुतात् ४ तच्छ्रु
त्वानागलक्ष्मीः प्रत्युवाच रेवतीकाकस्यसुताक्ववर्तमानानितरांवदे तत्तच्छ्रुत्वा भगवान्ननंतः सस्मितः स्वप्रियांप्र-
त्युवाच ५ आदिसर्गेकश्यपस्यकद्रूसुतोत्वहंजातः श्रीकृष्णाज्ञयात्वखंडे भूखंडमंडलंगजराडिवनैकफणेकमंड
लुमिव धृत्वासर्वतो धस्ताद्विराजमानोहंबभूव ६ अथमयिस्थितेचक्षुषः पुत्रोऽतिबलश्चाक्षुषोनाममनुस्सप्तद्वीप

साक्षादुरुक्रमः मंगलं भजमां भद्रे भूत्वा भुरि भवार्थीनी ९ बुधउवाच बुधोहंबुद्धिमान्वीरः कामिनीरसर्व
ईनः विसृज्यसर्वनाकेशान् रमस्वत्वंमयासह १० बृहस्पतिरुवाच गीष्पतिर्धिषणोहंवैसुराचार्योबृहस्प
तिः साक्षाद्देवगुरुर्लोकेभजमांमन्यसेशुभे ११ शुक्रउवाच साक्षाद्दैत्यगुरुःकाव्योभार्गवोहंमहामते स्व
श्रेयस्तुविचार्यैवंभवमद्वामिनीभृशं १२ शनिरुवाच सर्वेषांबलवान्भद्रे अहंदेवोपरिस्थितः त्यज-
शोचंवरयमांलोकभस्मीकरं दृशा १३ महानंतउवाच अथज्योतिष्मतीतेषांवचांसिश्रुत्वारुणनेत्रास्फुर
दधराचलद्भ्रूभंगाप्रोद्यद्रोषाग्निप्रकर्षोच्छलज्ज्वटामांपरंसस्मारपरंक्रोधंचकार १४ तेनसखंडमहीमंडलंब्र
ह्मांडमपिपरंचाब्रह्मलोकान् दृढमेजत्सर्वतोमहद्भयंबभूव १५ तदैवशक्राद्याःशापभयभीताः प्रकंपिताः
कृतबलिपाणयःपादपद्मे परितोनिपेतुः पाहिपाहीतिजगुस्तैरित्थंशांतापिज्योतिष्मती पृथक्पृथक् तान् शशा
पज्योतिष्मत्युवाच १६ छलयितुमिहमांसमागतस्त्वं भवखलपंगुरधः समीक्षणश्चदुःशततनुरतिदुष्णाकुत्सिता
भोभवसहसासितमाषतैलभक्षी १७ हेशुक्रअक्ष्णाभवकाणआशुस्त्रीसंज्ञकस्त्वंभवगीष्पतेनहेसोम्यते
वारदिनंहिशून्यंवदंतिगच्छंतिनकेकदाचित् १८ हेमंगलत्वंभववानराननोनिशाकरत्वंभवराजयक्ष्मवान्
त्वंभग्नदंतोभवभोदिवाकरपाशिन्रुचित्वंभवताज्जलंधरी १९ त्वंसर्वभक्षोभवतादुषर्बुधः मनुष्यधर्मन्हत-
पुष्पकोभववैवस्वतत्वंबहुमानभंगोभवाशुयुद्धे प्रबलेनरक्षसा २० मांहर्तुमागत्यसुराधमास्थिनकरोषिनिंदां
परमात्मनोगिरा तवप्रियांकोपिनृपोहरिष्यतिकरिष्यतिस्वर्गसुखंगतेत्वयि २१ पाशेनबद्धंयुधिनिर्जितंत्वां
बलाद्गृहीत्वाखलकोपिरक्षः लंकापुरीमेत्यदिवस्पतेर्थिन् कारागृहेबंधेकिलकारयिष्यति २२ श्रीमहानंतउवा



210

कारणः सर्वेश्वरादुरंतवीर्य्यो मूले रसायास्थितास्तस्मात्परः कोपि नास्ति १७ महानंतउवाच इत्यन्काग्रते भूखंडे चाक्षुषः कन्याज्योतिष्मती मम माधुर्य्यप्रभावं विज्ञाय पित्रा ज्ञागृहीत्वा विंध्याचले मन्नाप्त्यर्थं वर्षाणां लक्षाणि ब्रह्मतपस्तेपे १८ ग्रीष्मे पंचाग्नितप्तावर्षासु सर्वासारिणी शिशिरेष्वाकंठमग्ना शीतोदके भूत्वा स्थंडिलशायिनी बभूव १९ इति श्रीमद्गर्गाचार्यसंहितायां बलभद्रखंडे ज्योतिष्मत्क पाख्यानं नाम तृतीयोध्यायः ३

श्रीमहानंतउवाच अथ ज्योतिष्मतीं शतचंद्रभर्ता काशां नवयौवनां सुंदरीं तपस्विनीं वीक्ष्य शक्रयमधनदाग्निवरुणसोमसूर्य मंगल बुध बृहस्पति शुक्र शनयः सर्वे नद्रूपोद्दीपित काम संमोहितचित्तास्तदाश्रममेत्य तामूचुः १ हे सुंदरि रंभोरु धन्यासि कस्यार्थं तपः करोषि ते वयस्तपो योग्यं नास्ति मनोभिप्रायं स्वकमस्माकं वदेति तच्छ्रुत्वा-ज्योतिष्मत्युवाच भगवाननंतः सहस्रवदनो मम भर्ता भूयात् एतदर्थं तपस्तपामि इति तद्वचः श्रुत्वा सर्वे जहसुः पृथक्पृथक् तेषां सर्वमिंद्र इदमाह २ इंद्रउवाच सर्पराजं वरं कर्तुं किं वृथा तपसे शुभे देवराजं वरय मां स्वतः प्राप्तं शतक्रतुं यमउवाच यमराजं वरय मां दंडनेतारमाजगत् सर्वेत्तमा त्वं मत्स्त्री पितृलोके भविष्यसि २ धनदउवाच राजराजं हि मां विद्धि निधीशं हे वरांगने त्वं भजास्मद्विशालाक्षि ध्वजसंकर्षणे रतिः ४ अग्निरुवाच सर्वदेवमुखं विद्धि सर्वयज्ञप्रतिष्ठितं भज मां त्वं विशालाक्षि विहायान्यत्र वासनां ५ वरुणउवाच लोकपालं वरय मां पाशिनं यादसांपतिं सप्तानां हि समुद्राणां वैभवं पश्य भामिनि ६ सूर्यउवाच जगच्चक्षुः सदाहं वै चंडांशुश्चाक्षुषात्मजे विहाय पातालगतिं वर मां स्वर्गभूषणं ७ सोमउवाच द्विजराजश्चौषधीशो नक्षत्रेशः सुधाकरः कामिनी बलमोहं वै भज मां गजगामिनि ८ मंगलउवाच इयं मही हि मे माता पिता

वर्ततेरंभोरुतस्यांत्वंसलीनाभूत्वाऽऽवेशावतारिणीद्वारकांप्राप्यरमस्व ३३ प्राड्विपाकउवाच इत्थंतद्वाक्यंश्रुत्वाना
गलक्ष्मीसंकर्षणंभर्तारमनुज्ञाप्यब्रह्मलोकमेत्सेरवतीविग्रहेस्वावेशंचकार ३४ अथसंकर्षणोभगवान्भूरिभूमि
भारहरणार्थंलोकनमस्कृताद्गोलोकधामसकाशादवततारे इबलभद्रस्यभगवतआगमनंमयातेकथितंसर्वदुरिताप
हरणंमंगलायनंयुवराजकौरवेंद्रकिंभूयःश्रोतुमिच्छसिइति ३५ इतिश्रीमद्गार्गाचार्यसंहितायांश्रीबलभद्रखं
डेज्योतिष्मतीउपाख्यानेरेवत्युपाख्यानेनामचतुर्थोध्यायः ४ दुर्योधनउवाच मुनींद्रअहोअहंधन्योस्मिपुरासंक
र्षणस्यभक्तोस्मित्वयास्मारितोभगवतोवासुदेवस्यसप्रभावंमाहात्म्यंपरमाद्भुतंश्रुतमत्रावतारोभूत्वाभूम्यांरामकृष्णौ
पितुःपुरात्कथंव्रजेगतवंतौव्रजवासिभिर्नज्ञातौगुप्तौकथमभूतांतदुच्यतां १ प्राड्विपाकउवाच अथैकदामथुरा
यांयदुपुर्य्यांउग्रसेनाग्रजोदेवकोदेवकींसुतांवसुदेवायददौवरवध्वोः प्रयाणकालेकंसउग्रसेनात्मजस्तयोःस्यंदनंनो
दयामास २ तदैवदेववाणीकंसमाहूयावदत्सेऽस्याश्चाष्टमोगर्भोहत्वात्वांहनिष्यति इतिश्रुत्वामहासुरः कालनेमिः
कंसःखड्गपाणिर्भगिनींहंतुंप्रवृत्तः ३ तदैववसुदेवस्तंबोधयित्वाप्राहेनांमामारयअस्याःपुत्रान्समर्पयिष्येयतस्ते
भयंजातंममपि इतिश्रुत्वातद्वाक्यसारवित्कंसः तौकारागारेकारयित्वानिश्चलोप्यभवत् ४ अथदेवक्याःप्रथमं-
जातंपुत्रंकंसायवसुदेवःप्रददौतंसत्यवादिनंज्ञात्वाकंसोर्भकंनजघान ५ अंकानांवामतोगतिस्तथादेवानांतस्माद
यंवाशत्रुःसर्वेयादवादेवाःसंतितवबधमिच्छंति इतिनारदवाक्यात्पुनर्जातंजातमपिनिर्जघान ६ अथकंसभया
त्पलायितानांयदूनांमहान्कष्टोबभूव अथसप्तमोगर्भोदेवक्याभगवाननंतोत्यभवत् तत्तेजःश्रीकृष्णाज्ञयायोग-
मायादेवक्युदरात्संनिकृष्यवसुदेवस्यभार्यायांकंसभयाद्गोकुलस्थितायांरोहिण्यामर्पयित्वमाजगाम ७ तत्रए

च अथहवावतयासप्तानांदेवानांमध्येकुपितः शक्रोपितांशशापकोपकारिणिसंकर्षणंवरमपिप्राप्यात्र जन्मनिअन्यत्रवा
कदाचित्तवपुत्रोत्सवोमाभूयात् एवमुक्त्वाशक्रोपितत्तेजसाधर्षितः सर्वदेवगणैः सहस्वर्गंजगामपुनः सातपस्तेपे २३
अथतत्तपोदृष्ट्वाब्रह्माब्रह्मर्षिभिर्ब्राह्मणैब्रह्म्यादिभिः संवृतसर्वजगत्कारणभूतः स्वभवनाद्धंसयानेनागतवान् २४
अंबरेस्थितांतामाहइतिज्योतिष्मतिचक्षमस्वजेत्वत्तपः सफलंजातंतेनसिद्धासिपरमहंप्रसन्नोस्मिवरंब्रूहीतिजगाद् २५
तच्छ्रुत्वाद्कजलाद्विनिर्गत्यब्रह्माणंप्रणिपत्यस्तुत्वाकृतांजलिरित्यब्रवीत् हेभगवन् यदिप्रसन्नोसिकिलेहसंकर्षणोभ
गवान् सहस्रवदनोममवरोभूयात् इतिश्रुत्वाहवावविबुधर्षभप्रभुरुवाच २६ हेपुत्रितवमनोरथोदुर्लभोस्तितथा
पिपूर्णंकरिष्यामि अथैववैवस्वतमन्वंतरःप्राप्तोस्तित्र्यस्यत्रिनवचतुर्युगविकल्पिते कालेसतितत्रवरः संकर्षणोभ-
गवान्भविष्यति २७ तच्छ्रुत्वाज्योतिष्मतीब्रह्माणमाह देवदेवभगवन्महान्कालोवर्ततेममनोरथः शीघ्रंभूया
त् त्वंसर्वकार्यैकर्तुंसमर्थः नचेत्तुभ्यंशापंदास्यामियथादेवेभ्योदत्तः २८ इतिप्रोक्तोब्रह्मशापभीतक्षणंविचार्यपु
नराह हेराजपुत्रित्वमानर्तपतेरैवतस्यकुशस्थल्यां पुत्रीभवतस्मिन् जन्मनित्रिनवचतुर्युगविकल्पितः कालः केनचि-
त्कारणेनक्षणवद्भविष्यति इतितस्यैववरदत्वाब्रह्मातत्रैवांतरधीयत २९ अथासाप्यानर्तपुकुशस्थलीपुरेरैवतस्य-
भार्यायांजन्मलेभेतत्रज्योतिस्मतीरे वतीनामरूपौदार्य्यगुणमंडितानवशरत्कंजनेत्राविवाहयोग्याबभूव ३० तां
रैवतःस्नेहेनांतःपुरेसभार्यउवाच कीदृशंवरमिच्छसीतिवद श्रुत्वासानंदोवाच सर्वेषांबलवान्समेवरोभूयात् ३१
इतिश्रुत्वाराजारैवतः सभार्योपिसुतांनीत्वा दिव्यंरथमारुह्यबलवंतंवरंदीर्घायुषंपरिप्रष्टुंलोकानुल्लंघ्यब्रह्मलोकंग
तवान् ३२ तत्रक्षणास्थितोभूतेनक्षणेनभूलोकेऽष्टैवत्रिनवचतुर्युगविकल्पितः कालोजातः साद्यैवब्रह्मलोके

वर्त्तवधयुतांविश्वरूपदर्शनदधिचौर्य्यब्रह्मांडदर्शनयमलार्जुनद्रुमखंडभंगादिसंयुक्तां दुर्वाससोमायादर्शनवैभ
वांश्रीमद्गर्गाचार्यवर्णितराधाकृष्णनामौदार्य्यमहात्म्य युक्तांस्फुरज्येष्ठकारितवृषभानुवरनंदिनीविवाहरासमंडल
कथामंडितांचकार २ ततश्रीवृंदावनागमनेसतिवत्सास्फुरबकासुराघस्फुराणांवधंकृत्वागोपालैः सहगोचारणे
वृंदावनादिवनेषुविचचार ३ अथतालवनेधेनुकासुरंखरस्वनंसपद्भ्यांताडयंतंभुजदंडाभ्यांगृहीत्वामहाबलो
बलदेवस्तालवृक्षेतंपातयित्वापुनरापतंतंतंभूपृष्ठेपोथयामासमूर्च्छितोभग्नमस्तकः सद्यस्तन्मुष्टिप्रहारेणनिधनं
जगाम ४ अथश्रीकृष्णः कालियदमनदावाग्निपानादीनिचरित्राणिकृत्वाश्रीराधाप्रेमप्रकाशप्रीतिपरिक्षणावृं-
दावनविहारदानमानलीलालहावयुक्तां शंखचूडवधादिशिवासूर्य्यूपाख्यानेकथांकथनीयांलीलांचकार ५ अ
थैकदागिरिराजपूजनेकृतेभग्नबलीरिंद्रः सांवर्त्तमेघमंडलैर्व्रजमंडलेववर्ष तदाभगवान् भयातुरंव्रजंवीक्ष्यमा-
भैष्टेत्यभयंदत्वाएककरेणगिरिराजंसमुत्पाद्योच्छिलींध्रंबालइवदधार हवावसप्तवर्षीयः सप्ताहंसुस्थिरस्थित
६ अथेंद्रः सर्वदेवगणैर्भयभीतः श्रीकृष्णचंद्रश्रीमत्पादारविंदद्वयंप्रणम्यकिरीटेननतोनत्वातदभिषेकंकृत्वा-
महेंद्रवाट्स्फुरभिस्फुरमुनिभिः सार्द्धंस्वर्गंजगाम ७ तदद्भुतंगोवर्द्धनोद्धरणंदृष्ट्वागोपाविसिस्म्युः तेतेभ्यमुक्ता
रोहणादिवैभवंसंदर्शयामासुः ८ अथश्रुतिरूपर्षिरूपामैथिलाकौशलाऽयोध्यापुरवासिनीयज्ञसीतापुलिंदकार
मावैकुंठश्वेतद्वीपोर्द्धवैकुंठाजितपदश्रीलोकाचलवासिनीसखीदिव्यादिव्यात्रिगुणवृत्तिभूमिगोपीजनदेवश्रीजा
लंधरीबर्हिष्मतीपुरंध्रीअप्सरःस्फुतलवासिनीनागेंद्रकन्यादिभिर्गोपीयूथैः पृथक्पृथक् श्रीकृष्णोव्रजमंडलेरास
मंडलंचकार ९ एकदागाश्चारयन्सबलः श्रीकृष्णोगोपालबालैर्भांडीरेबाललीलांवाह्यवाहकलक्षणांकृत





212

तेश्लोकान्देवक्याः सप्तमोगर्भोहर्षशोकविवर्द्धने व्रजंप्रणीतेरोहिण्यामनंतेयोगमायया अहोगर्भः क्वविगतः इत्यूचुर्मा-
थुराजनाः ८ अथव्रजेपंचदिनेषुभाद्रेस्वातौचषष्ठ्यांचसितेबुधेच उच्चैर्ग्रहैःपंचभिरावृतेचलग्नेतुलाख्येदिनमध्यदेशे
९ सुरेषुवर्षत्सुचपुष्पवर्षां घनेषुमुंचत्सुचवारिबिंदून् बभूवदेवोवसुदेवपत्न्यांविभासयन्नंदगृहंस्वभासा १० नं
दोपिकुर्वन्शिशुजातकर्मददौद्विजेभ्योनियुतांगवांच गोपान्समाहूयसुगायकानांरावैर्महामंगलमाततान ११ अ-
थाष्टमोदेवक्याःपरिपूर्णतमोभगवान्श्रीकृष्णचंद्रोवततार तदैवतदाज्ञयानिशीथेतंभैरवेनिधायनंदपत्न्यांजाताया
योगनिद्रायासंसुप्तेजगतिसतियमुनामुत्तीर्य महावनमेत्ययशोदाशयनेसुतंनिधायसुतामादायपुनर्वसुदेवोगृहानाः
ययौ १२ अथकारागारेबालध्वनिंश्रुत्वाशत्रुभीतः कंसः समागत्यजातमात्रांकन्यांगृहीत्वाशिलापृष्ठेपातयामास
१३ तदैवतद्धस्तात्समुत्पत्यांबरेयोगनिद्राभूत्वासिद्धचारणगंधर्वविद्याधरमुनिगणैःस्तूयमानाकंसमिदमाह हेखल
तवपूर्वशत्रुर्यत्रक्वजातोवृथादेवकीवसुदेवौदीनौदुनोषिइत्युक्त्वासाविंध्याचलंजगाम १४ इत्युक्तोविस्मितः कं
सोदेवकीवसुदेवंचविमुच्यपूतनादीन्दैत्यान्समाहूयचानिर्दिश न्निर्दिशान्बालान्हंतुमाज्ञांचकारतेपितथाचक्रुः
१५ अथनंदोपिपुत्रोत्सवंश्रुत्वामहोत्सवंचकारएवंकंसभयभिवेणव्रजंप्राप्तौरामकृष्णौस्वमाययालक्षितौव्रजवासि
नांरूपांकर्तुंजातमात्रावद्भुतांबाललीलांचक्रातुःकौरवेंद्रकिंभूयःश्रोतुमिच्छसि १६ इतिश्रीमद्गर्गाचार्यसंहिता
यांबलभद्रखंडेश्रीबलभद्रश्रीकृष्णजन्मोत्सवोनामपंचमोध्यायः ५ दुर्योधनउवाच मुनींद्ररामोनंतोनं
तलीलः श्रीकृष्णोपिचभूम्यांभूत्वारराजतस्यसंक्षेपेणचरित्रंवदव्रजेकिंमथुरायांकिंद्वारकायांकिमत्रकिमन्यत्र-
किंचकार १ प्राड्विपाकउवाच अथहवाव श्रीकृष्णोजातमात्रोऽद्भुतांलीलांपूतनामोक्षशकटासुरतृणा

श्च स्वाफल्कायस्वधामं दर्शयामास २ अथ पूर्वाह्णे मथुरोपवने स्थित्वाऽपराह्णे मथुरां पुरीं सर्वतो ददर्श अथ रामकृष्णौ देवौ पुराणौ पुरुषौ लीलया नरवरवेशधरौ दिदृक्षवः पौराश्च पुरंध्र्यः कर्माणीत्यक्त्वाभ्यधावन् आपगा उदधिमिव ताः यः कोटिकंदर्पहरसौंदर्यं स्वं संदर्शयंतौ चेतोहरं तौ विचेरतुः स्म ३ अथ राजमार्गे तद्याचितं वस्त्राण्यदास्यंतं रजकं रंगकारं कराग्रेण सर्वेषां पश्यतां निर्जघान तथा वस्त्रवेशं कुर्वंतं वायकाय स्वसारूप्यं प्रादात् ४ ततः सैरंध्रीं कुब्जां त्रिवक्रां चंदनादानमिषेण र्जवीं त्रिलोकसुंदरीं कृत्वा ततो वैश्यजनान् समाभाष्य मथुरार्भकैः सहितो धनुःस्थले प्रविष्टो यथेंद्रं हेमचित्रं सप्ततालकं सहस्रशः पुरुषैर्नेतुं शक्यं बृहद्द्वारं चाष्टधातुमयं लक्षभारसमं यज्ञमंडपधृतं कंसाय भार्गवेन दत्तं साक्षाच्छेषमिव कुंडलीभूतं कोदंडं वैष्णवं वीक्ष्य प्रसत्याददे ५ तदैव पश्यतां लोकानां सज्यं कृत्वा लीलया आकृष्य कर्णपर्यंतं दोर्दंडाभ्यां यथेक्षुदंडं वेतंडः शुंडादंडेन कोदंडं मध्यतो बभंज ६ भज्यमानस्य धनुषष्टंकारेण सप्तलोकविलैः सह सर्वब्रह्मांडं ननाद ततस्तारा दिग्गजाश्च विचेलुः सर्वभूखंडमंडलं स्थालीव घटिकाद्वयमात्रं प्रचकंपे ७ अथापराह्णे रंगभूमिद्वारि द्विपं कुवलयापीडं समेत्य क्षणं बाललीलया युद्धं कृत्वा शुंडादंडे संगृहीत्वा त्वरितं स्ततो भ्रामयित्वा बालकः कमंडलुमिव भूपृष्ठे तं पातयामास ८ तमित्थं निहत्य रंगभूमौ कंससभायां जनितायां यथाभावं दर्शनं दत्वा मल्लयुद्धं कृत्वा चाणूरमुष्टिककूटशलतोशलकान् कंसस्याग्रे सर्वेषां पश्यतां भूपृष्ठे रामकृष्णौ पातयामासतुः ९ अथ तत्कर्म वीक्ष्य दुर्वचनानि विकथ्यमानस्य कंसस्य मधुसूदनः सहसोत्पत्य मंचं महोन्नतं समारुरोह १० ततः सत्वरं मृत्युमिवागतं वीक्ष्य मंचादुत्थाय तं निर्भर्त्स्ययन्मनोऽद्रुतः कंसः खड्गचर्मणी जगृहे हरिः सहसा चर्मासिसंयुक्तं कंसं संविषफणींद्रमिव तुंडाविभागाभ्यां विराडिव दोर्दंडाभ्यां बलात्समग्रहीत् ११ यथा तार्क्ष्यतुंडात्फणीव कंसो भुजबंधाद्बलाद्विनिर्गं

वान् तत्रप्रलंबोगोपरूपीदैत्योविहारेविहारविजयंरामंस्वपृष्ठेनिधायोवाह १० अथहवावमथुरांगंतुमुद्यतंगिरिंद्र स्यसदृशंतमुद्वीक्ष्यपृष्ठागतो बलदेवोमहाबलोरुषामुष्टिनाशिरसिमहाद्रिंयथाद्रिभित् तताड तेनसद्योविशीर्णमस्तको वज्रहतोगिरिवद्दैत्योभूम्यांनिपपात ११ एकदाग्रीष्मेमुंजारण्यगतासुगोषुचगोपालेषुसत्सुसद्यःसंभूतोदावाग्निः प्रलयाग्निरिववव्रधेततः कृष्णारामेतिवदतःपाहिपाहीतिगोपालान्शरणंगतान् वीक्ष्यलोचनानिन्यमीलयतामाभै भैष्टेत्युक्त्वातमग्निमपिवत् १२ अथहवावभांडीरात्यमुनातीरेगोपालगोगणंनीलात्वासोभूत् तत्राशोकवनेय- ज्ञपल्यानीतंभोजनंकृतवान् १३ अथव्रजेनंदराजेवरुणग्रस्तेवरुणस्यमानभंगंकृत्वानंदादिभ्योगोपेभ्योपिसर्व लोकनमस्कृतंवैकुंठंदर्शयामास १४ अथांबिकावनेश्रीकृष्णःसरस्वतीतीरेनंदंग्रसंतंसुदर्शनंसर्पंकिलाखिललो कपालवंदितेनश्रीमच्चरणारविंदेनस्पृष्ट्वासर्पदेहात्तंमोचयामास १५ अथसबलःश्रीकृष्णोनिलायनक्रीडायां चोरपालकलक्षणांचोररूपंव्योमासुरंकंससखंभुजदंडाभ्यांगृहीत्वादशदिशाभ्रामयन्भूपृष्ठेपोथयामास १६ तथारिष्टासुरंकंसप्रणोदितंमृगयोःसमुत्पाद्यपातयामास अथनारदमुखात्श्रुतश्रीकृष्णकथनकंसेनप्रणोदितंके शिनंश्रीकृष्णोभुजप्रवेशनसंमर्देत्यमनेकालीलासहस्रोव्रजमंडलेबलेनकारयामास १७ इतिश्रीमद्गर्गाचार्य संहितायांश्रीबलभद्रखंडेप्राड्विपाकदुर्योधनसंवादेरामकृष्णव्रजलीलावर्णनंनामषष्ठोध्यायः ६ प्राड्विपा कउवाच अथमथुरायांरामकृष्णौयानिचरित्राणिकृतवंतौतानिसंक्षेपेणयुवराजशृणुतान् अथकालनेमि- नाकंसेनप्रयुक्तोऽक्रूरोरामकृष्णौसमानेतुंव्रजमंडलमागतवान् १ तत्रगंतुमभ्युदितंनंदराजसूनुंवीक्ष्यगोपांग- णाविरहातुराबभूवुः पृथक्पृथक् नानाश्वास्य भगवान्रथमारुह्यसबलोऽक्रूरेणयदुपुरींगच्छन्मार्गेयमुनाजले-

णज्ञातीन्समाधायमुचुकुंददृशाकालंघातयित्वापुनारामकृष्णौप्रवर्षणाद्रिमेत्यतस्माद्वारकायांजग्मतुः १ अथब्रह्म
लोकात्समागतौरैवतोसुतांरत्नयुतांविधिवद्धलशालिने बलभद्रायदत्वा तपः कर्तुंबदर्याख्यंगतवान् २ अथश्री
कृष्णःशत्रूणांपश्यतांकुंडनपुराद्रुक्मिणींजहारतथाजाम्बवतींसत्यभामांकालिंदींमित्रविंदांनाग्निजितींभद्रांल-
क्ष्मणांचभौमंहत्वाषोडशसाहस्रंशतंचराजकन्याउवाह ३ राजन्भीष्मकन्यायांरुक्मिण्यांश्रीकृष्णस्यपुत्रःप्र
थमःकामदेवोवतारः पितृसमसुंदरः आसीत् तस्मादनिरुद्धः स्मरज्येष्ठावतारोभूत् ४ अथैकदोग्रसेनोजसू-
याध्वरनागवल्लींगृहीत्वादिग्विजयार्थीनिर्गतः प्रद्युम्नोयादवैर्भ्रातृभिः सहजंबूद्वीपेनवखंडंविजयंकुर्वन्कामु-
दुघनदसमीपेवसंतमालतीपुराधीशेनपतंगेनगंधर्वराजेनयुयुधे ५ तत्रगदायुद्धेगदामादायगदोबलदेवानुजो
गदाधरंस्वगदयापतंगंतताडसोपितंहृदिचोजसाजघानेत्थंतयोर्गदायुद्धंघटिकाद्वयंबभूवपतंगगदाप्रहारेणग
दोयुद्धेक्षणंमूर्छांजगाम ६ तदाहाहाकारेजातेकोटिमार्तंडसन्निभोबलभद्रआविर्भूत्वागंधर्वाणांसर्वंबलंह
लाग्रेणसमाकृष्यतदुपरिक्लिष्टमुशलताडनंचकारतेनयुगपत्सर्वंसैन्यंसभटद्विपरथंचूर्णीबभूव ७ अथपतं-
गोपिविरथोभयभीतस्तस्मात्पुरींगत्वापुनर्योद्धुंयादवैःसेनाव्यूहंचकारतत्श्रुत्वाक्रुद्धोबलभद्रोगंधर्वाणांमहापु
रींशतयोजनविस्तीर्णांवसंतमालतीनाम्नींसर्वांहलेनसंविदार्यसहसाकामदुघेनसंकर्षणोविचकर्ष ८ अथहवावप
तितेगृहेहाहाकारेजातेतिर्य्यक्पोतमिवाघूर्णांसमस्तांनगरींवीक्ष्यगंधर्वैर्गंधर्वेशः पतंगः कृतांजलिः धर्षितावि
श्वकर्मकृतानांविमानानांद्विलक्ष्यंगजानांचतुर्लक्षंचाश्वशतार्बुदंचदिव्यानांरत्नानांभारदशशतार्बुदंचबलिनेनीला
बलिशालिनेबलायदत्वाप्रदक्षिणीकृत्यप्रणनाम ९ अथतथासांबमोक्षार्थंबलभद्रइहागतोभवतांपश्य

त्यपतत्खड्गचर्मा पुनरुत्थितोभूत् पुनर्मंचे बलिनो वेगान्मर्दयंतौ शैले सिंहाविव शुशुभाते १२ ततो बलादुत्पन्नं तं कंसं-
शत हस्तमंबरे कृष्ण उत्पतन् श्येनं श्येन इव तं समग्रहीत् पुनर्गच्छंतं दैत्यपुंगवं प्रचंडभुजदंडाभ्यां गृहीत्वा त्रैलोक्याधार इत
स्ततो भ्रामयित्वा महांबरात् मंचोपरि पातयामास १३ ततस्तडित्पाताद्दुमखंड इव भग्नदंडो मंचो बभूव सवज्रांगः प-
तितोपि किंचिद्व्याकुलः सहसोत्थाय महात्मना पुनर्युयुधे पुनस्तं भुजदंडाभ्यां भगवान् गृहीत्वा मंचे क्षिप्त्वा हृदयमा-
रुह्य तन्मौलिं गृहीत्वा स धः केशेषु प्रगृह्य मंचाद्रंगापरि पातयित्वा शैलादुद्दंडशिलामिव तस्योपरिष्टात्सनातनः सर्वाधारो नं
तोनंतविक्रमो वेगात्स्वयं निपपात तयोर्निपातनेस्थलं ती-न्नीभूत भूखंडमंडलं स्थालीवदंडचयं सहसा च कंपे १४ अथ सं
परेतं भोजराजं यदुराजो भूमितं नागेंद्रं मृगेंद्र इव सर्वेषां पश्यतां विचकर्ष तं देव भूभुजां हाहाकारश्चासीत् अहो वैरभावेन
यं भजन् कंसोपि तस्य सारूप्यं मृगिणः कीटक इव जगाम १५ ततः कंसं मृतं सहसा वीक्ष्य समागतान् तस्यानुजान्
खड्गचर्मधरान् दृष्ट्वा बलभद्रो मुद्गरं नीत्वा सर्वतोभिजघान तदा देवदुंदुभयो नेदुर्जयध्वनिश्चाभूद्देवाः पुष्पैर्ववृषुर्विद्या
धर्यो ननृतुर्विद्याधरगंधर्वकिन्नरा जगुः १६ अथ सर्वाना श्वास्य पितरौ विमोक्ष्योग्रसेनाय राज्यं दत्त्वोपवीतं प्राप्य सं-
दीपनादधीत्य तस्मै मृतं सुतं दक्षिणायां दत्त्वा शंखं हत्वा मथुरामेत्य वसन् व्रजशांत्यै चोद्धवं प्रापयित्वा पुनः स्वयं व्रजं ग-
त्वा राधायै गोपीभ्यो दर्शनं दत्त्वा रासमध्ये भूमोक्षं कृत्वा पुनर्मथुरायां माथुरेशो रराज रामोपि कोलवधं कृत्वा तस्यां विररा
जेति तयोर्मथुरायां सहस्रशः पवित्राणि विचित्राणि चरित्राणि बभूवुः १७ इति श्रीमद्गर्गाचार्यसंहितायां श्रीबलभ
द्रखंडे मथुरालीलावर्णनं नाम सप्तमोध्यायः ७ प्राड्विपाक उवाच अथ युवराज धार्तराष्ट्र तयोर्द्वारकालीलां सं
क्षेपेण शृणु तात ततः कंसस्य पारोक्ष्यं सोढुं दं कुर्वंतं समागतं जरासंधं जित्वा द्वारकाख्यं समुद्रे दुर्गं निर्माय तत्रैकरात्रे

त् अथ ब्रजज्जिह्वं वज्रांगं भिन्नकज्जलांजनचयकृष्णं तसनाम्नश्मश्रुभयंकरं ब्रह्मशांतये हलाग्रेण समाकृष्य-
गगनात्मुशलेन मूर्द्धि बलभद्रस्तं तताड तत्ताडनेनाकाशात्सोपि कमंडलुरिव व्यसुःप्रपात १५ अथ प्रसन्ना मु-
नयोपि रामं संस्तुत्याऽवितथाशिषः प्रयुज्य वृत्रघ्नं विबुधा इव भ्यषिंचन्नु तैरभ्यनुज्ञातः सरयूकौशिकीमानसरोवरगंड-
कीगौतमीयुस्नात्वाऽयोध्यानंदिग्रामबर्हिष्मतीब्रह्मावर्तादीन्युपस्पृश्य तीर्थराजं प्रयागं जगाम तत्रायुतगजदानं चकार-
१६ ततश्चित्रकूटविंध्याचलकाशीविपाशाशोणमिथिलागयादिषु स्नात्वा गंगासागरसंगमं जगाम तत्र सुसुवर्णशृंगां
वरसंयुक्तं पृथक् सुवर्णरत्नभारसहितं गवां कोटिशतं ब्राह्मणेभ्यः प्रादात् ततः क्रमशो दक्षिणस्यां दिशि महेन्द्राद्रि
सप्तगोदावरीवेणीपंपाभीमरथीस्कंदसेनश्रीशैलवेंकटकांचीकावेरीश्रीरंगऋषभाद्रिसामुद्रसेतुकृतमालाताम्रपर्णी
मलयाचलकुलाचलदक्षिणसिंधुफल्गुणपंचाप्सरोगोकर्णसूर्पारकतापीपयोष्णीनिर्विंध्यादंडकरेवामाहिष्म
त्यवंतीकादीनि तीर्थानि साक्षात्संकर्षणः करिष्यतिस्म ततः त्वत्सहायार्थं विशनसने चागमिष्यति १७ इदं बल
भद्रचरित्रं पवित्रं सर्वपापाभिहरणं तीर्थयात्रावर्णनं नितरां मया वर्णितं सर्वमंगलकारणं कौरवेंद्र किं भूयः श्रो
तुमिच्छसि १८ इति श्रीमद्गर्गाचार्यसंहितायां श्रीबलभद्रखण्डे प्राड्विपाकदुर्योधनसंवादे द्वारकालीला-
वर्णनंनामाष्टमोध्यायः ८ दुर्योधनउवाच मुनिशार्दूल भगवन् भगवान्बलभद्रो नागकन्याभिर्गोपि-
भिः कदा कालिंदीकूले विजहार १ प्राड्विपाकउवाच एकदा द्वारकानगरात् तालांकं रथमास्थाय सुहृद्दृ सुःपर
मुत्कंठो नंदराजगोकुलं गोगोपालगोपीगणसंकुलं संकर्षण आगतश्चिरोत्कंठाभ्यां नंदराजयशोदाभ्यां परिष्व-
क्तो गोपीगोपालगोभिर्मिलित्वा तत्र द्वौमासौ वासंतिकौ चावात्सीत् २ अथ च या नागकन्याः पूर्वोक्तास्ता गो-

तांपुरमिदं हलाग्रेणसंविदार्यश्रीगंगांसाक्षात्संकर्षणोविचकर्ष तथैवनागकन्याभिर्गोपीभिर्निर्मितिरासमंडलेकालिं-
दींहलाग्रेणविचकर्ष १० अथैकदाद्विविदोनामवानरः सुग्रीवसचिवोभौमसखोनारदेनप्रेरितोहरियोद्धुकामोवत
रत्नरैवतकाचलमेत्यबलेनघटिकाचतुष्टयंयुयुधेद्रुमदंडशिलामुष्टिभिर्विनिघ्नंतंतंबलभद्रोमुशलेनमूर्द्धिनिर्ज-
घानपुनर्नमृतंमुष्टिनाघातयित्वापलायंतंभुजदंडाभ्यांगृहीत्वारैवतकाचलपृष्ठेपातयित्वाच्युताग्रजोहृष्टेनमुष्टिना
त्हृदितंतताड तस्ततनेनसटंकःशैलेंद्रःकमलुरिवचकंपे ११ अथहवावराजन्नद्यभवतांपांडवैःसहयुद्धोद्यमंश्रु
त्वातीर्थाभिषेकव्याजेनब्राह्मणैर्नागरैःसहितःपुराद्विनिर्गतोद्वारकांप्रदक्षिणीकृत्यसिद्धाश्रमप्रभासयोःस्नात्वा
पश्चिमायांदिशिसरस्वतीप्रतिस्रोतसैंधवारण्यजंबूमार्गोत्पलावर्तीर्बुदहिमवंतसिंधूनुपस्पृश्यधूथूकबिंदुसरास्त्रि
तकूपस्कदर्शनांत्रितोशनसाम्रेपवाप्यवसोदासगुहतीर्थश्राद्धदेवादीनितीर्थानिस्नातोत्तरस्थांदिशिकैलाशकरवीरम-
हायोगगणेशकौबेरप्राग्ज्योतिषरंगवल्लीसीतारामक्षेत्रचैत्रदेशवसंततिलकादशार्णभद्राकूर्मतीर्थपुष्पमालाचित्रव
नचंद्रकांतानेःश्रेयसमनुपर्वतचक्षुकामशालिनीकामवनवेदक्षेत्रसीतापृथुतीर्थतपोभूमिलीलावर्तीवदनगरगां
धर्वशक्रमभीरतेश्रीजाह्नवीकालिंदीहरिद्वारकुरुक्षेत्रमथुरापुष्करेषुस्नात्वापुनस्तस्माच्छुंभलंशौकरंप्राप्यचान्या
निकुर्वन्तीर्थानिसाक्षात्संकर्षणोनैमिषारण्यंजगाम १३ तंसमागतंवीक्ष्यशौनकादयोमुनयःसमुत्थायववंदिरे
चार्चयत् तत्रवेदव्यासशिष्यंरोमहर्षणमप्रत्युत्थापिनंवीक्ष्यकरस्थेनकुशाग्रेणतंजघानेतितदाहाहेतिवादिनोमु-
नीन् वीक्ष्यलोकपावनोपिलोकसंग्रहार्थंद्वारसमाशानतीर्थस्नानेविशुद्धयेमनोदधे १४ तत्रेल्वलसुतोबल्वतो
नामदैत्यउपावृतेपर्वणिपांशुवर्षणप्रचंडेनवायुनापूयशोणितविट्मूत्रसुरामांसदुर्गन्धेनसमागतःखेदृष्टोभू

द्रमहाबाहोतवपरंविक्रमंनजानेयस्यैकस्मिन्मूर्ध्निसर्षपवत्सर्वभूरिभूखंडमंडलं दृश्यतेतस्यतवपरमनुभावम-
जानंतींप्रपन्नांमांभोक्तुंयोग्योसित्वंभक्तवत्सलोसि ९ इत्येवंयाचितोबलभद्रोयमुनांततोव्यमुंचत्पुनः करेणु
भिः करीवगोपीभिर्गोपराट् जलंविजगाहपुनर्जलं विनिर्गत्यतटस्थायबलभद्रायसहसायमुनाचोपायनेनीलांबरा
णिहेमरत्नमयभूषणानिदिव्यानिददौहवावतानिगोपीयूथायपृथक्पृथक्विभज्यस्वयंनीलंबरेवसित्वाकांचनीं
मालांनवरत्नमयींधृत्वामहेंद्रोवारुणेंद्रइवबलभद्रोविरेजे १० इत्थंकौरवेंद्रयादवेंद्रस्यरमतः सर्वावासंतकीर्नि
ताव्यतीताबभूवुः भगवतोबलभद्रस्यहस्तिनापुरमिववीर्य्यंसूचयतीव ह्यद्यापिचकृष्टवर्त्मनायमुनावहंतींइमांरा
मस्यरासकथांयः शृणोतिश्रावयेतिचससर्वपापपटलंछित्वातस्यपरस्परमानंदपदंप्रतियाति किंभूयः श्रोतुमिच्छसि
११ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीबलभद्रखंडेप्राड्विपाकदुर्योधनसंवादेरासक्रीडावर्णनंनामनवमोध्यायः ९
दुर्योधनउवाच भगवन्गर्गाचार्येणगोपीयूथायकथंदत्तंबलभद्रपंचांगंतत्कृपयावदतात्त्वंसर्वज्ञोसि १ प्राड्वि
पाकउवाच कौरवेंद्रएकदागर्गाचार्यकलिंदनंदिनींस्नातुंगर्गाचलाद्व्रजमंगलंचाजगाम तत्रैकांतेमरुच्छीलेजच्छलि
तलतातरुपल्लवपुष्पगंधमत्तमिलिंदपुंजेकालिंदीकूलकलितनिकुंजेश्रीरामकृष्णाध्यानतत्परंगर्गाचार्य्यंप्रणम्यना
गेंद्रकन्याःस्मइतिजातिस्मरागोपकन्याश्रीमद्बलभद्रप्राप्त्यर्थंसेवनंपप्रच्छस्तासांपरमांभक्तिंवीक्ष्यपद्धतिपटलस्तोत्र
कवचसहस्रनामानिगोपीयूथायसप्रददौकिंभूयस्त्वंतद्ग्रहणंकर्तुमिच्छसिवदतात् २ दुर्योधनउवाच रामस्य
पद्धतिंब्रूहिययासिद्धोव्रजाम्यहम् त्वंभक्तवत्सलोब्रह्मन्गुरुदेवनमोस्तुते १ प्राड्विपाकउवाच राममार्गस्यनि
यमंशृणुपार्थिवसत्तम येनप्रसन्नोभवतिबलभद्रोमहाप्रभुः २ सहस्रवदनोदेवोभगवान्भुवनेश्वरः नदानैर्न-



216

पकन्याभूत्वाबलभद्रप्राप्त्यर्थंगर्गाचार्यबलभद्रपंचांगंगृहीत्वातेनैवसिद्धाबभूवुः ताभिर्बलदेवएकदाप्रसन्नः
कालिंदीकूलेरासमंडलंसमारंभेतदेवचैत्रपूर्णमायांपूर्णचंद्रोरुणवर्णः संपूर्णंवनंरंजयन्विरेजे ३ सीतलामंदगा
नाः कमलमकरंदरेणुवृंदसंवृतास्सर्वतोवायवः परिवव्रुः कलिंदगिरिनंदिनीचलहरीभिरानंददायिनीपुलिनंविमल
स्थाचितंचकार तथाकुंजप्रांगणनिकुंजपुंजैः स्फुरल्लुलितपल्लवपुष्पपरागैर्मयूरकोकिलपुंस्कोकिलकूजितैः मधुम
त्तमधुपमधुरध्वनिभिर्व्रजभूमिर्विभ्राजमानाबभूव ४ तत्रकंकणघ्राटकनूपुरस्फुरन्मणिमयकटककटिसूत्रके
यूरहारकिरीटकुंडलयोरूपरिकमलपत्रैर्नीलांबरोविमलकमलपत्राक्षोयक्षीभिर्यक्षराडिवगोपीभिर्गोपराट्रास
मंडलेरेजे ५ अथवरुणप्रेषितावारुणीदेवीपुष्पभारगंधिलोभिमिलिंदनादितवृक्षकोटरेभ्यः पतंतीसर्वतोवनं-
स्करभिंचकारतत्पानमत्तोत्फुल्लकमलविशालाताम्राक्षोमकरध्वजावेशचलधुर्य्यांगभंगोविहारखेदप्रस्वेदांबुक
णैर्गलद्गंडस्थलपत्रभंगोगजेंद्रगतिगजेंद्रशुंडादंडसमदोर्दंडमंडितोगर्जीभिर्गजराजेंद्रइवोन्मत्तः सिंहासन्यस्त
हलीशोमुसलपाणिः कोटींदुपूर्णमंडलसंकाशः प्रोद्धनद्रूलमंजीरप्रचलनूपुरप्रक्कणत्कनककिंकिणीः कंकणस्फु
रत्ताटंकपुरटहारश्रीकंठांगुलीयशिरोमणीभिः प्रविडंबिनीकृतसर्पणीश्यामवेणीकुंतलललितगंडस्थलपत्रा
वलिभिः सुंदरीभिर्भगवान्भुवनेश्वरोविभ्राजमानोविरराजअथचरेमे ६ अथहवावकालिंदीकूलकांतारपर्य
टनविहारपरिश्रमोद्यत्स्वेदबिंदुप्रार्द्रमुखारविंदः स्नानार्थंजलक्रीडार्थंयमुनांदूरात्स आजुहावततरुत्वनागतांत-
टिनींहलाग्रेणकुपितोविचकर्षइतिहोवाच ७ अद्येमामवज्ञायनायासिमत्वयाहूतापिमुशलेनत्वांकामचा
रिणींशतधानेष्येएवंनिर्भर्त्स्यसाभूरिभीतायमुनाचकितातत्पादयेपतितोवाच ८ रामरामसंकर्षणबलभ

रप्राणोह्लमुशलधरौरोहिणेयनीलांबररामरेवतीरमणनमस्तेस्तु अनेनमंत्रेणासनपाद्यार्घस्नानमधुपर्कधूपदीपयज्ञोपवीतनैवेद्यवस्त्रभूषणगंधपुष्पाक्षतपुष्पांजलिनीराजनादीनुपचारान्प्रकल्पयेत् ॐ विष्णवेमधुसूदनायवामनायत्रिविक्रमायश्रीधरायहृषीकेशायपद्मनाभायदामोदरायसंकर्षणायवासुदेवायप्रद्युम्नायानिरुद्धायाधोक्षजायपुरुषोत्तमायश्रीकृष्णायनमः इतिपादगुल्फजानूरुकाद्युदरपार्श्वपृष्ठिभुजाकंधरनेत्रशिरांसिपृथक्पृथक्पूजयामीतिमंत्रेणसर्वांगपूजां कुर्यात् अथसंखचक्रगदापद्मासिधनुर्बाणहलमुसलकौस्तुभवनमालाश्रीवत्सपीतांबरनीलांबरवंशीवेत्रगरुडांकतालांकरथदारुकसुमतिकुमुदकुमुदाक्षश्रीदामादीन्प्रणवपूर्वेणचतुर्थ्यतेननमःसंयुक्तेननामंत्रेणपृथक्संपूज्य तथाविष्वक्सेनवेदव्यास-दुर्गाविनायकदिक्पालग्रहादीन्कमलंसर्वतः स्वेस्वेस्थानेसंपूजयेत् पुनःपरिसमूहनादिस्थालीपाकविधानेनवैश्वानरंसंपूज्यपूर्वोक्तेनमूलमंत्रेणपंचविंशतिसहस्राण्याहुतीर्जुहुयात् तथाष्टौसहस्राणिद्वादशारेण तथाष्टौसहस्राणिचतुर्व्यूहमंत्रेणाहुतीर्जुहुयात् ततोग्निंप्रदक्षिणीकृत्यनमस्कृत्याचार्यमहार्हवस्त्रसुवर्णाभरणताम्रपात्रसवत्सगोसुवर्णदक्षिणाभिः संपूज्यतथाब्राह्मणान्भोजनाद्यैः संपूज्यनगरजनेभ्योभोजनंदत्वाचार्यान्प्रणमेत् इत्थंबलस्यपटलानुसारेणयोनुस्मरतिइहामत्रसिद्धिसमृद्धिभिः संवृतोभवति रामपटलंगुह्यंमयातेनुवर्णितं सर्वसिद्धिदंराजन्किंभूयः श्रोतुमिच्छसि २२ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीबलभद्रखंडेपद्धतिपटलवर्णनंनामदशमोध्यायः १० दुर्योधनउवाच स्तोत्रंश्रीबलदेवस्यप्राड्विपाकमहामुने वदमांकृपयासाक्षात्सर्वसिद्धिप्रदायकम् १ प्राड्विपाकउवाच स्तवराजंतुरामस्यवेदव्यासकृतंशुभं सर्वसिद्धिप्रदंराजन्शृणुकैवल्यदंनृणां २ देवाधिदेवभगवन्कामपालनमोस्तुते नमोनंतायशेषायसाक्षाद्रामायतेनमः ३ धराधारायपूर्णायस्वधाम्नेसीरपाणये सहस्रशिरसेनित्यंनमः





217

चतीर्थैश्च भक्त्यालभ्यस्त्वनन्यया ५ तत्सत्संगमेत्याशु शिक्षेद्भक्तिं हरेर्गुरोः स सिद्धः कथितो जातं यस्यैवं प्रेमलक्ष-
णं ६ ब्राह्मे मुहूर्त्ते उत्थाय राम कृष्णेति च ब्रुवन् नत्वा गुरुं भुवं चैव ततो भूम्यां पदं न्यसेत् ७ वार्य्युपस्पृश्य सास्थितो
भूत्वा कुशासने हस्ताग्रे गुसंगत्रादाय स्वनासाग्रनिरीक्षणः ८ ध्यायेत्सहरिं देवं बलभद्रं सनातनं गौरं नीलांबरं स्रग्विवनमालाधि
भूषितं ९ एवं ध्यानपरो नित्यं प्रीत्यर्थं हलिनः प्रभो त्रिकालसंध्याकृच्छुद्धो मौनी क्रोधविवर्जितः १० अकामी गतलोभश्च
निर्मोहः सत्यवाग्भवेत् द्विवारं जलपानार्थी एकभुक्तो जितेंद्रियः ११ क्षौमांबरो भूमिशायी भूत्वा पायभोजनः एवं निर्जित
षड्वर्गो भवेदेकाग्रमानसः १२ तस्य प्रसन्नो भवति सदा संकर्षणो हरिः परिपूर्णतमः साक्षात्सर्वकारणकार १३ इ-
त्थं श्रीबलभद्रस्य कथिता पद्धतिर्मया कौरवेंद्र महाबाहो किं भूयः श्रोतुमिच्छसि १४ दुर्योधन उवाच मुनींद्र देवदे-
वस्य पटलं ब्रूहि मे प्रभो येन सेवां करिष्यामि तत्पदांबुजयोः सदा १५ प्राड्विपाक उवाच बलस्य पटलं गुह्यं विद्धि सि
द्धिप्रदायकं एकांते ब्रह्मणा दत्तं नारदाय महात्मने १६ प्रणवं पूर्वमुद्धृत्य कामबीजं ततः परं कालिंदीभेदनपदं संकर्ष-
णमतः परं १७ चतुर्थ्यंतद्द्वयं कृत्वा स्वाहा पश्चाद्द्विपायच मंत्रराजमिदं राजन् ब्रह्मोक्तं षोडशाक्षरं १८ जपेल्लक्षं ब्रती
भूत्वा सहस्राणि च षोडश इहामुत्र परां सिद्धिं संप्राप्नोति न संशयः १९ अथ जप्तस्य मंत्रस्य महापूजां समाचरेत् द्वात्रिं
शत्पत्रसंयुक्तं कर्णिकाकेसरोज्ज्वलं २० भव्यं कंजं पंचवर्णैर्लिखित्वा स्थंडिले शुभे तस्योपरि न्यसेद्राजन् हेमसिंहासनं शु
भं २१ तस्मिन् श्रीबलदेवस्य परामर्चां प्रपूजयेत् ॐ नमो भगवते पुरुषोत्तमाय वासुदेवाय संकर्षणाय सहस्रवदनाय म
हानंताय स्वाहा अनेन मंत्रेण शिखाबंधनं कृत्वा सर्वतस्तं प्रणम्य तत्सन्मुखो भूत्वा स्वयं नतो भूत् ॐ जयजयानंत बलभ
द्र कामपाल तालांक कालिंदीभंजन आविराविर्भूय्यां मम सन्मुखो भवेति अनेन मंत्रेणावाहनं कुर्यात् ॐ नमस्तेस्तु सी

व्यात्पुरुषोत्तमोबहिर्नागेंद्रलीलोबतुर्भामहाबलः सदांतरात्मवसतोहरिःस्वयं प्रपातुपूर्णःपरमेश्वरोमहान् ११ देवासुरा-
णांभयनाशनंच हुताशनंपापचवेधनानां विनाशनंविष्णुघटस्यविद्धि सिद्धासनंवमेवरबलस्य १२ इतिश्रीमद्गर्गाचा
र्यसंहितायां श्रीबलभद्रखंडेस्तोत्रकवचवर्णनंनामैकादशोध्यायः ११ दुर्योधनउवाच बलभद्रस्यदेवस्यप्राड्विपाक
महामुने नाम्नांसहस्रंमेब्रूहिगुह्यंदेवगणैरपि १ प्राड्विपाकउवाच साधुसाधुमहाराजसाधुतेविमलंयशः य
त्पृच्छसेपरमिदंरागोन्क्तंदेवदुर्लभं २ नाम्नांसहस्रंदिव्यानांवक्ष्यामितवचाग्रतः गर्गाचार्येणगोपीभ्योदत्तंकृष्णातटे
शुभे ३ ॐअस्यश्रीबलभद्रसहस्रनामस्तोत्रमंत्रस्यगर्गाचार्यऋषिरनुष्टुप्छंदः संकर्षणपरमात्मादेवताबलभद्रइति
बीजंरेवतीतिशक्ति रनंतइतिकीलकंबलभद्रप्रीत्यर्थेजपेविनियोगः अथध्यानं स्फुरदमलकिरीटंकिंकिणी-
कंकणार्हंचलदलककपोलंकुंडलश्रीमुखाब्जं तुहिनगिरिमनोज्ञंनीलमेघांबराढ्यंहलमुसलविशालंकामपालंस
मीडे ४ ॐबलभद्रोरामभद्रोरामः संकर्षणोच्युतः रेवतीरमणोदेवः कामपालोहलायुधः ५ नीलांबरःश्वेत
वर्णोबलदेवोच्युताग्रजः प्रलंबघ्नोमहावीरोरौहिणेयःप्रतापवान् ६ तालांकोमुसलीहालीहरिर्यदुवरोबली सीर
पाणिःपद्मपाणिर्लकुटीवेणुवादनः ७ कालिंदीभेदनोवीरोबलप्रबलऊर्ध्वगः वासुदेवकलानंतःसहस्रवदनःस्व
राट् ८ वसुर्वसुमतिर्भर्तावासुदेवोवसूत्तमः यदूत्तमोयादवेंद्रोमाधवोवृष्णिवल्लभः ९ द्वारकेशोमाथुरेशोदानी
मानीमहामनाः पूर्णःपुराणःपुरुषःपरेशःपरमेश्वरः १० परिपूर्णतमःसाक्षात्परमःपुरुषोत्तमः अनंतःशाश्वतः
शेषोभगवान्प्रकृतेःपरः ११ जीवात्मापरमात्माचह्यंतरात्माध्रुवोव्ययः चतुर्व्यूहश्चतुर्वेदश्चतुर्मूर्तिश्चतुःपदः १२ प्र
धानंप्रकृतिसाक्षिसंघातःसंघवान्सखी महामनाबुद्धिसखश्चेतोहंकारआवृतः १३ इंद्रियेशोदेवतात्माज्ञानकर्मचशर्म

६१

संकर्षणायते ४ रेवतीरमणत्वंवैबलदेवाच्युताग्रज हलायुधाप्रलंबघ्न पाहिमांपुरुषोत्तम ५ बलायबलभद्रायतालां
कायनमोनमः नीलांबरायगौरायरौहिणेयायतेनमः ६ धेनुकारिर्मुष्टिकारिःकूटारिर्बल्वलांतकः रुक्म्यरिःकूपकर्णारिः-
कुंभांडारिस्त्वमेवहि ७ कालिंदीभेदनोसित्वंहस्तिनापुरकर्षकः द्विवदारिर्यादवेंद्रोव्रजमंडलमंडनः ८ कंसभ्रातृप्रहंतासि-
तीर्थयात्राकरःप्रभुः दुर्योधनगुरुःसाक्षात्पाहिपाहिप्रभोरतः ९ जयजयाच्युतदेवपरात्परस्वयमनंतदिगंतगतश्रुत स्फुर
मुनींद्रफणींद्रवरायतेमुसलिनेबलिनेहलिनेनमः १० यःपठेत्सततंस्तवनंतुयःसतुहरेःपरमंपदमाव्रजेत् जगतिसर्वबलंत्व
रिमर्दनंभवतितस्यजनंस्वजनंधनं ११ इतिश्रीबलभद्रस्तवराजंसंपूर्णम् दुर्योधनउवाच गोपीभ्योकवचंदत्तंगर्गाचा
र्येणधीमता सर्वरक्षाकरंदिव्यंदेहिमह्यंमहामुने १ प्राड्विपाकउवाच स्नात्वाजलेक्षौमधरःकुशासनःपवित्रपाणिः
कृतमंत्रमार्जनः स्मृत्वाथनत्वाबलमच्युताग्रजं संधारयेत्धर्मसमाहितोभवेत् २ गोलोकधामाधिपतिःपरेश्वरः परेषुमां-
पातुपवित्रकीर्तनः भूमंडलंसर्षपवत्लक्ष्यतेयन्मूर्ध्निमांपातुसभूमिमंडले ३ सेनासुमांरक्षतुसीरपाणिर्युद्धेसदारक्षतु-
मांहलीच दुर्गेषुचाव्यान्मुसलीसदामांवनेषुसंकर्षणआदिदेवः ४ कालिंदजावेगहरोजलेषु नीलांबरोरक्षतुमांसदाग्नौ
वायौचरामोवतुखेबलश्च महार्णवेनंतवपुःसदामां ५ श्रीवासुदेवोवतुपर्वतेषुसहस्रशीर्षाचमहाविवादे रोगेषुमांरक्षतुरौहि
णेयोमांकामपालोवतुवाविपत्सु ६ कामात्सदारक्षतुधेनुकारिःक्रोधात्सदामांद्विविदप्रहारी लोभात्सदारक्षतुबल्वलारि
र्मोहात्सदामांकिलमागधारिः ७ प्रातःसदारक्षतुवृष्णिधुर्यःप्राह्णेसदामांमथुरापुरेंद्रः मध्येदिनेगोपसखःप्रपातु स्वराट्
पराह्णेवतुमांसदैव ८ सायंफणींद्रोवतुमांसदैव परात्परोरक्षतुमांप्रदोषे पूर्णेनिशीथेचदुरंतवीर्यःप्रत्यूषकालेवतुमांसदैव ९
विदिक्षुमांरक्षतुरेवतीपतिर्दिक्षुप्रलंबारिरधोयदूद्वहः ऊर्ध्वंसदामांबलभद्रआरात्तथासमंताद्बलदेवएवहि १० अंतःसद

द्रवंशीवंशीवाद्यविशारदः ३५ गोपतिर्गोपविंदेशोगोपोगोपिशतारतः गोकुलेशोगोपपुत्रोगोपालोगोगणाश्रयः
३६ पूतनारिर्बकारिश्चतृणावर्तनिपातकः अघारिर्धेनुकारिश्चप्रलंबारिर्व्रजेश्वरः ३७ अरिष्टहाकेशिशत्रुर्व्योमासुर
विनाशकृत अग्निपानोदुग्धपानोवृंदावनलताश्रित ३८ यशोमतीसुतोभव्योरोहिणीलालितःशिशुः रासमंडल
मध्यस्थोरासमंडलमंडनः ३९ गोपिकाशतयूथार्थीशंखचूडवधोद्भवः गोवर्द्धनसमुद्धर्ताशक्रजिद्व्रजरक्षकः ४०
वृषभानुवरोनंदआनंदोनंदवर्धनः नंदराजसुतःश्रीशःकंसारिःकालियांतकः ४१ रजकारिर्मुष्टिकारिःकंसकोदंडभं
जनः चाणूरार्दिःकूटहंताशलारिस्तोशलांतकः ४२ कंसभ्रातृनिहंताचमल्लयुद्धप्रवर्तकः गजहंताकंसहंताकालहंता
कलंकहा ४३ मागधारिर्यवनहापांडुपुत्रसहायकृत् चतुर्भुजःश्यामलांगःसौम्यश्चौपगविप्रियः ४४ युद्धभृद्
द्धवसखामंत्रीमंत्रविशारदः वीरहावीरमथनःशंखचक्रगदाधरः ४५ रेवतीचित्तहर्त्ताचरेवतीहर्षवर्द्धनः रेवती
प्राणनाथश्चरेवतीप्रियकारकः ४६ ज्योतिर्ज्योतिष्मतीभर्तारैवताद्रिविहारकृत् धृतिनाथोधनाध्यक्षोदानाध्य
क्षोधनेश्वरः ४७ मैथिलार्चितपादाब्जोमानदोभक्तवत्सलःदुर्योधनगुरुर्गर्वीगदाशिक्षाकरक्षमी ४८ मुरारिर्मदनो
मंदोनिरुद्धोधन्विनांवरः कल्पवृक्षःकल्पवृक्षीकल्पवृक्षवनप्रभुः ४९ स्यमंतकमणिर्मान्योगांडीवीकौरवेश्वरः
कुभांडखंडनकरःकूपकर्णप्रहारकृत् ५० सेव्योरैवतजामातामधुमाधवसेवितः बलिष्ठःपुष्टसर्वांगोहृष्टपुष्टप्रहृ
ष्टितः ५१ वाराणसीगतःक्रुद्धसर्वःपौंड्रकघातकः सुनंदीशिखरीशिल्पीद्विविदांगनिषूदनः ५२ हस्तिनापुरसं
कर्षीरथीकौरवपूजितः विश्वकर्माविश्वधर्मादेवशर्मादयानिधिः ५३ महाराजश्छत्रधरोमहाराजोपलक्षणः
सिद्धगीतःसिद्धकथःशुक्लचामरवीजितः ५४ ताराक्षकीरनाशश्चबिंबोष्ठःसुस्मितच्छविः करींद्रकरदोर्दंडःप्रचंडो



219

र्मच अद्वितीयोद्वितीयश्च निराकारोनिरंजनः १४ विराट्सम्राट्महौघश्चाधारस्थास्नुश्चरिष्णुमन् फणींद्रःफणिराज-
श्चसहस्रफणिमंडितः १५ फणीश्वरःफणीस्फूर्तिःफूत्कारीचीत्करःप्रभुः मणिहारोमणिधरोवितलीसुतली
तली १६ अतलीसुतलेशश्चपातालश्चतलातलः रसातलोभोगितलःस्फुरद्दंतोमहातलः १७ वासुकीशं-
खचूडाभोदेवदत्तोधनंजयः कंबलाश्वोवेगतरोधृतराष्ट्रोमहाभुजः १८ वारुणीमदमत्तांगोमदघूर्णितलोचनः प
द्माक्ष पद्ममालीचवनमालीमधुश्रवा २० कोटिकंदर्पलावण्योनागकन्यासमर्चितः नूपुरीकटिसूत्रीचकंट्टक
नकांगदी २१ मुकुटीकुंडलीदंडीशिखंडीखंडमंडली कलिःकलिप्रियःकालोनिवातकवचेश्वरः २१ संहारक
द्दुर्द्धर्षःकालाग्निःप्रलयोलयः महाहिपाणिनिशास्त्रभाष्यकारःपतंजलिः २२ कात्यायनोपक्किमाभूस्फोटायन
उरगमः वैकुंठोयाज्ञिकोयज्ञोवामनोहरिणोहरिः २४ कृष्णोविष्णुर्महाविष्णुःप्रभविष्णुर्विशेषवित् हंसोयोगेश्व-
रःकूर्मोवाराहोनारदोमुनिः २५ सनकःकपिलोमत्स्यःकमठोदेवमंगलः दत्तात्रेयःपृथु र्वृद्धऋषभोभार्गवोत्तमः२६ धन्वंत
रिर्नृसिंहश्चकल्किर्नारायणोनरः रामचंद्रोराघवेंद्रःकोशलेंद्रोरघूद्वहः २७ काकुत्स्थःकरुणासिंधूराजेंद्रःसर्वलक्षणः शूरो
दाशरथीस्त्राताकौशल्यानंदवर्द्धनः २८ सौमित्रिर्भरतोधन्वीशत्रुघ्नशत्रुतापनः निषंगीकवचीखड्गीशरीज्या हतकोष्टकः२९
बद्धगोधांगुलीत्राणःशंभुकोदंडभंजनः यज्ञत्रातायज्ञकर्तामारीचवधकारकः ३० असुरारिस्ताडकारिर्विभीषणसहा
यकृत् पितृवाक्यकरोहर्षीविराधारिर्वनेचरः ३१ मुनिर्मुनिप्रियश्चित्रकूटनिवासकृत् कबंधहादंडकेशोरामोराजीव
लोचनः ३२ मतंगवनसंचारीनेतापंचवटीपतिः सुग्रीवःसुग्रीवसखोहनुमत्प्रीतमानसः ३३ सेतुबंधोरावणारिर्लंकाद
हनतत्परः रावणारिःपुष्पकस्थोजानकीविरहातुरः ३४ अयोध्याधिपतिःश्रीमान्लवणारिःसुरार्चितः सूर्यवंशीचं-

रिर्मेरुर्हैमाचिंतोगिरिः गिरिशोगणनाथश्चगौरीशोगिरिगह्वरः ७६ विंध्यस्त्रिकूटोमैनाकःस्रुवेलःपारिभद्रकः
पतंगशिशिरःकंकोजारुधिःशैलसत्तमः ७७ कालंजरोबृहत्सानुर्दरीभृन्नंदिकेश्वरः संतानस्तरुराजश्चमंदारःपा
रजातकः ७८ जयंतकृत्जयंतांगोजयंतीदिग्जयाकुलः वृत्रहादेवलोकश्चशशीकुमुदबांधवः ७९ नक्षत्रेशःसुधा
सिंधुर्मृगोपुष्यःपुनर्वसुः हस्तोभिजिच्चश्रवणोवैधृतोभास्करोदयः ८० ऐंद्रःसाध्यःशुभःशुक्लोव्यतीपातोध्रुवःसितः
शिशुमारोदेवमयोब्रह्मलोकोविलक्षणः ८१ रामोवैकुंठनाथश्चव्यापीवैकुंठनायकः श्वेतद्वीपाजितपदोलोकालोका
चलाश्रितः ८२ भूमिर्वैकुंठदेवश्चकोटिब्रह्मांडकारकः असंख्यब्रह्मांडपतिर्गोलोकेशोगवांपतिः ८३ गोलोकधा
मधिषणोकोपिकाकंठभूषणः श्रीधरःश्रीधरोलीलाधरोगिरिधरोधुरी ८४ कुंतधारीत्रिशूलीचबीभत्सोघर्घर-
स्वनः सूलसूच्यर्पितगजोगजचर्मधरोगजी ८५ अंत्रमालीमुंडमालीव्यालीदंडकमंडलुः वेतालभृद्भूतसंघःकू-
ष्मांड गणसंवृतः ८६ प्रमथेशःपशुपतिर्मृडानीशोमृडोवृषः कृतांतकालसंघारीकूटःकल्पांतभैरवः ८७ षडाननोवीर-
भद्रोदक्षयज्ञविघातकः खर्पराशीविषाशीचशक्तिहस्तःशिवार्थदः ८८ पिनाकटंकारकरश्चलज्झंकारनूपुरः पंडित
स्तर्कविद्वान्वैवेदपाठीश्रुतीश्वरः ८९ वेदांतकृत्सांख्यशास्त्रीमीमांसीकणनामभाक् कणादिर्गौतमावादीवादोनैयायको
नयः ९० वैशेषिकोधर्मशास्त्रीसर्वशास्त्रार्थतत्वगः वैयाकरणकृच्छंदोवैयासःप्राकृतिर्वचः ९१ पंरात्रीसंहिताविं
त्काव्यकृन्नाटकप्रदः पौराणिकःस्मृतिकरोवैद्योविद्याविशारदः ९२ अलंकारोलक्षणार्थोव्यंगविद्वनवद्ध्वनिःवाक्य-
स्फोटःपदस्फोटःस्फोट वृत्तिश्चसार्थवित् ९३ शृंगारउज्वलःस्वच्छोद्भुतोहास्योभयानकः अश्वत्थोयवभोजीचयवक्री
तोयवोशनः ९४ प्रह्लादरक्षकःस्निग्धऐलवंशविवर्द्धनः गताधिरंबरीषांगोविगाधिर्गाधिनांवरः ९५ नानामणिसमा-

मेघमंडलः ५५ कपाटवक्षाः पीनांसः पद्मपादस्फुरद्युतिः महाविभूती भूतेशो बंधमोक्षीसमीक्षणः ५६ वैद्यश-
त्रुः शत्रुसंघोदंतवक्रनिषूदकः अजातशत्रुःपापघ्नोहरिदाससहायकृत् ५७ शालबाहुः शाल्वहंतातीर्थयायीजनेश्वर. नै-
मिषारण्ययात्रार्थीगोमतीतीरवासकृत् ५८ गंडकीस्नानवान्स्रग्वीवैजयंतीविराजितः अम्लानपंकजधरोविपाशीशो
णसंप्लुतः ५९ प्रयागतीर्थराजश्चसप्तयूःसेतुबंधनः गयाशिरश्च धनदः पौलस्त्यःपुलहाश्रमः६० गंगासागरसंगार्थीस-
सगोदावरीपतिः वेणीभीमरथीगोदाताम्रपर्णीवटोदकः६१कृतमालामहा पुण्याकावेरीचपयस्विनी प्रतीचीसुप्रभावेणी-
त्रिवेणीसरयूपमा६२ कृष्णापंपानर्मदाचगंगाभागीरथीनदी सिद्धाश्रमप्रभासश्चबिन्दुर्बिन्दुसरोवरः६३पुष्करःसैंधवोजंबू-
नरनारायणाश्रमः कुरुक्षेत्रपतीरामोजामदग्न्योमहामुनिः६४ इल्विलात्मजहंतासुदामासौख्यदायकः विश्वजिद्विश्व-
नाथश्चत्रिलोकविजयीजयी६५वसतमालतीकर्षीगदोगद्योगदाग्रजः गणार्णवोगुणनिधिर्गुणपात्रोगुणाकरः६६रंगव
ल्लीजलाकारोनिर्गुणःसगुणोबृहत् दृष्टःश्रुतोभवद्भूतोभविष्यच्चाल्पविग्रहः६७अनादिरादिरानंदः प्रत्यग्धामानिरं-
तरः गुणातीतः समःसाम्यस्समदृकुनिर्विकल्पकः ६८ गूढोव्यूढोगुणोगौणोगुणाभासोगुणावृतः नित्योक्षरोनिर्वि
कारोक्षरोजस्रस्रवोमृतः ६९ सर्वगःसर्वविसार्थःसमबुद्धिःसमप्रभः अ कुद्योच्छेद्यआपूर्णोशोष्योदाह्यो-
निवर्तकः ७० ब्रह्मब्रह्मधरोब्रह्माज्ञापकोव्यापकःकविः अध्यात्मकोधिभूतश्चाधिदेवःस्वाश्रयाश्रयः ७१ महावा
युर्महावारिश्चेष्टारूपतनुस्थितः प्रेरकोबोधकोबोधीत्रयोविंशतिकोगणः ७२ अंशांशश्चनरावेशोवतारोभूपरिस्थि
तः महर्जनस्तपःसत्यंभूर्भुवःस्वरितित्रिधा ७३ नैमित्तिकःप्राकृतिक आत्यंतिकमयोलयः सर्गोविसर्गस्सर्गादिर्निरो-
धोरोधऊतिमत् मन्वंतरावतारश्चमनुर्मनुसुतोनघः स्वयंभूःशांभवःशंकुःस्वायंभुवसहायकृत् ७५ सुरालयोदेवगि

भापतिः स्वधर्माधिपतिःसत्वंवृष्णिचक्राद्वतोभिषक् १६ सभ्यशीलःसभादीपःसभाग्निश्चसभारविः सभाचंद्रः स-
भाभासःसद्योदेवःसभापतिः १७ प्रजार्थदःप्रजाभर्ताप्रजापालनतत्परः द्वारकादुर्गसंचारीद्वारकागृहविग्रहः १८
द्वारकादुःखसंहर्ताद्वारकाजनमंगलः जगन्माताजगत्त्राताजगद्भर्ताजगत्पिता १९ जगद्बंधुर्जगद्भ्राताजगन्मित्रोज
गत्सखः ब्रह्मण्यदेवोब्रह्मण्योब्रह्मपदरजोदधत् २० ब्रह्मपादरजस्पर्शीब्रह्मपादनिषेधकः विप्रांघ्रिजलपूतां-
गोविप्रसेवापरायणः २१ विप्रमुख्योविप्रहितोविप्रगीतमहाकथः विप्रपादजलार्द्रांगोविप्रपादोदकप्रियः २२
विप्रभक्तोविप्रगुरुर्विप्रोविप्रपदानुगः अक्षौहिणीवृतोयोधाप्रतिमापंचसंयुतः २३ चतुरंगिरापद्यवर्तीसामंतो-
द्धृतपादुकः गजकोटिप्रयायीचरथकोटिजयध्वजः २४ महारथश्चातिरथोजैत्रंस्यंदनमास्थितः नारायणास्त्री
ब्रह्मास्त्रीरणश्लाघीरणोद्भटः २५ मदोत्कटोयुद्धवीरोदेवासुरभयंकरः करिकर्णमरुत्प्रेजकुंतलश्चलकुंडलः
२६ अग्रगोवीरसंमर्दीमर्दलोरणदुर्मदः भटः प्रतिभटःप्रोच्चोबाणवर्षीषुतोयदः २७ खड्गखंडितसर्वांगःषो
डशाब्दःषडक्षरः वीरघोषःक्लिष्टवपुर्वज्रांगोवज्रभेदनः २८ रुग्णवज्रोभग्नदंडःशत्रुनिर्भर्त्सनोद्यतः अट्ट-
हासःपट्टधरःपट्टराज्ञीपतिःपटुः २९ कलःपटहवादित्रोहुंकारोगर्जितःस्वनः साधुर्भक्तपराधीनःस्वतंत्रःसाधुभू
षणः ३० अस्वतंत्रःसाधुमयःसाधुग्रस्तमनामनाक् साधुप्रियःसाधुधनःसाधुज्ञातिःसुधाघनः ३१ साधुचा
रीसाधुचित्तःसाधुवासीशुभास्पदः इतिनाम्नांसहस्रंतुबलभद्रस्यकीर्तितम् ३२ सर्वसिद्धिप्रदंनृणांचतुर्वर्गफल
प्रदं शतावर्तंपठेद्यस्तुसविद्यावान्भवेदिह ३३ इंदिरांचविभूतिंचाभिजनंरूपमेवच बलमोजस्यपठनात्सर्वंप्राप्नोति
मानवः ३४ गंगाकूलेथकालिंदीकूलेदेवालयेतथा सहस्रावर्तपाठेनबलात्सिद्धिःप्रजायते ३५ पुत्रार्थीलभतेपुत्रं

२२१

कीर्णोनानारत्नविभूषणः नानापुष्पधरःपुष्पीपुष्पधन्वाप्रपुष्पितः ९६ नानाचंदनगंधाढ्योनानापुष्परसार्चितः नानाव
र्णमयोवर्णोनानावस्त्रधरःसदा ९७ नानापद्मकरःकौशीनानाकौशेयवेशधृक् रत्नकंबलधारीचधौतवस्त्रसमावृतः
९८ उत्तरीयधरःपर्णोघनकंचुकसंघवान् पीतोष्णीषःसितोष्णीषोरक्तोष्णीषोदिगंबरः ९९ दिव्यांगोदिव्यरचनोदिव्य
लोकोविलोकितः सर्वोपमोनिरूपमोगोलोकांकीकृतांगणः १०० कृतस्योत्संगगोलोकःकुंडलीभूतआस्थितः माथुरो
माथुदर्शीचचलत्खंजनलोचनः १ दधिहर्तादुग्धहरोनवनीतसिताशनः तक्रभुक्तक्रहारीचदधिचौर्यकृतश्रमः
२ प्रभावतीबद्धकरोदामीदामोदरोदमी सिकताभूमिचारीचबालकेलिर्व्रजार्भकः ३ धूलिधूसरसर्वांगःकाकपक्षध
रःसुधीः मुक्तिकेशोवत्सवृंदः कालिंदीकूलवीक्षणः ४ जलकोलाहलीकूलीपंकप्रांगणलेपकः श्रीवृंदावनसंचारिवं
शीवटनटस्थितः ५ महावननिवासीचलोहार्गलवनाधिकः साधुप्रियतमःसाध्यःसाध्वीशोगतसाध्वसः ६ रंगनाथो
विठ्ठलेशोमुक्तिनाशोघनाशकी सुकीर्तिःसुयशाःस्फीतोयशस्वीरंगरंजनः ७ रागषड्कोरागपुत्रोरागिणीरमणोत्सुकः
दीपकोमेघमल्लारश्रीरागोमालकोशकः ८ हिन्दोलोभैरवाख्यश्चस्वरजातिस्मरोमृदुः तालोमानप्रमाणश्चस्वरगम्योक
लाक्षरः ९ शमीश्यामीशतानंदःशतयामःशतक्रतुः जागरःसुप्तआसुप्तःसुषुप्तःस्वप्नऊर्वरः १० ऊर्ज्जःस्फूर्जोनिर्जर
श्चविज्वरोज्वरवर्जितः ज्वरजिज्ज्वरकर्ताचज्वरयुक्त्रिज्वरोज्वरः ११ जांबुवान्जंबुकाशंकीजंबूद्वीपोद्विपारिहा शा-
ल्मलिःशाल्मलिद्वीपःप्लक्षःप्लक्षवनेश्वरः १२ कुशधारीकुशःकौशीकौशिकःकुशविग्रहः कुशस्थलीपतिःकाशीनाथो
भैरवशासनः १३ दाशार्हसात्वतिर्वृष्णिर्भोजोंधकनिवासकृत् अंधकोदुंदुभिर्द्योतःप्रद्योतःसात्वतांपतिः १४ शू
रसेनोनुविषयोभोजवृष्ण्यंधकेश्वरः आहुकःसर्वनीतिज्ञ उग्रसेनोमहोग्रवाक् १५ उग्रसेनप्रियःप्रार्थ्यप्रार्थ्योयदुस

धनार्थीलभतेधनं बंधात्प्रमुच्यतेबद्धोरोगीरोगान्निवर्तते ३६ अयुतावर्तपाठेन्चपुरश्चर्याविधानतः होमतर्पण-
गोदानविप्रार्चनकृतोद्यमात् ३७ पटलंपद्धतिंस्तोत्रंकवचंतुविधायच महामंडलभर्तास्यान्मंडितोमंडलेश्वरैः ३८
मत्तेभकर्णप्रहितामदगंधेनविह्वला अलंकरोतितद्द्वारंभ्रमद्भृंगावलीभृशं ३९ निष्कारणःपठेद्यस्तुप्रीत्यर्थंरेव
तीपतेः नाम्नांसहस्त्रंराजेंद्रसजीवन्मुक्तउच्यते ४० सदावसेत्तस्यगृहेबलभद्रोच्युतात्मजः महापातक्यपिजनःप
ठेन्नामसहस्त्रकं ४१ छित्वामेरुसमंपापंमुक्त्वासर्वसुखंत्विह परात्परंमहाराजगोलोकंधामयातिहि ४२ नारद
उवाच इतिश्रुत्वाच्युताग्रस्यबलदेवस्यपंचांगंधृतिमान्धार्तराष्ट्रः समर्प्यैतासहितयापरयाभक्त्याप्राड्विपाकंपूज
यामासतमनुज्ञाप्याशिषंदत्वाप्राड्विपाकोमुनींद्रोगजाह्वयात्स्वाश्रमंजगाम ४४ भगवतोनंतस्यबलभद्रस्यपरब्रह्म
णः कथायःशृणुतेश्रावयतेतयानंदमयोभवति ४५ इदंमयातेकथितंनृपेन्द्र सर्वार्थदंश्रीबलभद्रखंडं शृणोति-
योधामहरेःसयाति विशोकमानंदमखंडरूपं १४६ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीबलभद्रखंडेप्राड्विपा
कदुर्योधनसंवादेबलभद्रसहस्त्रनामवर्णनंनाम द्वादशोध्यायः १२ समाप्तमिदंबलभद्रखंडं खंड ८

श्रीगणेशायनमः बहुलाश्वउवाच हरेः श्रीकृष्णचंद्रस्यभक्तिमार्गस्तुयःपरः तंवदाशुमुनेमह्यंयेनभक्तो
भवाम्यहं १ नारदउवाच भक्तिमार्गंवदिष्यामिवेदव्यासमुखाच्छ्रुतं येनप्रसन्नोभवतिभगवान्भक्तवत्स
लः २ शंखंविजित्यकृष्णेनभुजदंडबलोद्धृतं द्वारवत्यांसभादिव्यासुधर्मानाममैथिल ३ यन्मंडपप्रदे
शस्यवैडूर्यस्तंभपंक्तयः राज्यंतेकोटिशोराजन्विश्वकर्मविनिर्मिताः ४ पद्मरागरवचिद्भौमैश्रेण्योवि
द्रुमसाचिताः यत्रचित्रवितानानिभ्राजंतेमौक्तिकालिभिः ५ सिंहासनानिकुड्यानिकालमेघतडिद्युभिः
जांबूनदसुवर्णानांस्फुरत्कुंडलकोटिभिः ७ बालार्करत्नकेयूरकांचीकंकणनूपुरैः शतचंद्रप्रतीकाशाः
स्फुरत्कुंडलमंडिताः ७ गायंतियत्रगंधर्व्योविद्याधर्योमुदान्विताः नृत्यंतःकलवादित्रैःस्पर्द्धावतःपर
स्परं ८ यस्याश्चतुर्षुकोणेषुदेववृक्षैर्मनोरमैः नंदनंसर्वतोभद्रंध्रौव्यंचैत्ररथंवनं ९ लक्षाणियत्ररा
जेंद्रसरांसिविमलानिच सहस्रदलपद्मानिभ्रमरैःसंकुलानिच १० दशयोजनविस्तीर्णापंचयोजन-
मूर्द्धगा एतादृशीसुधर्मास्तेपताकध्वजमंडिता ११ यत्रप्रविष्टःपुरुषश्चात्मानंमन्यतेपरं यत्सिंहासनमा
साद्यशक्रोहमितिमन्यते १२ यद्यत्रैलोक्यचातुर्यंतस्यदेहेप्रवर्तते यत्तिष्ठतेतत्रयावत्तावद्भूमिषड्डार्ति
र्हि १३ यावतश्चजनायत्रप्रविशंतिनरोत्तम स्वप्रभावेनसहसातावतीशाप्रकाशते १४ षट्पंचाश
त्कोटिसंख्यायादवायत्रसानुगाः तच्चत्वरस्यैकदेशेदृश्यंतेतत्रमैथिल १५ परिपूर्णतमःसाक्षाच्छ्रीकृ
ष्णोभगवान्स्वयं यत्रास्तेतत्रराजेंद्रवर्णनंकःकरोतिहि १६ अथतस्यांसुधर्मायांयदुकोटिसमावृतः उ
ग्रसेनोगीयमानःसूतमागधबंदिभिः १७ आकाशादागतःसाक्षाद्वेदव्यासोमहामुनिः पाराशर्योघन

## अथश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडप्रारं०

दंपरमंशुभम् ४ सत्वंरजस्तमइतिगुणाःप्रकृतिसंभवाः तैर्व्यासंहिजगत्सर्वंसर्वार्थमिवविष्णुना ५ सत्वे
प्रलिनाःस्वर्यांतिनरलोकंरजोलयाः तमोलयास्तुनरकंयांतिकृष्णंहिनिर्गुणाः ६ पंचाग्नितपाःप्रतपन्येरा
जन्वनवासिनः लोकंसप्तऋषीणांतुतेषांतुगतकल्मषाः ७ संन्यासाश्रमकर्तारस्त्रिदंडधृतपाणयः जि
तेंद्रियमनोधर्माःसत्यलोकंव्रजंतिहि ८ अष्टांगयोगयोगींद्रानिर्मलाऊर्ध्वरेतसः जनलोकंमहर्लोकंया
तितेनात्रसंशयः ९ यज्ञकर्ताशक्रलोकेवसतेशास्वतीःसमाः दानीचांद्रमसंलोकेव्रतीसौर्यंव्रजत्यलं १०
तीर्थयायीचाग्निलोकंसत्यसंधश्चवारुणं वैष्णवाश्चापिवैकुंठेशैवाःशैवंव्रजंतिहि ११ पितॄन्यजंतियेनि
त्यंस्कंदेवैश्वर्यमजेप्सवः दक्षिणेनयथार्य्यम्णापितृलोकंव्रजंतिते १२ स्वर्लोकंवैतथास्मार्तापंचपूजनसंयु
ताः प्रजापतियजायांतिदक्षादींश्चप्रजापतीन् १३ भूतानियांतिभूतेज्यायक्षान्यक्षयजास्तथा येयस्य
भक्तास्तल्लोकान्यांतिराजन्नसंशयः १४ तथापापरताराजन्दुःसंगवशवर्तिनः यमलोकंचतेयांतिनिर
यैर्दारुणैर्वृतं १५ पुनरावर्तिनोलोकाःसर्वेचाब्रह्मलोकतः पुनरावर्तिनोलोका विद्धिराजन्महामते १६
कर्मणांसनिमित्तानांमार्गएषगतागतः तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्यते १७ क्षीणपुण्यःपतत्य
र्वागनिच्छत्कालचालितः यादवेंद्रमहाबाहोतस्मात्कर्मफलंत्यज १८ भक्तोनिष्कारणोभूत्वाज्ञानवै
राग्यसंयुतः प्रेमलक्षणयावाचाहरिभक्तजनप्रियः१९भजश्रीकृष्णपादाब्जमभयंहंससेवितं योमृत्युः
सर्वलोकानांबलात्संहारकारकः २० सयत्रभगवद्धाम्निगतःसन्मृत्युमाप्नुयात् २१ उग्रसेनउवाच स
र्वेलोकाहिभगवन्पुनरावर्तिनःस्मृताः तेभ्योजातंचवैराग्यंमनसोमेनसंशयः २२ श्रीकृष्णधाम पर-

श्यामस्तडित्पिंगजटाधरः १८ तंदृष्ट्वासहसोत्थाययदुराजः कृतांजलिः नत्वासनंचोपचारंदत्वा तत्सन्मुखो
भवत् १९ उग्रसेनउवाच अद्यमेसफलंजन्मसफलंगेहमद्यमे अद्यमेसफलोधर्मोब्रह्मन्त्वय्यागतेसति
२० सदानंदंपुकुशलं कृष्णेनेष्टोभवत्कहि वदमेकुशलंदेवयेनस्वस्थोभवाम्यहम् २१ यत्रयत्रव्रजंत-
स्त्वादृशाःसाधवःप्रभो तत्रतत्रभवेत्सिद्धिर्लौकिकीपारलौकिकी २२ यत्रक्षणंस्थिताःसंतस्तत्रसाक्षा
त्स्वयंहरिः किमुलोकगुणाब्रह्मन्पाराशर्य्यमहामुने २३ मयातुपुण्यंयज्ञोवाकिंकृतंपूर्वजन्मनि येनवै
द्वारकाराज्यंप्राप्ताहंमुनिपुंगव २४ भवादृशाविप्रमुख्यागृहमायांतिनित्यशः तस्मात्परंहिसुकृतंजा
नेस्वस्यनसंशयः २५ व्यासउवाच धन्योसिराजशार्दूलधन्याभातेविमलामतिः परंकृतंत्वयाराजन्
सुकृतंपूर्वजन्मनि २६ पुरात्वंमरुत्तोराजन्कृत्वायज्ञंजगज्जितं निष्कारणोभून्मनसाप्रसन्नोभूद्धरि-
स्तदा २७ अनिमित्तेनभावेनप्राप्तंचेदंपरंतव परिपूर्णतमःसाक्षाच्छ्रीकृष्णोभगवान्हरिः २८ असंख्य
ब्रह्मांडपतिर्गोलोकेशःपरात्परः सोयंभक्त्यावशीभूतःस्ववशस्तवमंदिरे २९ अहोभोजपतेमुक्तिंददाति-
भजतांहरिः नकर्हिचिद्भक्तियोगंदुर्लभ्यंविद्धितन्नृप ३० इतिश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडेनार-
दबहुलाश्वसंवादेव्यासागमननामप्रथमोध्यायः १ उग्रसेनउवाच धन्योस्म्यनुगृहीतोस्मितववर्णन
निर्वृतः त्वद्ब्रुवतंचसंदेहंदूरीकर्तुंभवान्क्षमः १ कर्मणांसनिमित्तानांकागतिःकिंचलक्षणं कतिभेदा-
हितेषांवैवदब्रह्मन्यथातथा २ व्यासउवाच गुणैःसर्वाणिकर्माणिसनिमित्तानिसंतिहि तान्येवचा-
निमित्तानिराजन्त्यक्तफलानिहि ३ सनिमित्तंचयत्कर्मबंधनंविद्धियादव अनिमित्तंचयत्कर्ममोक्ष

वंतिश्शृणुतान्पृथक् ७ हिंसांदंभंचमात्सर्य्यंचाभिसंधायभिन्नदृक् कुर्याद्भावंहरौक्रोधीतामसः परिकी
र्तितः ८ यशऐश्वर्यविषयानभिसंधाययत्नतः अर्चयेद्योहरिंराजन्राजसः परिकीर्तितः ९ उद्दिश्य-
कर्मनिर्हारमपृथग्भावएवहि मोक्षार्थंलभतेविष्णुंसभक्तः सात्विकः स्मृतः १० जिज्ञासुरार्तोज्ञानीच-
तथार्थार्थीमहामते चतुर्विधाजनाविष्णुंभजंतेकृतमंगलाः ११ एवंबहुविधेनापिभक्तियोगेनमाधवं भ
जंतिसर्वनिमित्तास्तेजनाः सकृतिनःपरे १२ लक्षणंभक्तियोगस्यनिर्गुणस्यतथाशृणु तद्गुणश्रुतिमात्रेणश्री
कृष्णेपुरुषोत्तमे १३ परिपूर्णतमेसाक्षात्सर्वकारणकारणे मनोगतिरविच्छिन्नाखंडिताहैतुकीचया १४ य
थाब्धावंभसागंगासाभक्तिर्निर्गुणास्मृता निर्गुणानांचभक्तानांलक्षणंशृणुमानद १५ सार्वभौमंपारमेष्ठ्यंश
क्रधिष्ण्यंतथैवच रसाधिपत्यंयोगर्द्धिंनवांछंतिहरेर्जनाः १६ हरिणादीयमानंवासालोक्यंयादवेश्वर न
गृह्णंतिकदाचित्तेसत्संगानंदनिर्वृताः १७ सामीप्यंचेन्नवांछंतिभगवद्विरहातुराः सन्निकृष्टेनतत्प्रेमयथादू
रतरभवेत् १८ सारूप्यंदीयमानंवासमानत्वाभिमानिनः नैरपेक्षान्नवांछंतिभक्तास्तत्सेवनोत्सुकाः १९ ए
कत्वंचापिकैवल्यंनवांछंतिकदाचन एवंचेत्तर्हिदासत्वंकस्वामित्वंपरस्यच २० नैरपेक्षाश्चयेशांतानिर्वैराः
समदर्शिनः आकैवल्याल्लोकपदग्रहणंकरणंविदुः २१ नैरपेक्ष्यंमहानंदंनैरपेक्षाजनाहरेः जानंतिहिय
थानासापुष्पामोदंनचक्षुषी २२ सकामाश्चतदानंदंजानंतिहिकथंचन रसकर्तातथाहस्तोरसस्वादंनवे
त्तिहि २३ तस्माद्राजन्भक्तियोगंविद्धिचात्यतिकंपदं भक्तानांनैरपेक्षाणांपन्द्दतिंकथयामिते २४ स्म
रणंकीर्तनंविष्णोः श्रवणंपादसेवनं अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनं २५ कुर्वंतिसततंराजन्भक्तिये-

मंयतोनावर्ततेगतः तल्लोकंवदमेब्रह्मन्कचास्तेसर्वतःपरं २३ श्रीव्यासउवाच ब्रह्मांडेभ्योबहिर्द्धाम-
श्रीकृष्णस्यमहात्मनः यद्गतानानिवर्त्ततेतद्वैलोकंविदुःपरं २४ ब्रह्मांडोयंजीवसंघःपंचाशत्कोटियो-
जनैः विस्तृतःपरतोद्वाभ्यांशतकोटिविलंबितः २५ यदंतरगतोराजन्लक्ष्यतेपरमाणुवत् तदंतरग-
ताश्चान्येकोटिशोत्यंदराशयः २६ नतद्भासयतेसूर्योनशशांकोनपावकः कामक्रोधश्चलोभश्चनमो-
होयत्रयातिच २७ नयत्रशोकोनजरानमृत्युर्नार्त्तिमेवच नप्रधानंनकालश्चविशंतेचगुणाःकुतः
२८ शब्दब्रह्मापिनिर्वाच्यंतद्वर्णयितुमक्षमः श्रीकृष्णतेजसंभूतास्तत्रसंतिचपार्षदाः २९ अकिंच
नाश्चयेदांताःशांताश्चसमचेतसः श्रीकृष्णचंद्रपादाब्जमकरंदरसालयाः ३० प्रेमलक्षणयाभक्त्यासदा
निष्कारणाःपराः लोकानुल्लंघ्यतद्धामयांतिराजन्नसंशयः ३१ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीविज्ञा
नखंडेश्रीव्यासोग्रसेनसंवादेलोकगतिनिरूपणंनामद्वितीयोध्यायः २ उग्रसेनउवाच श्रुतंत्वत्सु
खाद्ब्रह्मन्गुणकर्मगतिर्मया पुनरावर्तिनोलोकास्तथासंतिविनिश्चिताः १ निष्कारणाद्धरेःसाक्षा
त्सेवनाद्धाममुत्तमं लभतेदुर्लभंदिव्यंभक्तानांतच्छ्रुतंमया २ भक्तियोगःकतिविधोवदमेवदतांवरः
येनप्रसन्नोभवतिभगवान्भक्तवत्सलः ३ श्रीव्यासउवाच द्वारावतीसधन्योसिश्रीकृष्णोयोह
रिप्रियः पृच्छसेभक्तियोगंत्वंधन्यातेविमलामतिः ४ यंश्रुत्वानिर्मलोभूयाद्ब्रह्मघात्यपिपातकी
तंभक्तियोगंविशदंतुभ्यंवक्ष्यामियादव ५ भक्तियोगोद्विधाराजन्सगुणश्चैवनिर्गुणः सगुणःस्या
द्बहुविधोनिर्गुणश्चैकलक्षणः ६ सगुणःस्याद्बहुविधोगुणमार्गेणदेहिनां तैर्गुणैस्त्रिविधाभक्ताभ

नां अजातशत्रूणांतेषांदुर्लभंपुण्यवर्जितैः १४ यस्मिन्कुले कृष्णभक्तोजायते ब्रह्मलक्षणं तत्कुलंविमलंविद्धिमलीमसिमतिस्वतः १५ राजन्श्रीकृष्णभक्तस्तुपितॄन्दशकुलोद्भवान् प्रियापक्षेपिदशचमातृपक्षेतथादश १६ पुरुषानुद्धरेद्राजन्निरयात्तापबंधनात् साधुसंबंधिनश्चान्येभृत्यादासाःसुहृज्जनाः १७ शत्रवोभारवाहाश्चतद्गृहेपक्षिणस्तथा पिपीलकाश्चमशकास्तथाकीटपतंगकाः १८ अब्रह्मण्येकृष्णसारे सौवीरेकेटकेतथा म्लेच्छदेशेपिदेवेस्वभक्तोलोकान्पुनातिहि १९ सांख्ययोगंविनाराजन्तीर्थधर्ममखैर्विना साधुसंसर्गिणस्तेपिप्रयांतिहरिमंदिरं २० इत्थंश्रीकृष्णभक्तानांमाहात्म्यंकथितंमया चतुःपदार्थनतॄणांकिंभूयःश्रोतुमिच्छसि २१ उग्रसेनउवाच परिपूर्णतमेसाक्षाच्छ्रीकृष्णेपरमात्मने दंतवक्रस्यदुष्टस्यज्योतिर्लीनंबभूवह २२ अहोमहदिदंचित्रंसायुज्यंमहतामपि योग्यंस्याद्धिप्रमुख्येद्रुकथंचान्येनशत्रुणा २३ श्रीव्यासउवाच ममाहमितिवैषम्यंभूतानांत्रिगुणात्मनां क्रोधाद्यैर्वर्ततेराजन्नहरौपरमात्मनि २४ हरौकेनापिभावेनमनोलग्नंकरोतियः यातितद्रूपतांयातिभृंगिणःकीटकोयथा २५ स्नेहंकामंभयंक्रोधमैक्यंसौहृदमेवच कृत्वातन्मयतांयांतिसांख्ययोगंविनाजनाः २६ स्नेहान्नंदयशोदाद्यावसुदेवादयोपरे कामाद्गोप्योहरिंप्रापानतुब्रह्मतथानृप २७ तद्रूपगुणमाधुर्य्यभावसंलग्नमानसाः भयात्कंसस्तुवसुतस्तत्सायुज्यंजगामह २८ क्रोधादयंदंतवक्रःशिशुपालादयोपरे ऐक्यान्नृयादवायूयंसौहृदाच्चवयंतथा २९ तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् अहर्निशंहिस्मरणंभवेच्छत्रोर्नकर्हिचित् ३० शत्रुभावंहरौतस्मात्कुर्वंतिदनुजादयः इतिश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडे श्रीव्यासोग्रसेनसंवादे भक्तमाहात्म्यंनाम चतुर्थोध्यायः ४ श्रीवेदव्यासउ-

प्रेमलक्षणां तेभक्तादुर्लभाभूमौभगवद्भावभावना: २६ कुर्वंतोमहतोपेक्ष्या दयाहीनेषुसर्वतः समानेषुत
थामैत्रींसर्वभूतदयापरः २७ कृष्णपादाब्जमधुपाः कृष्णदर्शनलालसाः कृष्णंस्मरंतिप्राणेशंयथाप्रोषित
भर्तृकाः २८ श्रीकृष्णस्मरणाद्येषांरोमहर्षःप्रजायते आनंदाश्रुकलाश्चैववैवर्ण्यंतुक्वचिद्भवेत् २९ श्रीकृष्ण
गोविन्द हरेब्रुवंतः श्लक्ष्णयागिरा अहर्निशंहरेर्लभ्यास्तेहिभागवतोत्तमाः ३० इतिश्रीमद्गर्गाचार्यसंहिता
यांश्रीविज्ञानखंडेश्रीवेदव्यासोग्रसेनसंवादेनिर्गुणभक्तियोगवर्णनंनामतृतीयोध्यायः ३ श्रीव्यासउवा-
च खेवायौसलिलेवह्नौमत्यांज्योतिर्गणेषुच श्रीकृष्णदेवंपश्यंतोहर्षितास्युःपुनःपुनः १ श्रीकृष्णोराधि
कानाथःकोटिकंदर्पमोहनः तन्नेत्रगोचरोयातिब्रुवन्श्रीनंदनंदनः २ सदानंदंचतेदृष्ट्वाप्रहसंतिप्रहर्षि-
ताः क्वचिद्रुदंतिधावंतिनंदंतिचक्वचित्तथा ३ क्वचिद्गायंतिनृत्यंतिक्वचित्तूष्णींभवंतिच कृष्णचंद्रस्वरूपा
स्तेकृतार्थावैष्णवोत्तमाः ४ तेषांदर्शनमात्रेणनरोयातिकृतार्थतां नकालोनयमोतेषांदंडंदातुंनचक्षमः ५
गदाकौमोदकीवामेदक्षिणेचक्रदर्शनं अग्रेशार्ङ्गधनुःपश्चात्पांचजन्यंघनस्वनं ६ नंदकश्चमहारवङ्गःशत
चंद्रेषवःशिताः एतान्यायुधमुख्यानितांश्चरक्षंत्यहर्निशं ७ तदोपरिमहापद्मच्छायांकर्तुंपुनःपुनः ग-
रुडःपक्षवातेनश्रमहर्त्तासतामपि ८ यत्रयत्रगताःसंतस्तत्रतत्रस्वयंहरिः तीर्थीकुर्वन्भूमिभागंश्रीम
त्पादाब्जरेणुभिः ९ क्षणंयत्रस्थिताःसंतस्तत्रतीर्थानिसंतिहि तत्रकोपिमृतःपापीयातिविष्णोःपरंपदं १०
दूरात्संप्रेक्ष्यकृष्णेष्टानाधयोव्याधयस्तथा भूतप्रेतपिशाचाश्चपलायंतेदिशोदश ११ नद्योनदाःपर्वता
श्चसमुद्राश्चतथापरे मार्गंददुश्चसाधुभ्योनपेक्ष्येभ्यःसमंततः १२ साधूनांज्ञानिनिष्ठानांविरक्तानांमहात्म-

इतिपार्श्वगतेहिदंडे कीलानिचात्रशतशोगुणभावभेदाः अस्याःक्रमानवकथाश्रवणादयश्च श्रेणीयम-
स्तिसंरलाभगवत्सदस्य १३ इतिश्रीमद्गर्गाचार्यसंहितायांश्रीविज्ञानखंडेव्यासोग्रसेनसंवादेभक्त्युत्कर्ष-
वर्णनंनामपंचमोध्यायः ५ उग्रसेनउवाच कर्मगृहोगृहस्थोयंश्रीकृष्णस्यमहात्मनः सेवांवैकेनविधिना
कुर्यातद्ब्रूहिमेमुने १ भक्त्यंकुरोयस्यनास्तिवास्तितस्यनवर्द्धते तस्यकेनप्रकारेणप्रसन्नःस्यात्हरिस्वयम् २
श्रीव्यासउवाच यदिभक्त्यंकुरोनस्यात्सत्संगेनचजायते बलाद्विवर्द्धतेतस्मात्सतांसंगंसमाचरेत् ३ कृ
कृष्णसेवाविधिंतुभ्यंवक्ष्यामिसुलभांपरां ययागृहस्थोयंशीघ्रंश्रीकृष्णंप्राप्नुयान्नृप ४ आचार्य्यंकुलसंभू
तंश्रीकृष्णध्यानतत्परं एतादृशंगुरुंकृत्वासिद्धोभवतिमानवः ५ गुरोःसेवाविधिंशिक्षेच्छ्रीकृष्णस्यमहात्म
नः विष्णुदीक्षाविहीनस्यसर्वंभवतिनिष्फलं ६ यज्ञोदानंतपस्तीर्थंसर्वंभवतिनिष्फलं निगुरोर्दर्शनंकृत्वाह
तपुण्योभवेन्नरः ७ उत्तराभिमुखंवंशश्वत्कारयेद्धरिमंदिरं तत्रसिंहासनंप्रोच्चंसपीठंकुंभमंडितम् ८ स-
च्चिदानंदनामस्यात्सोपानत्रयभूषितं महार्हवस्त्रैराच्छिन्नंतन्नतुल्यासनंमृदु ९ पार्श्वोपबृंहणावीतेस्फुरद्दे
मांबरावृते नानाभितिभिर्वृस्त्राद्यैरंतःपटसमन्वितैः १० सर्वतोमंडलंतस्यतोरणैःसमलंकृतैः गवाक्षवारि
यंत्राढ्यचतुःशालस्फुजालकैः ११ राजतोप्रांगणोद्देशःसभामंडपमंडलैः तत्रप्रांगणमध्येतुतुलसीमंदिरंस्तु
भं १२ मंदिरस्यबहिर्द्वारः कारयेद्वेदिपद्द्वयम् तथावैकृतिमंराजन् सिंहद्वयमधिष्ठितं १३ सुवर्णशिखर-
स्याधश्चक्रंचशिखरोपरि द्वारेपिहरिनामानिप्रालेख्यानिशुभानिच १४ शंखपद्मगदाशार्ङ्गमालेख्यंभिति
पार्श्वयोः इषुधीचतथाबाणाःसव्येदक्षिणएवच १५ तथामंदिरपृष्ठेवैशतचंद्रंचनंदकं हलंचमुसलंचैवलेख

वाच वत्साद्यधेनुकबकीकवकेशिकाला रिष्टप्रलंबकपिवल्वलशंखशाला: वैरेणयंकिमुतभक्तिमतांनरेंद्रप्रा
पुः परंप्रकृतिपूरुषयोः पुमांसं १ पूर्वास्फुरावतिबलोमधुकैटभाख्योस्वर्णाक्षहेमकशिपुश्चतथापरोन्च वैरंविधा-
यनृपरावणकुंभकर्णौविष्णाः किलापतुरलंपरमंपदंहि २ केकेनविष्णुपदमागतवंतश्चादौ प्रह्लादबाणबलि
यक्षविभीषणाद्याः सत्संगिसंगनिरताः वहमानपात्र श्रीमत्प दाब्जमकरंदरजोविलुब्धाः ३ देवर्षिगौष्यति-
वसिष्ठपराशराद्याः सांख्यायनाशितशुकासनकादयश्च निष्कारणाभुविचरंत्यरविंदनेत्र पादारविंदमकरंद
मिलिंदमुख्याः ४ यत्युत्कलांगभर्तार्जुनमैथिलाश्च गाधिप्रियव्रतयदुप्रमुखांवरिषाः निःकारणास्परमहंस
वराश्चरंति श्रीकृष्णचंद्रचरितामृतपानमत्ताः ५ मंदोदरीचशबरीन्चपतंगशिष्या स्तारातथाभिवनितानिपु
नालहल्या कुंतीतथाद्रुपदराजसुतास्कभक्ताएताः परंपरमहंससमाः प्रसिद्धाः ६ सुग्रीववालिसुतवातसु-
तर्क्षराज नागारिशृ ध्रवरकाकभुशुंडिमुख्याः कुब्जाद्विवायकसुदामगुहादयोन्ये तत्संगमेत्यहरिभक्तवराबभू
वुः॥७॥कृष्णंनरोधपतिधर्मतपोनयोगः सांख्यंनयज्ञउततीर्थयमव्रतानि च्छंदांसिपूर्तनियमौचलदक्षिणाचनेष्टानदा
नमथभक्तिमृतेनकश्चित् ८ यज्ञव्रताध्ययनतीर्थतपोनियोगै रिष्टास्वधर्मनियमादिकसांख्ययोगैः यत्प्राप्यतेसकलतद्भ
वतीहभक्त्या भक्तेःपदंकहिंचिन्नभवेत्किलेभिः ९उद्धारिणीयमपुरस्यसविश्वकूपा दुत्तारिणीभवमहार्णववारि
वेगात् संहारिणीविषयसंचितकर्मणांच सत्कारिणीहरिपदस्यपरात्परस्य १० श्रीकृष्णदर्शनरसात्मकभावराज
दुग्धहृत्संतपरमोत्सवपंचमीयं क्ष्व्यालतातिफलपल्लवभारनम्रासंराजतेहिसततंकुसुमाकरस्य ११संमोहकालघनमध्यतडित्स्फुरंति
शास्त्रार्थदर्शवचसापदर्शीपिकयं दीपावलिर्विजयतेजयकार्तिकस्य जेतुंगुणान्विजयिनोदशमीजयस्य १२ सांख्यंचयोग-

मएकाग्रमानसः किशोरंश्यामलंत्वद्यंवंशीवेत्रविभूषितं ४ एवंकृत्वाहरेर्ध्यानंपुनर्गच्छेद्वहिः स्थूलं त्यक्त्वाचंशृणुराजेंद्रगृहस्थस्ययथातथं ५ अश्वक्रांतेतिमंत्रेणमृत्स्नयाचजलेनच एकालिंगेगुदेतिस्रस्तथावामकरेदश ६ उभयोर्हस्तयोःसप्ततिस्रस्तिस्रःपदेपदे एतद्विद्विगुणंप्रोक्तंब्रह्मचारीवनस्थयोः ७ एतच्चतुर्गुणंप्रोक्तंयतीनांहरिसेविनां तदर्धंरोगिमार्गस्थंस्त्रीशूद्राणांतदर्धकं ८ शौचकर्मविहीनस्यसकलानिष्फलाःक्रियाः मुखशुद्धिविहीनस्यमंत्रानफलदाःस्मृताः ९ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते १० इतिमंत्रंसमुच्चार्यकुर्याद्वैदंतधावनम् हरिर्हरयेतिमंत्रेणसूर्यंकृत्वाकृतांजलिः ११ प्रणमेद्धरिभक्तांश्चप्रल्हादादीन्समाहितः तुलसीमृत्तिकांनीत्वाततःस्नानंसमाचरेत् १२ पठितव्यंप्रयत्नेनश्रीगंगायमुनाष्टकं अयोध्यामथुरामायाकाशीकांचीअवंतिका १३ पुरीद्वारावतीचैवसप्तैतामोक्षदायकाः शालिग्रामोमहायोगेशंभलेहरिमंदिरे १४ नंदिग्रामेकोशलेतुत्रयोग्रामाःप्रकीर्तिताः दंडकंसैंधवारण्यंजंबूमार्गंचपुष्करं १५ उत्पलावर्तमारण्यंनैमिषंकुरुजांगलं अर्बुदंहैमवंतंचनवारण्यानिवैविदुः १६ एतानितीर्थनामानिसमुच्चार्यपुनःपुनः इत्थंस्नात्वाततोबिभ्रद्दंबरंक्षौममुत्तमम् १७ द्वादश तिलकंबिभ्रद्दष्टमुद्राधरःपरः कृतसंध्यःशुचिर्मौनीगत्वाश्रीकृष्णमंदिरं १८ घंटावाद्यंजयारावंतलशब्दंविधायच उत्तिष्ठोत्तिष्ठगोविंदयोगनिद्रांविधायच १९ उत्कापीमांस्मृतिंराजन्भक्तउत्थापयेद्धरिं मंगलार्तिसमादायभ्रामयंस्तन्मुखोपरि २० निवेद्यबहुपक्वान्नंनत्वानत्वापुनःपुनः ततः स्नानंकारयित्वादेशकालप्रभाववित् २१ शृंगारंभावविल्लकृत्वावस्त्रभूषणमंगलैः आर्तिकांतुततःकृत्वाभोग्यान्नंचविधायच २२ ततोधृत्वामहाभोगंनानारससमर्पयं राजभोगार्तिकंकृत्वाकारये

नीयंप्रयत्नतः १६ सिंहासनस्यपृष्ठेतुगोप्योगावस्तथैवच गोपालास्तत्रसोपानेकपाटेविजयोजयः १७
देहल्यांकल्पवृक्षश्चस्तंभेषुवल्लताःशुभाः यत्रतत्रचकुंडेषुश्रीगंगापापहारिणी १८ वृंदावनंगोवर्द्धनंय
मुनापुलिनानिच तथावैचीरहरणमालेख्यंरासमंडलं १९ चित्रकूटंपंचवटीलेखनीयंप्रयत्नतः रामरा
वणयोर्युद्धंजानकीहरणंविना २० दशावतारचित्राणिनरनारायणाश्रमः सप्तपुर्य्यस्त्रयोग्रामा नवारण्यं
नवोषराः २१ एवंलिखित्वाचित्राणिमंदिरंकारयेद्बुधः वंशीभावोद्यतकरंवक्रीभूतांघ्रिदक्षिणं २२
किशोराकृतिकृष्णस्यरूपसेव्यतमंस्मृतं तत्प्रतिष्ठांविधायाशुगुरुहस्तेनमंदिरे २३ भक्तःपरमयाभक्त्या
स्थापयेत्तत्परोभवेत् तत्प्रसादंचरशनाघ्राणंचतुलसीदलैः २४ अश्वमेधसहस्राणिराजसूयशतानि
च राजन्यसत्कथाकर्णेएवंसेवापरोभवेत् २५ अहर्निशंकृष्णसेवांयःकरोतिचभाववित् तंप्रेमल-
क्षणांभक्तिंविदुर्भागवतोपमं २६ अश्वमेधसहस्राणिराजसूयशतानिच राजन्श्रीकृष्णसेवायां
कलांनार्हंतिषोडशीं २७ श्रीकृष्णदेशिकस्यापिदर्शनंकृतवान्नरः कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसं
शयः २८ देहांतेतत्समानेतुंश्यामसुंदरविग्रहाः रथंनीत्वाप्रधावंतिगोलोकात्कृष्णपार्षदाः २९ इ-
तिश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडेव्यासोग्रसेनसंवादे हरिमंदिरप्रतिष्ठावर्णनंनामषष्ठोध्यायः ६
श्रीवेदव्यासउवाच ब्राह्मे मुहूर्तेचोत्थायकशिपोश्चयदानृप गुरोर्नामचगोविंदनामानिप्रवदन्मुहुः १
भूमिंनत्वान्यसेत्पादंजलंस्पृष्ट्वाहरेर्जनः उपविश्यासनेशीघ्रंसकामंयोयथासुखं २ हस्तावुत्संगआ
दायश्वासजिघ्राणमास्थितः ज्ञानमुद्राधरंशांतंश्रीगुरुंस्वस्तिकासनं ३ ध्यात्वाकृष्णंपरंध्यायेद्भ-

हनंआसनंचपाद्यमर्घंविशेषतः स्नानंचमधुपर्कंच धूपंदीपंतथैवच १२ यज्ञोपवीतंवस्त्रंचभूषणंगंधमेवच
पुष्पंतथाक्षतांश्चैवनैवेद्यंचमनोहरम् १३ आचमनंप्रदातव्यंतांबूलंदक्षिणांतथा प्रदक्षिणांप्रार्थनांचतथानीराज
नंस्मृतं १४ नमस्कारंततःकुर्यात्कर्मणांचपृथक्पृथक् आवाहनेतुपुष्पानिआसनेतुकुशद्वयं १५ पाद्येश्या-
मांचदूर्वांचविष्णुक्रांतांतथैवच सौगंधिकानिपुष्पाणिअर्घ्येयोग्यानियादव १६ चंदनोशीरकर्पूरकुंकुमागु
रुमिश्रितं एतादृशंजलंयोग्यंस्नानेराजन्महामते १७ मधुपर्कोत्थामलक मरविंदंतथामतं धूपंगंधाष्टकंदेयंदीपं
कर्पूरमेवच १८ यज्ञोपवीतंपीतत्वंवस्त्रेपीतांबरंमतं भूषणेचैवसौवर्णंगंधेकुंकुमचंदनं १९ तुलसीमंजरी-
पुष्पेक्षतेस्याच्छालितंदुलं नैवेद्येतुरसाषट्चभोगानानाविधामताः २० जलेगंगाजलयोग्यंयमुनाजलमेवच-
जातीफलंचकंकोलंमतेंआचमनेनृप २१ तांबूलेचोषणंत्वेलादक्षिणायांतुजालकं प्रदक्षिणायांभ्रमणंघृतंनी
राजनेगवां २२ प्रार्थनायांहरेर्भक्तिःप्रेमलक्षणसंयुता नमस्कारेमहाराजसाष्टांगनतविग्रहः २३ द्वादशाक्षरमं
त्रेणशिखांबध्वाशुचिःपुमान् उपचारान्पुरस्कृत्यश्रीमुखेसन्मुखोभवेत् २४ इतिश्रीमद्गर्गाचार्यसंहिता
यांविज्ञानखंडेव्यासोग्रसेनसंवादेमहापूजाविधिवर्णनंनामाष्टमोध्यायः ८ श्रीव्यासउवाच उपचारस्य
मंत्राणिवेदोक्तानिशुभानिच तुभ्यंवक्ष्यामिराजेंद्रशृणुष्वैकाग्रमानसः १ अथावाहनंगोलोकधामाधिप
तेरमापते गोविंददामोदरदीनवत्सल राधापतेमाधवसात्वतांपते सिंहासनेस्मिन्ममसन्मुखोभव २ अथा
सनं श्रीपद्मरागस्फुरदूर्द्ध्वपृष्ठं महार्हवैडूर्यखचितसदाङ्गं वैकुंठवैकुंठपतेगृहाण पीतंतडिद्धाटककुंभखंडं
३ अथपाद्यं परंस्थितंनिर्मलरौक्मपात्रे समागतंबिंदुसरोवराद्धि योगेशदेवेशजगन्निवास गृहाणपाद्यंप्र

२२९

च्छयनंहरेः २३ ततःप्रसादंपरमंतुलसीगंधमिश्रितं भुंजीतयोहरेर्नित्यंसकृतार्थोनसंशयः २४ राजभोगार्तिकं-
कृत्वाकारयेच्छयनंहरेः शंखनादेनविधिवद्भोगंधृत्वायथाविधि २५ ततःसंध्यार्तिकंकृत्वादुग्धादीन्विनिवेद्यच
ततःप्रदोषसमयेपुनरार्तिकमाचरेत् २६ धृत्वाभोगपरमिष्टंकारयेच्छयनंहरेः राजसेवैवराजेंद्रराजसेवेयम-
स्तिवे २७ सर्वश्रीकृष्णचंद्रस्यसेवासंलभमानसः तारयित्वाकुलशतंयातिचात्यंतिकंपद २८ जन्माष्टमीचकृष्ण
स्यश्रीरामनवमीतथा राधाष्टम्यन्नकूटंचद्वादशीवामनस्यच २९ चतुर्दशीनृसिंहस्यतथानंतचतुर्दशी एषुकाले
षुकृष्णस्यमहापूजांसमाचरेत् ३० इतिश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडे व्यासोग्रसेनसंवादे राजसेवा
वर्णनंनामसप्तमोध्यायः ७ व्यासउवाच अथस्नात्वाचकृत्वाचनित्यंनैत्तिकांक्रियां पंचवर्णसमायुक्ते
शुद्धेस्थंडिलमंडले १ द्वात्रिंशद्दलसंयुक्तंकर्णिकाकेसरोज्वलं विधायकमलंदिव्यंविधिवद्वेदसूक्तिभिः २ क
र्णिकायांन्यसेद्राजन्हरेःसिंहासनंशुभं तत्रराधांरमांस्थाप्यभूदेवींविरजांतथा ३ तन्मध्येस्थापयेत्साक्षाच्छ्री
कृष्णंपुरुषोत्तमं तथाष्टदलमध्येतुराधिकाष्टसखीःशुभाः ४ ततोष्टदलमध्येतुश्रीकृष्णस्यतथासखीन् त
थाषोडशपर्णेषुसखीनांचद्वयोर्द्वयोः ५ कमलस्यचपार्श्वेषुशंखचक्रगदांतथा पद्मंचनंदकंशार्ङ्गंबाणां-
श्चमुसलंहलं ६ कौस्तुभंवनमालांचश्रीवत्संनीलमंबरं पीतांबरंतथावंशींवेत्रंच स्थापयेद्बुधः ७ ततःपार्श्वे
षुतालांकंगरुडांकंरथंतथा स्रुमतिंदारुकंसूतंगरुडंकुमुदंतथा ८ चंडंचैवप्रचंडंचबलंचैवमहाबलं कुमुदा
क्षंबलंचैवस्थापयेद्यत्नतःसुधीः ९ तथादिक्षुचदिक्पालान्संस्थाप्यचपृथक्पृथक् विष्वक्सेनंशिवंमांचविधिं
दुर्गांविनायकं १० नवग्रहांश्चवरुणंतथाषोडशमातृकाः तत्पश्चाग्नेवीतिहोत्रंस्थंडिलेस्थापयेद्बुधः ११ आवा

सितं परंगृहाणाचमनंदयानिधे राधापतेश्रीविरजापतेप्रभो श्रियःपतेसर्वपतेचभूपते १७ अथतांबूलम्
जातीफलैलाकरपुष्पयुक्तं याविन्निपुंगीफलपत्रवृंदं मुक्ताफलारेवदिररोचनार्थं गृहाणतांबूलमिदंरमेश १८
अथदक्षिणा नाकपालवसुपालमौलिभिर्वंदितांघ्रियुगलंप्रभोहरेः दक्षिणांपरिगृहाणमाधव लोकदक्षव
रदक्षिणायते १९ अथप्रदक्षिणा समस्ततीर्थयज्ञदानमूर्तिकाजलंफलं लभेत्सरस्यशाश्वतीं करोतियः प्रदक्षिणां
२० अथनीराजनं प्रस्फुरत्सरमदीप्तिमंगलं गोघृताक्तनवपंचवर्तिकम् आर्तिकंपरिगृहाणचार्तिहन्पुण्यकी
र्तिविशदीकृतावने २१ अथप्रार्थना हरेमत्समःपातकीनास्तिभूमौ तथात्वत्समोनास्तिपापापहारी इतित्वंचम
त्वाजगन्नाथदेव यथेच्छाभवेत्तेतथामांकुरुत्वं २२ अथनमस्कारः नमोस्त्वनंतायसहस्रमूर्तये सहस्रपादा
क्षिशिरोरुबाहवे सहस्रनाम्नेपुरुषायशाश्वते सहस्रकोटियुगधारिणेनमः २३ अथस्तुतिः संज्ञानमात्रंसदस
त्परंमह च्छश्वत्प्रशांतंविभवंसमंमहत् त्वांब्रह्मवंदेकदुर्गमंपरं सदास्वधाम्नापरिभूयकैतवम् २४ एवंसंपूज्यदे
वेश मेभिर्मंत्रैर्महामते प्रणम्यविष्णुंसर्वांगपूजांकुर्यात्प्रयत्नतः २५ ॐनमोनारायणाय पुरुषायमहात्मने विशु
द्धसत्वधीस्थायमहाहंसायधीमहि २६ इतिमंत्रेणप्राणायामंकृत्वा ॐविष्णवेमधुसूदनाय वामनायत्रिविक्रमा
य श्रीधरायहृषीकेशाय पद्मनाभायदामोदराय संकर्षणायवासुदेवाय प्रद्युम्नायानिरुद्धायाधोक्षजायपुरुषोत्तमाय
श्रीकृष्णायनमः इतिपादगुल्फजानूरुकट्युदरपृष्ठिभुजाकंधरकर्णनासिकाधरनेत्रशिरस्सुपृथक् पृथक्पूजयामी
तिसर्वांगपूजांकुर्यात् तथासखीसखशंखचक्रगदापद्मासिधनुर्बाणहलमुसलादीन् तथाकौस्तुभवनमालाश्रीव-
त्सपीतांबरनीलांबरवंशीवेत्रादीन् तथातालांकगरुडांकरथदारुकसुमतिसारथिगरुडकुमुदनंदसुनंदचंडमहाबलकुमु

२३०

णमामिपाद्यं ४ अथस्नानं काश्मीरपाटीरविमिश्रितेनस्वमल्लिकोशीरवताजलेन स्नानंकुरुत्वंयदुनाथदेव
गोविंदगोपालकतीर्थपादः ५ अथमधुस्नानं मध्याह्नचंद्रार्कभवंसमापहं सितांगसंपर्कमनोहरंपरं गृ
हाणविष्णोमधुपर्कोमासमां संदृश्यपीतांबरसात्वतांपते ६ अथधूपं लवंगपाटीरजचूर्णमिश्रं मनुष्यदेवा
सुरसौख्यदंच सद्यःसुगंधीकृतहर्म्यदेशं द्वारावतीभूपगृहाणधूपं ७ अथदीपं तमोहारिणंज्ञानमूर्तिंम-
नोज्ञं लसद्वर्तिकर्पूरपूरंगवाज्यं जगन्नाथदेवप्रभोविश्वधूप स्फुरज्ज्योतिषंदीपमुख्यंगृहाण ८ अथयज्ञोप
वीतं सुवर्णाभमापीतवर्णंसुमंत्रैः परंप्रोक्षितंवेदविन्निर्मितंच शुभंपंचकार्येषुनैमित्तिकेषु प्रभोयज्ञयज्ञोप
वीतंग्रहाण ९ अथवस्त्रं विभोसर्वतःप्रोस्फुरत्प्रोज्ज्वलंचस्फुरद्रश्मिशून्यंपरंदुर्लभंच स्वतोनिर्मितंपद्मकिं-
जल्कवर्णंगृहाणाम्बरंदेवपीतांबराख्यं १० अथभूषणम् कनकरत्नमयंमयनिर्मितं मदनरुक्दनंसदनं
रुचाम् उषसिपूषसुवर्णविभूषणं सकललोकविभूषणगृह्यतां ११ अथगंधम् संध्येंदुशोभंबहुमंगलंश्री
काश्मीरपाटीरकपंकपृक्तम् स्वेमंडनंगन्धचयंगृहाण समस्तभूमंडलभारहारिन् १२ अथपुष्पम् मंदारसं
जातकपारिजात कल्पद्रुमश्रीहरिचंदनानाम् गृहाणपुष्पाणिहरेतुलस्यामिश्राणिसाक्षान्नवमंजरीभिः १३
अथाक्षतम् ब्रह्मावर्तेब्रह्मणापूर्वमुक्तंब्राह्मैस्तोयैःसंचितंविष्णुनाच रुद्रेणारक्षितंराक्षसेभ्यः साक्षादक्ष
न्नक्षतांस्त्वंगृहाण १४ अथनैवेद्यं रसैःशरैर्भेदविधिव्यवस्थितं रसैरसान्यंचयशोमतीकृतं गृहाणनैवेद्य-
मिदंस्वरोचिकं गव्यामृतंस्कंदरनंदनंदनं १५ अथजलं गंगोत्तरीवेगबलात्समुद्धृतं सुवर्णपात्रेणहिमांसुशीत
लं सुनिर्मलाभंत्वमृतोपमं जलंगृहाणराधावरभक्तवत्सलः १६ अथाचमनं कंकोलजातीफलपुष्पवा-

मेत्यहं भागवते प्रवर्तते ४ प्रधानकालाशयदेहजैर्गुणैः कुर्वन्विकर्माणिजनोनिबध्यते कांचेर्भकंसैकतएव
जीवनं गुणेवसर्पप्रतनोतिसोक्षिभिः ५ राजन्जगन्मोहमयंरजोमयं तमोमयंसत्वमयंतथाकचित् म
नोविलासंविकृतंचविभ्रमं विद्धाध्विदंलोलमलातचक्रवत् ६ इदंकरिष्यामिकरोम्यभूवं ममेदमस्तीति।
वेदमाब्रुवन् अहंस्रुखीदुःखयुतःस्फलद्ज्जनोलोकस्त्वहंकारविमोहितोमतः ७ उग्रसेनउवाच वद
मेक्रपयाब्रह्मन्लक्षणंपरमात्मनः कतिधाकवयःक्रुष्णंवदंतिजयवर्त्मनिः ८ सनातस्यात्रनमृत्युजन्मनी
नशोकमोहौनजरायुवादयः अहंमदोव्याधियुतोभयंसुखं शुचोक्षुधे च्छानरतिर्नचाधयः ९ आत्मानिरी
होस्यतनुःसंसर्वगो नहंकृतिः शुद्धमलोगुणाश्रयः स्वयंपरोनिष्फलआत्ममंगलो ज्ञानात्मकोयोविदितोमुनीश्वरैः
१० जागर्तियोस्मिन्शयनंगतेसति नायंजनोवेदसवेदतंहितं पश्यंत माद्यंपुरुषंहियंजने नपश्यतिस्वक्षमलंचतंभ
जे ११ यथानभोभिःपवनोनसज्जतेघटेनकाष्टेनरजोभिरावृतैः तथापुमान्सर्वगुणैश्चनिर्मलो वर्णैर्यथास्या-
त्स्फटिकोमहोज्वलः १२ व्यंगेनवालक्षणयाचवाकूपथे स्वर्थैःपदस्फोटपरायणैःपरं नज्ञायतेतत्धनिनोत्तमेनस
त् वाच्यंततोब्रह्मकुतस्तुलौकिकैः १३ वदंतिकेचिद्धुविकर्मकर्तृयत् कालंचकेचित्सरिमेवयोगतत् केचिद्धि-
चारंप्रवदन्तियच्च तद्ब्रह्मेतिवेदांतविदोवदंतिहि १४ यन्नस्पृशंतीहगुणानकालजा मायेंद्रियंचित्तमनोनबु
द्धयः महन्नवेदोवदतीतितत्परं विशंतिसर्वेनलविस्फुलिंगवत् १५ हिरण्यगर्भाःपरमात्वतत्वं यद्वासुदेवंप्र
वदंतिसंतः विचार्यतद्देववरस्वरूपं विसृज्यमोहंविचरेदसंगः १६ यथेंदुरेकोजलपात्रवृंदगो यथाग्निरेकोवि
दितःसमिद्धयेतथापरात्माभगवाननेकवित् स्वंतर्बहिःस्यात्स्फकृतेषुदेहिषु १७ सूर्योदयेसर्वतमोविलीयते

दाक्षादीन् प्रणवपूर्वेणचतुर्थ्यंतेननमः सयुक्तेननामतथाविष्वक्सेनशिवास्महिधिदुर्गाविनायकदिक्पा-
लवरुणनवग्रहमातृकादीन्मंत्रैःपूजयेत् ॐनमोवासुदेवायनमः संकर्षणायच प्रद्युम्नायानिरुद्धाय सा
त्वतांपतयेनमः इतिमंत्रेणशतमाहुतीर्जुहुयात् देवंप्रदक्षिणीकृत्यमहाभोगंनिधायच प्रणमेद्दंडवद्भूमौ
मंत्रमेतदुदीरयेत् २५ ध्येयंसदापरिभवघ्नमभीष्टदोहं तीर्थास्पदंशिवविरंचिनुतंशरण्यम् भृत्यार्तिह
प्रणतपालभवाब्धिपोतं वंदेमहापुरुषतेचरणारविंदं २६ इतिनत्वाहरिंराजन्पुनर्नीराजनंहरेः कार्यं
हि विधिवद्भक्ताहरिभक्तजनैःसह २७ घंटीवाद्यरणत्घंटाकांस्यवीणादिकीचकैः करतालमृदंगाद्यैः
कीर्तनंकारयेद्बुधः २८ नृत्यंतिश्रीहरेरग्रेभक्तावैप्रेमविह्वलाः जयध्वनिसमायुक्ताःसत्कथागानत-
त्पराः २९ पुनःप्रभुंनमस्कृत्यमंदिरेनयनोज्वले शयनंकारयेत्सम्यक् श्रीकृष्णस्यमहात्मनः ३० एवंकरो
तिश्रीकृष्णसेवायोलग्नमानसः प्रणमंतिचतंराजन्देवतास्स्वर्गसंभवाः ३१ सोपिराजेंद्रनाकेपिपदंधृत्वा
हरेर्जनाः अंतेयातिपरंधामगोलोकंयोगिदुर्लभं ३२ इतिश्रीकृष्णसेवायाविधानंवर्णितमया चतुः
पदार्थदंनृणांकिंभूयः श्रोतुमिच्छसि ३३ इतिश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडेव्यासोग्रसेनसं
वादेनवमोध्यायः ९ उग्रसेनउवाच सिद्धोस्म्यनुगृहीतोस्मित्वयाश्रीकृष्णरूपिणा श्रीकृष्णपद्ध
तिःसाक्षाच्छ्रुतावैविधिवन्मया १ अहोलोकामहामूढालोभमोहमदान्विताः नाप्नुवंतिहिवैराग्यंभजं
तिनहरिंक्वचित् २ भगवन्नस्यजगतोमोहकारणमद्भुतं कथंजातंवदविभोकथमेतन्निवर्तते ३ व्या
सउवाच यथांभसिप्रासमदोविधोस्वत स्वस्वेक्षतेकेवलमेववेगतः तथाहिबिंबःपरमस्यमायया म-

रौप्यखुरं सवत्सं ददातिखंडंप्रतिगोद्वयंसः प्राप्नोतिसर्वंहिमनोरथंसः ३२ निष्कारणोसौमृगएतेविदेह-
राट् सर्वामिमांवैमुनिगर्गसंहितां त्वत्पुंडरीकेवसतेस्थसर्वदा श्रीकृष्णचंद्रोनिजभक्तवत्सलः ३३
श्रीगर्गउवाच इत्युक्त्वातमनुज्ञाप्यनारदोदेवदर्शनः सर्वेषांपश्यतांब्रह्मन्नंबरंगतवान्मुनिः ३४ बहु-
लाश्वोमहाराजः श्रीकृष्णेलग्नमानसः सर्वतस्तुकृतार्थोभूच्छ्रुत्वेमांसंहितांहरेः ३५ तवप्रश्नोपरिब्रह्म
न्कथितासंहितामया श्रुत्वावापाठितावैकैश्चित्कोटियज्ञफलप्रदा ३६ श्रीशौनकउवाच धन्योहंत्व
कृतार्थोहंत्वत्संगेनमहामुने प्राप्नोमिपरमांभक्तिंश्रीकृष्णप्रेमवर्द्धिनीं ३७ विशदत्वद्दिमुनीनांमानसे
राजहंसः सकलसुखविराजन्नादमाधुर्य्यवंशः जगतिविचलदंशः शूरवंशावितंसः करबलहतकंसः पा
तुवः सत्प्रशंसः ३९ इत्युक्त्वातान्मुनीन्सर्वान्गर्गाचार्योमहामुनिः अनुज्ञाप्यप्रसन्नात्मागंतुमभ्युदितोभ
वत् ४० नवसर्गविसर्गाढ्यास्वर्गभृद्गर्गसंहिता चतुर्वर्गप्रदामुक्तागर्गांगर्गाचलंययौ ४१ शरदिक
चपंकजश्रियमतीवविद्वेषकं मिलिंदमुनिलेढितंकुलिशकंजचिह्नावृतम् स्फुरत्कनकनूपुरंदलितभक्ततापत्र
यं चलद्युतिपदद्वयंत्वहृदिदधामिराधापतेः ४२ इतिश्रीमद्गर्गाचार्यसंहितायांविज्ञानखंडेश्रीनारदबहु
लाश्वसंवादांतर्गतव्यासोग्रसेनसंवादेपरमब्रह्मनिरूपणंनामदशमोध्यायः १० विज्ञानखंडंसमाप्तम्
खंड ९ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२ ६२

प्रदृश्यतेवस्तुगृहेयथाजनैः ज्ञानोदयेज्ञानतमः पलायते संप्राप्यतेब्रह्मपरंतनौतथा १८ यथेंद्रियाणांचपृथ
क्प्रवर्त्तिभि र्नानेर्यतेर्थोतिगुणाश्रयःपरः एकंत्वनंतस्यपरस्यधामतत् तथामुनीनांकिलशास्त्रधर्मभिः १९
साक्षाद्धरिर्यःपुरुषोत्तमोत्तमःश्रीकृष्णचंद्रोनिजभक्तवत्सलः कैवल्यनाथोनृगमुज्जहारतं पूर्णंस्वयंब्रह्मपरंननता
म्यहं २० श्रीनारदउवाच इत्युक्त्वातमनुज्ञाप्यभगवान्बादरायणः पश्यतांयादवानांचतत्रैवांतरधीयत २१
इदंमयातेकथितंहरिभक्तिविवर्द्धनं विज्ञानखंडविशदं श्रोतॄणांमोक्षदंस्मृतं २२ गर्गाचार्येणकथिता ना
म्नेयंगर्गसंहिता सर्वदोषहरापुण्याचतुर्वर्गफलप्रदा २३ गोलोकवृंदावनयोर्गिरीश्वर माधुर्ययोःश्रीमथुरापु
र्यच द्वारावतीविश्वजितोर्हलायुधविज्ञानयोःखंडचयाः पृथक्नव २४ श्रीकृष्णमूर्तेः परमैरसैर्यथा य
थास्यभूमिर्भरसादिभिर्भृशं तथाहिशश्वन्मुनिगर्गसंहिता विभातिखंडैर्नवभिर्नृपेश्वर २५ यथाहिरत्नैर्नव
भिर्विराजते देवांगुलीलसत्सुवर्णमुद्रिका यथाचतुर्वर्गफलप्रदेविधौ सर्गैर्विसर्गैर्मुनिगर्ग संहिता २६ नरेंद्रश
श्वन्मुनिसंहितायया नवाहयज्ञेनजनाःपुनीताः इहैवसौख्यंपरमाप्नुवंत स्ततस्तुगोलोकपुरंप्रयाति २७
कृत्वाथपादांवरबंधनंत्विमां शृणोतिवंध्याबहुलालसाभृशं कुस्वेनकालेनगृहांगणेशिशून् संचारयंतीवि
चरत्यहर्निशं २८ रोगीपुमान्रोगगणात्प्रमुच्यते भीतोभयाद्बंधनतश्चबंधनात् श्रुत्वाकथांनिर्धनएति
वैभवंमूर्खोभवेत्पंडितएवसत्वरं २९ यःकार्तिकेमासिनृपःश्रियायुः शृणोतिशश्वन्मुनिगर्गसंहितां सच-
क्रवर्तीभवितानसंशयो नरेंद्रहस्त्युन्नत पादुपादुकः ३० मनोजवैःसिंधुतरंगमैर्नवैर्द्विपैश्चविंध्याचलसं-
भवैःपरैः वैतालिकोद्गीतयशोमहीतले निषेवितोवारवधूजनैःसह ३१ सुवर्णशृंगांबरताम्रपृष्ठं पटांबरं

इमं ग्रंथं श्रीकृष्णगुप्त तनयौ गंगाविष्णु खे-
मराज गुप्तौ जगदीश्वराख्यांकन यंत्रालये शिला-
क्षरैर्मुद्रयांचक्रतुः अंकनसमाप्तिस्तु शैलगुणांक
कुमिते १९३७ वैक्रमाब्दे माघकृष्ण दशम्या-
मभूत्.

